आनन्दाश्रमसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ४२

पदपाठयुता

# कृष्णयजुर्वेदीयतैत्तिरीयसंहिता ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेता ।

( तत्र द्वितीयकाण्डगतप्रपाठकचतुष्टयं पञ्चमप्रपाठकस्यैका-
दशानुवाकाश्चेत्येवंरूपश्चतुर्थो भागः ( ४ ) )

एतत्पुस्तकम्

वे० शा० रा० रा० "काशीनाथ शास्त्री आगाशे" इत्येतैः
संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

॥ ६ ॥

पुण्याख्यपत्तने ... कृतिः ।

अर्थैकत्वेन वाक्यैक्यं तेन स्याद्यजुरन्तधीः ॥ ७ ॥
संनिधावनुषङ्गः स्यादर्थाहृतिरसंनिधौ ।
मन्त्रादन्यद्ब्राह्मणं स्याद्विधिवादद्वयात्मकम् ॥ ८ ॥
समभिव्याहृते ( त )धर्मे ( र्मं )शक्तिको बोधको विधिः ।
उपवीतादिवल्लोके ह्यपूर्वार्थो विधीयते ॥ ९ ॥
हिशब्दादित्यागतो वै विधिस्तु(स्तू)परिधारणे ।
न विधिर्मन्त्रगाख्याते याभिर्यजत इत्यतः ॥ १० ॥
वायुर्वा इति वादोऽयं मानं धर्मे विधिर्यतः ।
ऊर्जोऽवरुद्ध्या इत्येषा स्तुतिः स्यान्न फले विधिः ॥ ११ ॥

---

१ क. घ. च. ॰तीर्थं म॰ । २ च. ॰दका । सा॰ । ३ ख. च ॰ख्यातो या॰ । ४ क. घ. ङ. च. इत्यद. । ५ ख. च. विधीयते ।

अथ सभाष्यसपदपाठकृष्णयजुर्वेदीयतैत्तिरीयसंहितायां

# द्वितीयं काण्डम् ।

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः । )

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
व्याख्यातं प्रथमं काण्डं मूलप्रकृतिबोधकम् ।
विकृतेर्बोधकं काण्डं द्वितीयं व्याकरोम्यथ ॥ २ ॥
वेदैकमेयता धर्मब्रह्मणोर्वेदमानता ।
अपौरुषेयता वेदे मन्त्रब्राह्मणरूपिणि ॥ ३ ॥
समाख्यया याज्ञिकानां मन्त्रत्वमवसीयते ।
ऋचः पादयुता मन्त्रा यजुः प्रश्लिष्टपादकम् ॥ ४ ॥
साम गीत्यात्मका मन्त्राः प्रयोगे स्वार्थबोधकाः ।
लोके पदपदार्थौ यौ वेदे तावेव गोचरौ ॥ ५ ॥
मानं व्याकरणं तत्तदर्थादेर्लोकवद्भवेत् ।
अनध्यायेऽपि मन्त्रोक्तिः प्रयोगे कर्मणां भवेत् ॥ ६ ॥
नात्रापि ब्राह्मणस्थस्य मन्त्रान्ते कर्मणः कृतिः ।
अर्थैकत्वेन वाक्यैक्यं तेन स्याद्यजुरन्तधीः ॥ ७ ॥
संनिधावनुषङ्गः स्यादर्थाहृतिरसंनिधौ ।
मन्त्रादन्यद्ब्राह्मणं स्याद्विधिवादद्वयात्मकम् ॥ ८ ॥
समभिव्याहृते ( त )धर्मे ( र्म )शक्तिको बोधको विधिः ।
उपवीतादिवल्लोके ह्यपूर्वार्थो विधीयते ॥ ९ ॥
हिशब्दादित्यागतो वै विधिस्तु(स्तू)परिधारणे ।
न विधिर्मन्त्रगाख्यातैः याभिर्यजत ईत्यतः ॥ १० ॥
वायुर्वा इति वादोऽयं मानं धर्मे विधिर्यतः ।
ऊर्जोऽवरुद्ध्या इत्येषा स्तुतिः स्यान्न फले विधिः ॥ ११ ॥

---

१ क. घ. च. °तीर्थं म° । २ च. °दका. । सा° । ३ ख. च °ख्यातो या° । ४ क. घ. ङ. ।. इत्यद । ५ ख च विधियिते ।

तेन ब्रह्मेति प्रोक्ता स्तुतिर्न त्वत्र हेतुगीः[1] ।
सर्वसाधारणा ह्यर्थाः पूर्वकाण्डे विचारिताः ॥ १२ ॥
इष्टिसोमपशुष्वेव विकृतिष्वपि कासुचित् ।
तत्तद्वाक्यान्युदाहृत्य बहवोऽर्था विचारिताः ॥ १३ ॥
आद्यकाण्डस्य भाष्येण व्युत्पन्नः पुरुषोऽखिले[2] ।
अनायासेन वेदेऽस्मिन्नर्थं बोद्धुमतिप्रभुः ॥ १४ ॥

तत्र वेदस्य पूर्वकाण्डे प्रतिपाद्यं कर्म द्विविधं प्रकृतिर्विकृतिश्चेति । प्रकृष्टसर्वाङ्गोपदेशो यत्र क्रियते सा प्रकृतिः । विशेषमात्रोपदेशो यत्र क्रियतेऽवशिष्टं तु प्रकृतेरतिदिश्यते सा विकृतिः । यथा शाब्दिका[3] वेदशब्द एव सर्वां प्रक्रियामुपदिश्य घटपटादिशब्देषु तामतिदिशन्ति विशेषमेव सर्वादिषूपदिशन्ति तद्वत् । तत्र प्रकृतिर्द्विविधा मूलप्रकृतिरवान्तरप्रकृतिश्चेति । अग्निहोत्रमिष्टिः सोमश्चेति तिस्रो मूलप्रकृतयः । तासु कस्याप्यङ्गस्यान्यतोऽतिदिष्टस्याभावात् । अग्न्याधानेष्टकोपधानयोरन्यतोऽतिदेशो नास्तीति चेत्तर्हि तादृशं सर्वमग्निहोत्रादिभिरुपलक्षणीयम् । अथ वा वह्निसंस्कारमात्रतया कर्मत्वानादरेण मूलप्रकृतिष्वनुपन्यासः । अग्निहोत्रं नाम प्रतिदिनं सायं प्रातश्च क्षीराज्यादिद्रव्येण होतव्यं कर्म । तद्विकृतिः कौण्डपायिनामयनगतं मासाग्निहोत्रम् । इष्टिर्नाम पुरोडाशादिद्रव्येण पक्षे पक्षे निष्पाद्यं दर्शपूर्णमासाख्यं कर्म । तद्विकृतिरैन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम इत्यादिकाम्येष्टयः । सोमो नाम प्रतिवसन्तमनुष्ठेयं सोमलतारूपद्रव्येण निष्पाद्यमग्निष्टोमाख्यं कर्म । तस्य साक्षाद्विकृतिर्विश्वजिदाद्येकाहः( ह )परम्परया सहस्रसंवत्सरसत्रपर्यन्तः कर्मसंघः । यद्यप्यग्नीषोमीयपशुरुक्तेभ्य इष्ट्यग्निहोत्रसोमेभ्यो विलक्षणस्तथाऽपि नासौ काचिन्मूलप्रकृतिः । अस्मिन्पशावीष्टिधर्माणां प्रयाजादीनामतिदेशेन तस्येष्टिविकृतित्वात् । तस्य विकृतिरूपत्वेऽपि तदीयधर्माणामुपाकरणनियोजनादीनां सवनीयादिपशुष्वतिदेशात्प्रकृतित्वमप्यस्ति । ततो ह्यात्मकत्वादवान्तरप्रकृतिरित्युच्यते । सहस्रसंवत्सरसत्रगतधर्माणामन्यत्रातिदेशाभावेन तस्मिन्सत्रे द्विविधस्यापि प्रकृतित्वस्याभावात्केवलविकृतित्वम् । गृहमेधीयेष्टिरूपसद्धोम इत्यादेरप्रकृतिविकृतित्वादपूर्वकर्मत्वम् । न ह्यन्यदीयस्य धर्मस्य तस्मिन्वा तदीयस्यान्यस्मिन्वा कश्चिदतिदेशोऽस्ति । तस्मात्प्रकृतिर्विकृतिरुभयात्मकमनुभयात्मकं चेति चतुर्विधं कर्म संपन्नम् । तेषु चतुर्विधेषु कर्मसु संहिताग्रन्थस्य

१ च हेतुता । २ क घ ङ खिलम् । अ । ३ ख का वृक्षश ।

( ऐश्वर्यादिकामिना तत्तत्पशुविधानम् )

प्रथमकाण्डे प्रपाठकचतुष्टयेन मूलप्रकृतिरूपाविष्टिसोमौ वर्णितौ । सोमस्याङ्गत्वेनावान्तरप्रकृतिरूपोऽग्नीषोमीयोऽपि वर्णितः । प्रकृति प्राधान्येन प्रतिपाद्य विकृतिव्युत्पत्तये पुनराधेयवाजपेयादयः काश्चिद्विकृतयो वर्णिताः । अथ द्वितीयकाण्डे प्राधान्येन विकृतयो वर्ण्यन्ते । यद्यप्यत्र पञ्चमषष्ठप्रपाठकयोर्दर्शपूर्णमासब्राह्मणमाम्नातं तथाऽपि प्रपाठकचतुष्टये विकृतीनामेव ह्यभिधानात्काण्डस्य विकृतिप्राधान्यमविरुद्धम् । तास्वपि विकृतिषु यद्यप्युक्तरीत्या काम्येष्टीनां मूलप्रकृतिप्रत्यासत्त्या ता एव प्रथमं वर्णनीयास्तथाऽपि तासु बहुवक्तव्यसद्भावात्सूचिकटाहन्यायेन प्रथमं ता उपेक्ष्यावान्तरप्रकृतेरग्नीषोमीयपशोर्विकृतयो वायव्यादिकाम्यपशवोऽल्पवक्तव्यतया प्रथमप्रपाठके वर्ण्यन्ते । तेषां च प्रत्येकं स्वतन्त्रत्वेन दर्शपूर्णमासाङ्गसमूहवदेककर्तृकत्वाभावान्नास्ति क्रमनियमः । अतोऽनुवाकार्थानामनुष्ठानस्याऽऽनुपूर्विकनियमस्य कस्यचिदभावादध्ययनसंप्रदायेनैव तन्नियम इति नात्रानुवाकार्थः पृथगुपन्यस्यते ॥

( इति भाष्यकारोपोद्घातः । )

( अथ कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयोऽष्टकः । )

---

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

वायव्यं श्वेतमा लभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोप धावति स एवैनं भूतिं गमयति भवत्येवातिक्षिप्रा देवतेत्याहुः सैनमीश्वरा प्रदह इत्येतमेव सन्तं वायवे नियुत्वत आ लभेत नियुद्वा अस्य धृतिर्धृत एव भूतिमुपैत्यप्रदाहाय भवत्येव ( १ ) वायवे नियुत्वत आ लभेत ग्रामकामो वायुर्वा इमाः प्रजा नस्योता नेनीयते वायु-

---

१ क घ. ङ °त्व ।

मेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै प्रजा नस्योता नि यच्छति ग्राम्येव भवति नियुत्वते भवति ध्रुवा एवास्मा अनपगाः करोति वायवे नियुत्वत आ लभेत प्रजाकामः प्राणो वै वायुरपानो नियुत्प्राणापानौ खलु वा एतस्य प्रजायाः ( २ ) अप क्रामतो योऽलं प्रजायै सन्प्रजां न विन्दते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै प्राणापानाभ्यां प्रजां प्र जनयति विन्दते प्रजां वायवे नियुत्वत आ लभेत ज्योगामयावी प्राणो वै वायुरपानो नियुत्प्राणापानौ खलु वा एतस्मादप क्रामतो यस्य ज्योगामयति वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप ( ३ ) धावति स एवास्मिन्प्राणापानौ दधात्युत यदीतासुर्भवति जीवत्येव प्रजापतिर्वा इदमेक आसीत्सोऽकामयत प्रजाः पशून्त्सृजेयेति स आत्मनो वपामुदक्खिदत्तामग्नौ प्रागृह्णात्ततोऽजस्तूपरः समभवत्तꣳ स्वायै देवताया आऽलभत ततो वै स प्रजाः पशूनसृजत यः प्रजाकामः ( ४ ) पशुकामः स्यात्स

एतं प्राजापत्यमजं तूपरमा लंभेत प्रजापतिमेव स्वेनं भागधेयेनोप धावति स एवास्मै प्रजां पशून्प्र जनयति यच्छ्मश्रुणस्तत्पुरुषाणाꣳ रूपं यत्तूपरस्तदश्वानां यदन्यतोदन्तद्गवां यदव्या इव शफास्तदवीनां यदजस्तदजानामेतावन्तो वै ग्राम्याः पशवस्तान् ( ५ ) रूपेणैवाव रुन्धे सोमापौष्णं त्रैतमा लंभेत पशुकामो द्वौ वा अजायै स्तनौ नानैव द्वावभि जायेते ऊर्जं पुष्टिं तृतीयः सोमापूषणावेव स्वेनं भागधेये-नोप धावति तावेवास्मै पशून्प्र जनयतः सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून्प्र जनयत्यौ-दुम्बरो यूपो भवत्यूर्गा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनव रुन्धे ( ६ ) ॥

( अप्रदाहाय भवत्येव प्रजायां आमयति वायुमेव नियुत्वन्तꣳ स्वेनं भागधेयेनोप प्रजाकामस्तान्यूपस्त्रयोदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( ऐश्वर्यादिकामिनां तत्तत्पशुविधानम् )

( अथ कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयोऽष्टकः । )

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः । )

हरिः ॐ ।

वायव्यम् । श्वेतम् । एति । लभेत । भूतिकाम इति भूति—कामः । वायुः । वै । क्षेपिष्ठा । देवता । वायुम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । एनम् । भूतिम् । गमयति । भवति । एव । अतिक्षिप्रेत्यति—क्षिप्रा । देवता । इति । आहुः । सा । एनम् । ईश्वग । प्रदह इति प्र—दहः । इति । एतम् । एव । सन्तम् । वायवे । नियुत्वत इति नि—युत्वते । एति । लभेत । नियुदिति नि—युत् । वै । अस्य । धृतिः । धृतः । एव । भूतिम् । उपेति । एति । अप्रदाहायेत्यप्र—दाहाय । भवति । एव ( १ ) । वायवे । नियुत्वत इति नि—युत्वते । एति । लभेत । ग्रामकाम इति ग्राम—कामः । वायुः । वै । इमाः । प्रजा इति प्र—जाः । नस्योता इति नसि—ओताः । नेनीयते । वायुम् । एव । नियुत्वन्तमिति नि—युत्वन्तम् । स्वेन । भाग-धेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मै । प्रजा इति प्र—जाः । नस्योता इति

( ऐश्वर्यादिकं विना तत्तत्पशुविधानम् )

नमि—ओताः । नीति । यच्छति । ग्रामी । एव । भवति । नियुत्वत इति नि—युत्वते । भवति । ध्रुवाः । एव । अस्मै । अनपगा इत्यनप—गाः । करोति । वायवे । नियुत्वत इति नि—युत्वते । एति । लभेत । प्रजाकाम इति प्रजा—कामः । प्राण इति प्र—अनः । वै । वायुः । अपान इत्यप—अनः । नियुदिति नि—युत् । प्राणापानाविति प्राण—अपानौ । खलु । वै । एतस्य । प्रजाया इति प्र—जायाः ( २ ) । अपेति । क्रामतः । यः । अलम् । प्रजाया इति प्र—जायै । सन् । प्रजामिति प्र—जाम् । न । विन्दते । वायुम् । एव । नियुत्वन्तमिति नि—युत्वन्तम् । स्वेन । भाग-धेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मै । प्राणापानाभ्यामिति प्राण—अपाना-भ्याम् । प्रजामिति प्र—जाम् । प्रति । जनयति । विन्दते । प्रजामिति प्र—जाम् । वायवे । नियु-त्वत इति नि—युत्वते । एति । लभेत । ज्योगा-मयावीति ज्योक्—आमयावी । प्राण इति प्र—अनः । वै । वायुः । अपान इत्यप—अनः । नियु-दिति नि—युत् । प्राणापानाविति प्राण—अपानौ । खलु । वै । एतस्मात् । अपेति । क्रामतः । यस्य ।

ज्योक् । आमयति । वायुम् । एव । नियुत्वन्तमिति नि—युत्वन्तम् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति ( ३ ) । धावति । सः । एव । अस्मिन् । प्राणापानाविति प्राण—अपानौ । दधाति । उत । यदि । इतासुरितीत—असुः । भवति । जीवति । एव । प्रजापतिरिति प्रजा—पतिः । वै । इदम् । एकः । आसीत् । सः । अकामयत । प्रजा इति प्र—जाः । पशून् । सृजेय । इति । सः । आत्मनः । वपाम् । उदिति । अक्खिदत् । ताम् । अग्नौ । प्रेति । अगृह्णात् । ततः । अजः । तूपरः । समिति । अभवत् । तम् । स्वायै । देवतायै । एति । अलभत । ततः । वै । सः । प्रजा इति प्र—जाः । पशून् । असृजत । यः । प्रजाकाम इति प्रजा—कामः ( ४ ) । पशुकाम इति पशु—कामः । स्यात् । सः । एतम् । प्राजापत्यमिति प्राजा—पत्यम् । अजम् । तूपरम् । एति । लभेत । प्रजापतिमिति प्रजा—पतिम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मै । प्रजामिति प्र—जाम् । पशून् । प्रेति । जनयति । यत् । श्मश्रुणः । तत् । पुरुषाणाम् ।

रूपम्। यत्। तूपरः। तत्। अश्वानाम्। यत्। अन्यतोदन्नित्यन्यतः—दन्। तत्। गवाम्। यत्। अव्याः। इव। शफाः। तत्। अवीनाम्। यत्। अजः। तत्। अजानाम्। एतावन्तः। वै। ग्राम्याः। पशवः। तान् (५)। रूपेण। एव। अवेति। रुन्धे। सोमापौष्णमिति सोमा—पौष्णम्। त्रेतम्। एति। लभेत। पशुकाम इति पशु—कामः। द्वौ। वै। अजायै। स्तनौ। नाना। एव। द्वौ। अभीति। जायेते इति। ऊर्जम्। पुष्टिम्। तृतीयः। सोमापूषणाविति सोमा—पूषणौ। एव। स्वेन। भागधेयेनेति भाग—धेयेन। उपेति। धावति। तौ। एव। अस्मै। पशून्। प्रेति। जनयतः। सोमः। वै। रेतोधा इति रेतः—धाः। पूषा। पशूनाम्। प्रजनयितेति प्र—जनयिता। सोमः। एव। अस्मै। रेतः। दधाति। पूषा। पशून्। प्रेति। जनयति। औदुम्बरः। यूपः। भवति। ऊर्क्। वै। उदुम्बरः। ऊर्क्। पशवः। ऊर्जा। एव। अस्मै। ऊर्जम्। पशून्। अवेति। रुन्धे (६)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः॥ १॥

तत्र च प्रथमानुवाकस्याऽऽदावैश्वर्यकामिनः पशुं विधत्ते—

वायव्यꣳ श्वेतमा लभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोप धावति स एवैनं भूतिं गमयति भवत्येव, इति।

वायुर्देवता यस्य पशोः सोऽयं वायव्यः । स च श्वेतवर्णः । तमालभेत संस्पृशेत्, बर्हिःप्लक्षशाखाभ्यां यागार्थमुपाकुर्यादित्यर्थः। यद्यप्यत्र यजेतेति न श्रूयते तथाऽपि द्रव्यदेवतात्मकस्य यागरूपस्य श्रयमाणत्वादन्यथाऽनुपपत्त्या वायव्येन यजेतेत्येवं यागः कल्पनीयः । न च सत्सु महस्रसंख्याकेषु देवेषु कुतो वायुरेवापेक्ष्यत इति शङ्कनीयम् । वायोरतिशयेन क्षिप्रगामिदेवत्वात्। श्वेतपशुस्वतिप्रियत्वाद्वायोः स्वकीयो भागः । स्वार्थे धेयप्रत्ययः । यद्वा वर्णव्यत्ययेन दातव्यत्वमुच्यते । तेन च भागधेयेनासाधारणेन वायुमेवोपधावति समीपं प्राप्नोति सेवत इत्यर्थः। इतरदेवानामस्मिन्पशावत्यन्तप्रियत्वाभावाद्वायुमेवेत्यवधार्यते। यद्वा यजमानस्यानादरव्यावृत्त्यर्थमुपधावत्येवेति योज्यम् । तेन तुष्टः स वायुरेवैनं यजमानमैश्वर्यं गमयति पूर्ववद्गमयत्येवेति योज्यम् । तदनुग्रहादयं भवत्येवैश्वर्यं प्राप्नोत्येव ॥

विशेषं विधत्ते—

अतिक्षिप्रा देवतेत्याहुः सैनमीश्वरा प्रदह इत्येतमेव सन्तं वायवे नियुत्वत आ लभेत नियुद्वा अस्य धृतिर्धृत एव भूतिमुपैत्यप्रदाहाय भवत्येव, इति।

अत्राभिज्ञाः पूर्वोक्तविशेषेण वायुदेवताऽत्यन्तं क्षिप्रकारिणीत्येतद्गुणदोषाभिज्ञाः सन्तः प्रथममाहुः । सा चोग्रा देवतैनं यजमानं प्रदहः प्रदग्धुमीश्वरा समर्थेति चाभिप्रायं प्रकटयन्ति । वायौ क्षिप्रं वाति सति जाज्वल्यमानोऽग्निर्गृहान्दहल्लोके दृश्यते। अतोऽग्निद्वारा वायोर्दाहकत्वम् । तत्परिहर्तुं नियुद्विशेषणयुक्ताय वायवे पशुमालभेत । नितरां युता रथे मिश्रिता इति नियुतो वायोरश्वास्तेऽस्य सन्तीति नियुत्वान्। अत एव तदीययाज्यानुवाक्याप्रतिपादके पीवोऽन्नाꣳ रयिवृध इत्यस्मिन्सूक्ते शतसहस्रसंख्याकाभिरश्वजातिभिर्वायोर्गमनमाम्नायते—" आ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुप याहि यज्ञम्। वायो अस्मिन्हविषि मादयस्व " इति। येय नियुत्संज्ञकाऽश्व-

१ ख. च. °त्र यागविधिन श्रू°।

जातिः सैवास्य वायोर्धृतिर्धारयित्री। नहि वाहनेषु अश्वेषु शनैर्गच्छत्सु वायुः क्षिप्रं गन्तुं शक्नोति। तेन नियुदेवास्य धृतिर्धारणमतो नियुत्वतो वायोर्हविष्प्रदानेन यजमानोऽपि धृत एवाविनष्ट एव स्वैश्वर्यं प्राप्नोति। तच्चैश्वर्यमप्रदाहाय भवत्येव। नियुत्वतो वायोरनुग्रहेण धैर्ययुक्तस्य यजमानस्य स्वकीयान्पुरुषान्नियन्तुं स्वकीयद्रव्यमविनाशेन पालयितुं च समर्थत्वान्मनःसंतापरूपः प्रदाहः सर्वथा न भवत्येव॥

तमेव पशुं फलान्तराय विधत्ते—

> वायवे नियुत्वत आ लभेत ग्रामकामो वायुर्वा इमाः प्रजा नस्योता नेनीयते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै प्रजा नस्योता नि यच्छति ग्राम्येव भवति, इति।

नासिकायामोता नस्योताः। यथा लोके बलीवर्दा नासिकाछिद्रे रज्जुबन्धने सति सुखेन नीयन्ते तद्वत्सर्वाः प्रजा ग्रामवासिनीरधीनाः कृत्वा वायुस्तत्र तत्र भृशं नयति। स च वायुः पशुना तुष्टः सर्वाः प्रजा यजमानाधीनाः करोति। स्वाधीनप्रजो यजमानो ग्रामस्वामी भवत्येव॥

देवतागुणं प्रशंसति—

> नियुत्वते भवति ध्रुवा एवास्मा अनपगाः करोति, इति।

नियुत्वद्गुणयुक्ताय पशुर्भवतीति यत्तेन ग्रामस्थाः सर्वाः प्रजा अस्मिन्यजमाने ध्रुवा अनुरक्ताः करोति न तु ताः कदाचिदप्यपरक्ता भवन्ति॥

पुनरपि फलान्तराय विधत्ते—

> वायवे नियुत्वत आ लभेत प्रजाकामः प्राणो वै वायुरपानो नियुत्प्राणापानौ खलु वा एतस्य प्रजाया अप क्रामतो योऽलं प्रजायै सन्प्रजां न विन्दते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै प्राणापानाभ्यां प्रजां प्र जनयति विन्दते प्रजाम्, इति।

प्रकर्षेणानिति मुखबिलाद्बहिश्चेष्टत इति प्राणः। वायुश्च तथाविधः। अपकर्षेण मुखादधस्तादुदरस्यान्तरानिति चेष्टत इत्यपानः। नियुच्छब्दो नितरां यौति मिश्री भवतीति व्युत्पत्त्या तथाविधमर्थमाचष्टे। यः पुरुषः प्रजार्थमलं सन्ननुकूलस्त्रीयुक्तः सन्युवा च सन्नपत्यं न लभते एतस्य पुरुषस्य प्रजायाः सकाशात्प्राणापानावपक्रान्तौ भवतः। अपत्यलाभाभावेन पुरुषेण गर्भाशये निषिक्ते रेतसि नियुत्वतो वायोरनुग्रहाभावात्प्राणापानयुक्तं जीवान्तरं न प्रविशति। एतदेवाभिप्रेत्यैतरेयोपनिषदि श्रूयते—"न ह वा ऋते प्राणाद्रेतः सिच्यते यद्वा ऋते प्राणाद्रेतः सिच्यते पूयेन्न संभवेत्" इति। नियुत्वान्वायुर्भागधेयेन तुष्टो यजमानार्थं तदीयरेतसि प्राणापानाभ्यां युक्तं जीवं प्रवेश्य प्रजाः प्रजनयति। ततो यजमानः पुत्रं लभते॥

पुनरपि फलान्तराय विधत्ते—

वायवे नियुत्वत आ लभेत ज्योगामयावी प्राणो वै वायुरपानो नियुत्प्राणापानौ खलु वा एतस्मादप क्रामतो यस्य ज्योगामयति वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्प्राणापानौ दधात्युत यदीतासुर्भवति जीवत्येव, इति।

ज्योगामयावी दीर्घरोगयुक्तः। यस्य ज्योगामयति यं पुरुषं चिरमामयो बाधत एतस्मात्प्राणापानावतिक्रान्तुमुद्युक्तौ। अस्मिन्प्राणापानौ दधाति चिरं स्थापयति। अपि च यदि कथंचिद्भूमौ शयानो रुग्णो मुहूर्तमात्रं याममात्रं वा परेतो भवेत्तथाऽपि वायोरनुग्रहादागतप्राणो जीवत्येव॥

कर्मान्तरं विधातुं प्रस्तौति—

प्रजापतिर्वा इदमेक आसीत्सोऽकामयत प्रजाः पशून्त्सृजेयेति स आत्मनो वपामुदक्खिदत्तामग्नौ प्रागृह्णात्ततोऽजस्तूपरः समभवत्तꣳ स्वायै देवताया आऽलभत ततो वै स प्रजाः पशूनसृजत, इति।

१ क. घ. ङ. 'भायामेन। २ ख. पूयेयं'।

( ऐश्वर्यादिकामिना तत्तत्पशुविधानम् )

यदिदं प्रजापशुरूपं जगदिदानीं दृश्यते तदिदं सृष्टेः पूर्वं प्रजापतिरेक आसीत्प्रजापतिरेव स्थितो नान्यत्किंचिदित्यर्थः । स च प्रजापशुसृष्टिकामस्तत्साधनत्वेन स्वशरीरादुदरमध्यवर्तिनीं पश्यदृशी वपामुदक्खिददुत्खिद्योद्धृतवान् । तां च वपामग्नौ प्रक्षिप्तवान् । ततो दग्धाया वपाया अजस्तूपरः शृङ्गरहितः समुत्पन्नः । तं चाजं स्वात्मरूपां देवतामुद्दिश्याऽऽलभत । तत्कर्मसामर्थ्यात्प्रजाः पशूनसृजत । ननु स्वयमेव स्ववपामुत्खिद्याजं तत उत्पाद्य तं च स्वार्थमालभ्य जगत्सर्वमप्यसृजतेति महदेवैतदिन्द्रजालम् । बाढमिन्द्रजालमेवैतत् । अत एवान्यत्राऽऽम्नातम्—" इन्द्रो मायाभिः पुरुरूप ईयते " इति । " मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् " इति । न खल्विन्द्रजालविषये विस्मतुं च भवानपीच्छति । यदा तु लौकिकेऽपीन्द्रजाले न काऽप्यनुपपत्तिस्तदानीमचिन्त्यमहिम्नि सर्ववेदसिद्धे परमेश्वरे का नाम तवानुपपत्तिः । अन्यथा क वीर्यं क वा पुरुषः क बीजं क वा वृक्ष इत्यादिकं भवानुपपादकं मन्यः कथं युक्तिभिरुपपादयति । संकल्पसिद्धे जगदीश्वरे को नाम विस्मय इति चेत्तर्ह्यनेनप्रकारेऽपि न विस्मयः । संकल्पसिद्धस्य किमेतावता प्रयासेनेति चेत् । नानाविधभोगस्तृप्तस्य राजादेः किं द्यूतमृगयादिप्रयासेनेति त्वया वक्तव्यम् । लीलेति चेत् । तदत्राप्यनुसंधेहि ।

तथा च श्रुतिः—

" भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे " इति ।

विष्णुपुराणेऽपि—

" क्रीडतो बालकस्येव चेष्टां तस्य निशामय " इति ।

व्यासस्रूत्रमपि—" लोकवत्तु लीलाकैवल्यम् " इति । अलमतिप्रसङ्गेन ॥

विधत्ते—

यः प्रजाकामः पशुकामः स्यात्स एतं प्राजापत्यमज तूपरमा लभेत प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मै प्रजां पशून्प्र जनयति, इति ॥

पशुं प्रशंसति—

यच्छ्मश्रुणस्तत्पुरुषाणाᳪ रूपं यत्तूपरस्तद-

१ च. °तु । मल, ना° ।

श्वानां यदन्यतोदन्तद्गवां यदव्या इव शफा-
स्तदवीनां यदजस्तदजानामेतावन्तो वै
ग्राम्याः पशवस्तान्रूपेणैवाव रुन्धे , इति।

पुंस्पशावजे श्मश्रूणि विद्यन्ते। तूपरत्वं सर्वेष्वजेष्वभावेऽपि प्रकृते विद्यते। अन्यतोऽध एव दन्ता इत्यन्यतोदन्नन्यतोदत्त्वम् । अविखुरसदृशाः शफा दृश्यन्त एव। अजत्वजातिश्चास्ति। तस्मात्पुरुषादिरूपत्वम्। यद्यपि ग्राम्येषु पशुषु गर्दभोष्ट्रावपि सप्तसंख्यासिद्ध्यै तत्र तत्र गृह्येते तथाऽपि पुरुषादयः पञ्चैव प्रशस्ता विप्रराजादिभिरत्यन्तसादृतत्वात्। अत एव तदीयेन रूपेण सर्वरूपसदृशेन तान्पुरुषादीन्सर्वानधीनान्करोति ॥

पश्वन्तरं विधत्ते—

सोमापौष्णं त्रैतमा लभेत पशुकामो द्वौ वा
अजायै स्तनौ नानैव द्वावभि जायेते ऊर्जे
पुष्टिं तृतीयः सोमापूषणावेव स्वेन भागधेये-
नोप धावति तावेवास्मै पशून्प्र जनयतः सोमो
वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै
रेतो दधाति पूषा पशून्प्र जनयति , इति।

त्रयाणां वत्सानां युगपज्जातानां समुदायस्त्रितं तत्र भवस्त्रैतस्तेषामन्यतम इत्यर्थः। त्रयाणामुत्पत्तौ प्रयोजनमुच्यते-मुच्यते, अजायास्तावद्द्वौ स्तनौ प्रसिद्धौ, तौ नानैव पृथगेव पातुं द्वौ वत्सौ जायेते । मातृरूपायामजायां येयमूर्ग्रसः सारं या च शरीरगता पुष्टिस्तदुभयं व्यापयितुं तृतीयो वत्स उत्पन्नः। द्वावेव हि सर्वत्र जायेते, तृतीयस्तु क्वचिदेव। तथा सति यस्यां तृतीयो जातस्तस्याः शरीरे वीर्याधिक्यं पुष्ट्याधिक्यं चास्तीति लक्षयितुं शक्यते। किं बहुना त्रैतः प्रशस्त इति द्रष्टव्यम्। गर्भाशये रेतो यथा न स्रवति तथा सोमो धारयति। पूषा भूमिरूपत्वात्स्वकीयौषधिरसेन पोषयित्वा प्रजनयति ॥

चोदकप्राप्तं खादिरं बाधितुं विधत्ते—

औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव
ऊर्जैवास्मा ऊर्जं पशूनव रुन्धे ॥ , इति ॥

१ ख 'दत्त्व'। २ ख. 'तपु'। ३ ख. 'मूर्क्पय. सा'।

फलाना यथा बहुत्वादुदुम्बरस्योग्रैयं क्षीरद्वारेण पशुरपि तथाविधः । अत ऊर्जैवोदुम्बररूपया यजमानार्थमूर्गूपान्पशून्संपादयति ॥

अत्र मीमांसा ।

यदत्र पूर्वमग्निहोत्रादीनां मूलप्रकृतित्वमुक्तं तदष्टमाध्यायस्य प्रथमपादे चिन्तितम्—

" इष्ट्यग्निहोत्रसोमानां मूलप्रकृतिता नहि ।
अस्ति वा नालौकिकत्वादियत्तानवधारणात् ॥
लोकवत्संनिपत्याराडुपकारिद्वयश्रुतेः ।
इयत्ताया निश्चितत्वान्मूलप्रकृतिता त्रिषु ॥ "

अलौकिकत्वेनैतावद्भिरङ्गैः संपूर्ण उपकार इति निश्चेतुमशक्यत्वादिष्ट्यादीना नास्ति मूलप्रकृतित्वमिति चेन्मैवम् । लौकिकसदृशत्वात् । यथा लोके भुजिक्रियायामोदनः करणं तस्य संनिपत्योपकारिणः शाकसूपादय आराडुपकारिणः पीठप्रदीपादयस्तथा भावनायां यागः करणमवघातादयः संनिपातिनः प्रयाजादय आराडुपकारिणोऽतो नात्यन्तमलौकिकत्वम् । इयत्ता तु लौकिक यथा प्रत्यक्षेण निश्चीयते तथा श्रौते श्रुत्या निश्चीयताम् । तस्मादिष्ट्यग्निहोत्रसोमानां मूलप्रकृतित्वमस्ति ।

मासाग्निहोत्रस्य नित्याग्निहोत्राद्भेदो द्वितीयाध्यायस्य तृतीयपादे चिन्तितः—

" मासं जुहोत्यग्निहोत्रं गुणोऽन्यत्कर्म वा गुणः ।
अनूद्य प्राप्तं कर्मात्र मासोऽप्राप्तो विधीयते ॥
उपसद्भिश्चरित्वेति नित्ये तासामसंभवात् ।
अनेकस्याविधेश्चान्यत्कर्म प्रकरणान्तरात् ॥ "

कुण्डपायिनामयने श्रूयते—" मासमग्निहोत्रं जुहोति मासं दर्शपूर्णमासाभ्यां यजेत " इति। अत्र प्राप्तं नित्याग्निहोत्रमनूद्य मासलक्षणो गुणोऽप्राप्तत्वाद्विधीयत इति चेन्मैवम् । किं मास एव विधीयत उतोपसद्भिश्चरित्वेत्युक्तत्वादुपसदोऽपि । नाऽऽद्यः । उपसदामपि नित्याग्निहोत्रे प्राप्तिरहितानां त्वन्मते विधातव्यत्वात् । न द्वितीयः । प्राप्ते कर्मण्यनेकगुणविधौ वाक्यभेदापत्तेः । ननु मा भूत्तर्हि गुणविधिः, कर्मान्तरत्वे किं प्रमाणमिति चेत् । प्रकरणान्तरमिति वदामः । नयनेर्नित्याग्निहोत्रस्य प्रकरणमसंनिहितत्वात् । अयनस्य त्वेतत्प्रकरणम् । अयनमारभ्याधीतत्वात् । का तर्हि नित्याग्निहोत्रे गुणविधिशङ्केति चेत् ।

प्रकरणस्यासमर्थत्वेऽप्यग्निहोत्रशब्देन[1] तत्समर्पणादेषा शङ्का भवति । सा च वाक्यभेदापत्त्या निराकृता । तथा सति स्वतःसिद्धं प्रकरणभेदं निराकृत्य प्रकरणैक्यापादनेन गुणं विधापयितुं प्रवृत्तस्याग्निहोत्रशब्दस्य शक्तौ निरुद्धायां तदवस्थः प्रकरणभेदो नित्याग्निहोत्रादिदं कर्म भिनत्ति । अग्निहोत्रशब्दो धर्मातिदेशार्थ इति सप्तमे वक्ष्यते । ननूपसन्मासाभ्यां गुणाभ्यां विशिष्टं कर्म विधीयते, ततो वाजिनन्यायेन गुणभेदात्कर्मभेदो न प्रकरणभेदादिति चेत् । न, वैषम्यात् । उपादेयतया विधेयो गुणो वाजिनं मासस्त्वनुपादेय इत्येकं वैषम्यं, द्रव्यत्वेन गुणान्तर्गतं वाजिनं मासो न तथेत्यपरं वैषम्यम् । परमार्थतस्त्वत्र प्रथमतरप्रतीतेन प्रकरणभेदेन सिद्धं कर्मभेदं गुणभेद उपोद्बलयति । ततः प्रकरणान्तरमेवात्र भेदहेतुरिति ।

ईदृशस्य कर्मणो धर्मापेक्षत्वं सप्तमाध्यायस्य चतुर्थपादे चिन्तितम्—

" सौर्ये चरौ न धर्माः स्युः स्युर्वा मानविवर्जनात् ।
न स्युः स्युः करणं यागोऽपेक्षते ह्युपकारिणः ॥ "

सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्रावघातादयो धर्मा न प्राप्यन्ते, प्रापकप्रमाणानां श्रुतिलिङ्गादीनामभावादिति चेन्मैवम् । विमतो याग उपकरणापेक्षः करणत्वात्, लौकिकवैदिकभोजनदर्शपूर्णमासादिवदित्यनुमानेन तत्प्रापणात् । तत्रैवान्यच्चिन्तितम्—

" विध्यन्तोऽपेक्षितस्तत्र लौकिको वाऽथ वैदिकः ।
आद्यो निबन्धराहित्यादन्त्यो धीसंनिकर्षतः ॥ "

तत्र सौर्यचरावपेक्षितः प्रधानविधिशेषाङ्गकलापः स्थालीपाकादिगतो लौकिको ग्रहीतव्यः । कुतः । अनिबद्धत्वात् । वैदिकस्तु प्रकरणेन कर्मविशेषे निबद्धः सन्न ततो वियोजयितुं शक्यत इति चेन्मैवम् । वैदिके करणे वैदिकविध्यन्तस्य बुद्धिसंनिकर्षात् । यथा प्रकरणेन क्वचिन्निबद्धस्तथा चोदकेनान्यत्रापि निबध्यताम् । किं च " प्रयाजेप्रयाजे कृष्णलं जुहोति " इति सौर्ययागविधिशेषे कृष्णलहोमविधानाय सिद्धवत्प्रयाजोऽनूद्यते । तच्च वैदिकेतिकर्तव्यताया लिङ्गम् । तस्माद्वैदिको ग्राह्यः ।

स च विध्यन्त ईदृशेषु कर्मसूपदेशतो न प्राप्नोतीति सप्तमाध्यायस्य प्रथमपादे चिन्तितम्—

" सर्वार्थं प्रकृतार्थं वा प्रयाजाद्युपदेशनम् ।
यद्वाऽन्वयेन सर्वार्थं नातिदेशो विचार्यताम् ॥

---

[1] क ख °ग्निविशे°।

( ऐश्वर्यादिकामिना तत्तत्पशुविधानम् )

अङ्गप्रधानयोर्मुख्यापूर्वभेदे समन्वयात् ।
प्रकृतार्थमतः कार्यमतिदेशविचारणम् ॥ " इति ॥

दर्शपूर्णमासप्रकरणे प्रयाजादय उपदिष्टाः । ज्योतिष्टोमप्रकरणे दीक्षणीयादयः । तत्रैते सर्वे धर्माः सर्वयागार्थत्वेनोपदिश्यन्ते । कुतः । यज्यन्वयात् । यागः करणं प्रयाजादय इतिकर्तव्यतेत्येतावदविवादम् । तत्र यदि प्रयाजादयो यागवदपूर्वेणान्विताः स्युस्तदानीमपूर्वनिष्पादकत्वमुभयत्र समानमिति कृत्वा करणोपकरणत्वलक्षणं सर्वसंमतमवान्तरवैषम्यं बाध्येत । किं चावघाततपेषणादीनां यागनिष्पादकत्वेन यज्यन्वयो दृष्टस्तद्वदङ्गत्वसामान्यात्प्रयाजादीनामपि यज्यन्वयो युक्तः । यजिधातुश्च दर्शपूर्णमासज्योतिष्टोमसौर्यश्येनादिषु सर्वेषु विशेषेष्वनुगतं यागमात्रं ब्रूते । तथा सति सौर्यश्येनादिष्वप्युपदेशेनैव कृत्स्नधर्मप्राप्तेरतिदेशविचारो न कर्तव्य इति प्राप्ते ब्रूमः—अपूर्वं मुख्यं फलवत्त्वात् । यजिर्न मुख्यः फलरहितत्वात् । फलवति मुख्ये प्रयाजादिविधानं युक्तम् । अतः करणेतिकर्तव्यतयोरुभयोरपूर्वेण प्रथममन्वयः । पश्चात्तु परस्परं गुणप्रधानभावेनान्वयः । तथा सत्यपूर्वभेदस्य द्वितीयाध्याये निरूपितत्वादपूर्वविशेषेण तत्करणभूतयजिविशेषेण वाऽन्विताः प्रयाजादिधर्मा ये यस्मिन्प्रकरण आम्नातास्ते तत्रैव व्यवतिष्ठन्ते । सत्येवं प्रकरणमर्थवद्भवति । सर्वेषां धर्माणां सर्वत्र प्राप्तौ प्रकरणमनर्थकं स्यात् । तस्मात्सौर्यश्येनादिप्रकरणे धर्मोपदेशाभावाद्धर्माकाङ्क्षा पूरयितुमतिदेशविचारः कर्तव्यः ।

प्रत्यक्षवचनेन धर्मातिदेशस्तत्रैव चिन्तितः—

" इषौ समानमितरच्छ्येनेनेत्यनुवादकम् ।
श्येनवैशेषिकाणां वाऽतिदेशोऽत्रानुवादकम् ॥
ज्योतिष्टोमविकारत्वात्तद्धर्माश्चोदकात्समाः ।
श्येनस्येतरशब्दोक्तिरिषुवैशेषिकं प्रति ॥
इषुवैशेषिकादुक्तादितरच्छ्येनगं स्फुरत् ।
वैशेषिकं लोहितोष्णीषादि तेनातिदिश्यते ॥ " इति ॥

इषुनामकः श्येननामकश्च द्वावप्येकाहौ ज्योतिष्टोमविकारौ, तयोरुभयोर्ज्योतिष्टोमधर्माश्चोदकेन प्राप्ताः । ते चोभयत्र समानाः । तच्च समानत्वमिषुप्रकरणेऽनेन वाक्येनानूद्यते समानमितरच्छ्येनेनेति । नन्वत्रेतरशब्दोक्तिरनुपपन्ना, तत्प्रतियोगिनः कस्यचिदनिर्दिष्टत्वादिति चेन्न । पूर्ववाक्यविहितस्य विशेषधर्मस्य प्रतियोगित्वात् । इषौ यो वैशेषिकधर्मो विहितस्तं परित्यज्येतरचोदकप्राप्तं सर्वं श्येनेन समानमित्यर्थः । तस्मादनुवादकमिदं वाक्यमिति प्राप्ते

ब्रूमः—इतरशब्दः प्रतियोगिसजातीयं ब्रूते। तद्यथा देवदत्त एक एवाधीते नेतरः कश्चिदित्युक्तेऽध्ययनप्रसक्तिमान्यज्ञदत्तादिर्माणवकः प्रतीयते न तु गवाश्वघटपटादिः। एवमत्रापीपुर्वैशेषिकस्य पूर्ववाक्योक्तस्य प्रतियोगित्वात्त-त्समानजातीयं श्येनगतं लोहितोष्णीषादिरूपं वैशेषिकं धर्मजातमितरशब्देन प्रतिभाति। नच प्रकृतावभावान्न चोदकेन प्राप्तम्। तस्मादिषावनुष्ठेयत्वेना-तिदिश्यते।

नाम्ना धर्मातिदेशस्तत्रैव तृतीयपादे चिन्तितः—

> " मासं जुहोत्यग्निहोत्रमिति नामाग्निहोत्रतः।
> नित्यान्मासाग्निहोत्रेऽस्मिन्धर्माणां नातिदेशकम्॥
> उतातिदेशकं नैव द्वयोर्नाम्नः समन्वतः।
> अग्नये होत्रमित्यस्य नित्ये संपादितन्वतः॥
> तत्र मुख्यं ततोऽन्यत्र गौणत्वस्य प्रसिद्धये।
> नित्याग्निहोत्रगान्धर्मास्तन्नामातिदिशेदिह॥ " इति॥

कुण्डपायिनामयने श्रूयते—" मासमग्निहोत्रं जुहोति " इति। तत्राग्निहो-त्रमित्येतन्नाम नित्याग्निहोत्रादन्यस्मिन्मासाग्निहोत्रे धर्मानतिदेष्टुं नार्हति। कुतः। तस्य नाम्न उभयोरग्निहोत्रयोर्मुख्यवृत्त्या समानत्वादिति प्राप्ते ब्रूमः—अग्नये होत्रं यस्मिन्कर्मणि तदग्निहोत्रमित्येतमवयवार्थं नित्याग्निहोत्रे संपाद्य तन्नाम-धेयत्वं प्रथमाध्याये निर्णीतम्। अतस्तत्रैवायं शब्दो मुख्यः। न चोभयत्र मुख्यत्वं संभवत्यनेकार्थत्वस्यान्याय्यत्वात्। मुख्यत्वासंभवेन मासाग्निहोत्रे गुणयोगाद्वर्तितुं नित्याग्निहोत्रगुणानतिदिशति।

प्रत्यक्षवचननाम्नोरभावेऽपि नियतादेव कर्मणोऽतिदेशोऽष्टमाध्यायस्य प्रथ-मपादे चिन्तितः—

> " कस्माच्चिदतिदिश्यन्ते नियतात्कर्मणोऽथ वा।
> अविशेषादादिमोऽन्त्यः शास्त्रार्थस्य व्यवस्थितेः॥ " इति॥

विहितेतिकर्तव्यतारहिते सौर्यादौ कर्मणि तद्युक्तादतः कुतश्चित्कर्मणो धर्मा अतिदिश्यन्ते। कुतः। नियामकस्य विशेषस्याभावात्। अतो विशेष-चिन्ता न कार्येति चेन्नैवम्। शास्त्रार्थव्यवस्थाया नियामकत्वात्। तस्मान्नि-यतादेकस्मात्कर्मणो धर्मातिदेशः। तेन विशेषचिन्ता कर्तव्या।

---

१ क ख ङ च °दंग्नि । २ क ख घ ङ °त्वादग्नेयलिङ्गानि ।

( ऐश्वर्यादिकामिना तत्तत्पशुविधानम् )

तत्रैव विशेषनियामकं चिन्तितम्—

" तद्धितोक्त्यादिलिङ्गं किं न विशेषनियामकम् ।
भवेद्वा नह्यशब्दत्वाद्भवेच्छब्दे प्रवेशतः ॥ " इति ॥

दर्शपूर्णमासयोराग्नेयमष्टाकपालं निर्वपतीत्यत्र तद्धितोक्त्या देवतानिर्देश एकदेवतायोगित्वमौषधद्रव्यकत्वं निर्वाप इत्येतान्याग्नेययागसंबन्धितया श्रूयमाणत्वादाग्नेयलिङ्गानि । सौर्यं चरुं निर्वपेदित्यत्रापि तान्युपलभ्यन्ते । न तेषामाग्नेयधर्मातिदेशं नियन्तुं सामर्थ्यमस्ति । कुतः । तेषामशब्दरूपत्वेन शब्दैकसमधिगम्येऽर्थे प्रामाण्यायोगादिति प्राप्ते ब्रूमः—लिङ्गस्मारितोपकारसहितमेव सौर्ययागं तच्छब्दो विदधाति । तथा सति प्रताड्या लिङ्गस्य शब्दे प्रवेशादाग्नेयवत्सौर्योऽनुष्ठेय इत्येतादृशं चोदकवाक्यमनुमापयता लिङ्गेन धर्मविशेषा नियम्यन्ते ।

इष्टिषु सौमिकधर्मनिवारणं तत्रैव चिन्तितम्—

" ऐन्द्राग्नादौ सौमिकः स्यादैष्टिको वा द्वयोरिह ।
संभवादैष्टि( ष्टि )कोऽन्त्योऽत्र स्यात्कपालादिलिङ्गतः ॥ "

ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम इत्यादौ सौमिकैष्टिकयोर्विध्यन्तयोरन्यतर इच्छया प्राप्तः । कुतः । उभयत्र विध्यन्तयोरनेनातिदेष्टुमर्हत्वादिति चेन्न । कपालनिर्वापादिभिर्लिङ्गैर्विशेषैरैष्टिकस्यैवात्रोचितत्वात् ।

अग्नीषोमीयपशोरैष्टिकनिर्ण्यत्वं तत्रैव चिन्तितम्—

" न पशावैष्टिकः स्याद्वा न कपालाद्यभावतः ।
स्यादव्यक्तद्रव्यदेवत्वप्रयाजबहुत्वतोऽन्यतः ॥ "

अग्नीषोमीयपशावैष्टिकविध्यन्तो नास्ति । कुतः । पूर्ववदत्र निर्वापकपालादिलिङ्गाभावादिति चेन्मैवम् । आग्नेयमष्टाकपालमित्युत्पत्तिवाक्ये यथा द्रव्यदेवते व्यक्ते तथाऽग्नीषोमीयं पशुमित्यत्रापि । न तु सोमेन यजेतेत्यत्रेव देवताया अव्यक्तत्वम् । तदेतद्व्यक्तद्रव्यदेवत्वमेकं लिङ्गम् । एकादश प्रयाजान्यजतीति प्रयाजबहुत्वं द्वितीयम् । स्रुच्यमाघार्य जुह्वा पशुं समनक्तीत्याघाराञ्जने लिङ्गान्तरे । आलम्भो लिङ्गान्तरमिष्टावपि पाशालम्भेनेति दर्शनात् । तस्मादस्ति पशावैष्टिकः ।

तस्यैव पशोः पश्वन्तरप्रकृतित्वं देवतान्तरप्रकृतित्वं तत्रैव चिन्तितम्—

" सवनीयादिके दार्शो दैक्षो वा प्रकृतित्वतः ।
आद्योऽन्त्यो लिङ्गतोऽन्यत्र विकृतिः प्रकृतिर्भवेत् ॥ "

सवनीयानुबन्ध्यनिरूढादिपशुषु दर्शपूर्णमाससंबन्धिविध्यन्तः कार्यः। कुतः। दर्शस्य प्रकृतित्वात्। दैक्षोऽग्नीषोमीयपशुविध्यन्तो दीक्षितेनानुष्ठेयेषु पशुविधयन्तेषु प्रथमभावित्वात्। तस्य चाग्नीषोमीयेष्टिविकृतित्वान्न प्रकृतित्वमस्ति। अतो न तस्य विध्यन्तोऽतिदेशार्थ इति प्राप्ते ब्रूमः—आलम्भोऽग्नीषोमीयपशौ लिङ्गम्। तच्च सवनीयादिष्वप्यस्ति। तथा प्रातःसवनीयादिषु वपाप्रचारोऽपरं लिङ्गम्। इष्टिं प्रति विकृतेरप्यन्यत्र सवनीयादौ प्रकृतित्वं न विरुध्यते। तस्मादग्नीषोमीयपशोर्विध्यन्तं सवनीयादिपशुष्वतिदिशेत्। तदेवमेतैर्विचारैर्वायव्यादिपशुष्वग्नीषोमीयविध्यन्तातिदेश इति संस्थितम्।

वायव्यं श्वेतमालभेतेत्यत्र यागविधित्वं द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्—

"वायव्यः श्वेत आलभ्यो भूत्यै सौर्यं चरुं तथा।
निर्वपेद्ब्रह्मतेजोर्थीषामुष्टिनिरुप्तयोः॥
गुणौ श्वेतचरू किं वा यावत्कथितकर्मणी।
फलार्थमथ वा यागौ विशिष्टौ विहिताविह॥
श्वैत्यं वायुस्पृगीषायामाग्नेये च रविप्रभे।
चरुर्गुणश्चरुः स्थाली निर्वापस्तु तदाश्रितः॥
फलहानेर्न तत्किं तु यावद्बोदितकर्म तत्।
द्रव्यादिरूपसंपत्तेरवार्या यागताऽर्थिकी॥"

अनारभ्येदमाम्नायते—"वायव्यं श्वेतमालभेत भूतिकामः" इति। "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" इति च। तथा च दर्शपूर्णमासयोरिदमाम्नातम्—"ईषामालभेत" इति। "चतुरो मुष्टीन्निर्वपति" इति च। ईषा शकटगतो लाङ्गलदण्डवद्दीर्घः काष्ठविशेषस्तस्या आलम्भः स्पर्शः। तमेतं दर्शपूर्णमासगतमीषालम्भमनूद्य तस्यामालभ्यायामीषायां श्वेतगुणो विधीयते। तस्य च श्वेतकाष्ठस्य वायुना स्पृश्यमानत्वाद्वायव्यत्वं संभवति। तथा चतुर्मुष्टिनिर्वापमनूद्य चतुर्गुणत्वेन विधीयते। चरुः स्थाली। सा च निर्वापस्याऽऽश्रयः। निरुप्तस्य हविष आग्नेयतया सूर्यवत्प्रभासंबन्धात्सौर्यत्वम्। भूतिब्रह्मवर्चसफले सार्वकालिकयोर्दर्शपूर्णमासयोः पूर्वसिद्धे एवानूद्येते। तस्माद्गुणविधिरित्येकः पूर्वपक्षः। न हि फलप्रदयोर्नित्यवच्छ्रुतयोः संभवत्प्रयोजनयोश्च पाक्षिकानुवादत्वमानर्थक्यं वा युक्तम्। तस्माद्गुणफलविशिष्टकर्मा-

१ क. घ. ङ 'भीयस्य वि'। २ क. घ. ङ 'पशोर्लिङ्ग'।

( ऐश्वर्यादिकामिना तत्र पशुविधानम् )

न्तरे विधीयेते। तदाऽपि यागस्याश्रवणादालम्भनिर्वापयोरेव श्रवणाद्यावदुक्तक-र्मविधिरिति द्वितीयः पूर्वपक्षः। श्वेतपशुचरुद्रव्ययोर्वायुसूर्यदेवतयोश्च स्पष्टं प्रती-यमानतया रूपवदोर्याणयोरार्थिकयोर्वारयितुमशक्यत्वाद्द्रव्यदेवताविशिष्टयोर्या-गयोर्विधिरभ्युपगन्तव्यः। भूतिकामो वायव्येन श्वेतेन पशुना यजेत ब्रह्मवर्चस-कामः सौर्येण चरुणा यजेतेत्येवंविधोऽर्थसिद्धो विधिः । द्रव्यदेवतासंबन्धक-ल्पितस्य यागस्य लिङ्त्रयेन कर्तव्यताविधावालम्भनिर्वापयोरर्थान्वयोः का गतिरिति चेदनुवाद इति ब्रूमः । तस्मात्सिस्त्वार्थिकी, निर्वापालम्भावन्तरेण तत्तद्यागासिद्धेः। तस्माद्यागविधिरिति राद्धान्तः ।

दशमाध्यायस्य द्वितीयपादे चिन्तितम्—

" वायव्यं श्वेतमित्यत्र यः कोऽपि च्छाग एव वा ।
विशेषानुक्तितः कोऽपि च्छाग एवास्त्ववाधनात् ॥ "

वायव्यं श्वेतमालभेत भूतिकाम इत्यत्र श्वेतशब्दस्य धेन्वादिशब्दवज्जा-तिविशेषगतगुणवाचित्वाभावादयं कंचिदपि पशुं श्वेतगुणकं समर्पयतीति पूर्वः पक्षः। चोदकप्राप्तस्याजस्य बाधकारणाभावात्तमेव समर्पयतीति राद्धान्तः ।

तत्रैव सप्तमपादे चिन्तितम्—

" औदुम्बरः खादिरेण समुच्चयोऽथ बाधकः ।
द्वयोर्नियोजनादाद्यो निरपेक्षत्वतोऽन्तिमः ॥ " इति ॥

पशुकामेनानुष्ठेये सोमापौष्णे पशौ श्रूयते—" औदुम्बरो यूपो भवति " इति। तत्र चोदकप्राप्तेन खादिरेण सह श्रूयमाणस्यौदुम्बरस्य समुच्चयः कार्यः । कुतः । द्वयोरपयोः पशुनियोजनसंबन्धेन चोदकपरिप्राप्तयोगादिति प्राप्ते ब्रूमः—खादिरौदुम्बरौ परस्परनिरपेक्षतया पशुनियोजनक्षमौ प्रमाणद्वयेन प्राप्तौ। तयोः समुच्चयाङ्गीकारे नैरपेक्ष्यं परित्यज्येत । तस्मादुपदिष्ट औदुम्ब-रोऽतिदिष्टस्य खादिरस्य बाधक इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-
दीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके
प्रथमोऽनुवाकः ॥ १ ॥

---

१ ग. बाधनात्। आलं ।

( अथ द्वितीयाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः । )

प्रजापतिः प्रजा असृजत ता अस्मात्सृष्टाः पराचीरायन्ता वरुणमगच्छन्ता अन्वैत्ताः पुनरयाचत ता अस्मै न पुनरददात्सोऽब्रवीद्वरं वृणीष्वाथ मे पुनर्देहीति तासां वरमाऽलभत स कृष्ण एकशितिपादभवद्यो वरुणगृहीतः स्यात्स एतं वारुणं कृष्णमेकशितिपादमालभेत वरुणम् ( १ ) एव स्वेन भागधेयेनोप धावति स एवैनं वरुणपाशान्मुञ्चति कृष्ण एकशितिपाद्भवति वारुणो ह्येष देवतया समृद्ध्यै सुवर्भानुरासुरः सूर्यं तमसाऽविध्यत्तस्मै देवाः प्रायश्चित्तिमैच्छन्तस्य यत्प्रथमं तमोऽपाघ्नन्त्सा कृष्णाऽविरभवद्यद्द्वितीयꣳ सा फल्गुनी यत्तृतीयꣳ सा बलक्षी यदध्यस्थादपाकृन्तन्त्साऽविर्वशा ( २ ) समभवत्ते देवा अब्रुवन्देवपशुर्वा अयꣳ समभूत्कस्मा इममालप्स्यामह इत्यथ वै तर्ह्यल्पा पृथिव्यासीदजाता ओषधयस्तामविं वशामादित्येभ्यः कामायाऽलभन्त ततो वा अप्रथत पृथिव्यजायन्तौषधयो यः कामयेत प्रथेय पशुभिः

प्र प्रजया जायेयेति स एतामवि वशामादित्येभ्यः कामाय ( ३ ) आ लंभेताऽऽदित्यानेव कामꣳ स्वेन भागधेयेनोप धावति त एवैनं प्रथयन्ति पशुभिः प्र प्रजया जनयन्त्यसावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन्तस्मा एता मल्हा आऽलभन्ताऽऽग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेतां बार्हस्पत्यां ताभिरेवास्मिन्रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात्तस्मा एता मल्हा आ लंभेत ( ४ ) आग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेतां बार्हस्पत्यामेता एव देवताः स्वेन भागधेयेनोप धावति ता एवास्मिन्ब्रह्मवर्चसं दधति ब्रह्मवर्चस्येव भवति वसन्ता प्रातराग्नेयीं कृष्णग्रीवीमा लंभेत ग्रीष्मे मध्यंदिने सꣳहितामैन्द्रीꣳ शरद्यपराह्णे श्वेतां बार्हस्पत्यां त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे मध्यंदिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येव ( ५ ) अव रुन्धे संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्च-

स्यैव भवति गर्भिण्यो भवन्तीन्द्रियं वै गर्भ
इन्द्रियमेवास्मिन्दधाति सारस्वतीं मेषीमा लं-
भेत य ईश्वरो वाचो वदितोः सन्वाचं न वदे-
द्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेये-
नोप धावति सैवास्मिन् ( ६ ) वाचं दधाति
प्रवदिता वाचो भवत्यपन्नदती भवति तस्मा-
न्मनुष्याः सर्वां वाचं वदन्त्याग्नेयं कृष्णग्रीवमा
लभेत सौम्यं बभ्रुं ज्योगामयाव्यग्निं वा
एतस्य शरीरं गच्छति सोमꣳ रसो यस्य
ज्योगामयत्यग्नेरेवास्य शरीरं निष्क्रीणाति
सोमाद्रसमुत यदीतासुर्भवति जीवत्येव सौम्यं
बभ्रुमा लभेताऽऽग्नेयं कृष्णग्रीवं प्रजाकामः
सोमः ( ७ ) वै रेतोधा अग्निः प्रजानां प्रजन-
यिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्र
जनयति विन्दते प्रजामाग्नेयं कृष्णग्रीवमा
लभेत सौम्य बभ्रु यो ब्राह्मणो विद्यामनूच्य
न विरोचेत यदाग्नेयो भवति तेज एवास्मिन्तेन
दधाति यत्सौम्यो ब्रह्मवर्चसं तेन कृष्णग्रीव
आग्नेयो भवति तम एवास्मादप हन्ति श्वेतो
भवति ( ८ ) रुचमेवास्मिन्दधाति बभ्रुः

( वरुणगृहीतादिपशुविधानम् )

सौम्यो भवति ब्रह्मवर्चसमेवास्मिन्त्विषिं दधा-
त्याग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुमा-
ग्नेयं कृष्णग्रीवं पुरोधायाꣳ स्पर्धमान आग्नेयो
वै ब्राह्मणः सौम्यो राजन्योऽभितः सौम्यमा-
ग्नेयौ भवतस्तेजसैव ब्रह्मणोभयतो राष्ट्रं परि
गृह्णात्येकधा समावृङ्क्ते पुर एनं दधते (९)॥

( लभेत वरुणं वशैनामवि वशामादित्येभ्य कामाय मल्हा आ लभेत तान्येव
सैवास्मिन्रसोमं. श्वेतो भवति त्रिचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ द्वितीयाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाक । )

---

प्रजापतिरिति प्रजा—पतिः । प्रजा इति प्र—
जाः । असृजत । ताः । अस्मात् । सृष्टाः । पराचीः ।
आयन् । ताः । वरुणम् । अगच्छन् । ताः । अ-
न्विति । ऐन् । ताः । पुनः । अयाचत । ताः । अस्मै ।
न । पुनः । अददात् । सः । अब्रवीत् । वरम् ।
वृणीष्व । अथ । मे । पुनः । देहि । इति । तासा-
म् । वरम् । एति । अलभत । सः । कृष्णः । एक-
शितिपादित्येक—शितिपात् । अभवत् । यः । वरुण-

गृहीत इति वरुण—गृहीतः । स्यात् । सः । एतम् । वारुणम् । कृष्णम् । एकशितिपादमित्येकं—शितिपादम् । एतिं । लभेत । वरुणम् (१)। एव । स्वेनं । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । एनम् । वरुणपाशादिति वरुण—पाशात् । मुञ्चति । कृष्णः । एकशितिपादित्येक—शितिपात् । भवति । वारुणः । हि । एषः । देवतया । समृद्ध्या इति सम्—ऋद्ध्यै । सुवर्भानुरिति सुवः—भानुः । आसुरः । सूर्यम् । तमसा । अविध्यत् । तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन् । तस्य । यत् । प्रथमम् । तमः । अपाघ्नन्नित्यप—अघ्नन् । सा । कृष्णा । अविः । अभवत् । यत् । द्वितीयम् । सा । फल्गुनी । यत् । तृतीयम् । सा । बलक्षी । यत् । अध्यस्थादित्यधि—अस्थात् । अपाकृन्तन्नित्यप—अकृन्तन् । सा । अविः । वशा (२)। समितिं । अभवत् । ते । देवाः । अब्रुवन् । देवपशुरिति देव—पशुः । वै । अयम् । समितिं । अभूत् । कस्मै । इमम् । एतिं । लप्स्यामहे । इतिं । अथ । वै । तर्हि । अल्पा । पृथिवी । आसीत् । अजाताः । ओषधयः । ताम् । अविम् । वशाम् । आ-

दित्येभ्यः। कामाय। एति। अलभन्त। ततः। वै। अप्रथत। पृथिवी। अजायन्त। ओषधयः। यः। कामयेत। प्रथेय। पशुभिरिति पशु–भिः। प्रेति। प्रजयेति प्र–जया। जायेय। इति। सः। एताम्। अविंम्। वशाम्। आदित्येभ्यः। कामाय (३)। एति। लभेत। आदित्यान्। एव। कामम्। स्वेन। भागधेयेनेति भाग–धेयेन। उपेति। धावति। ते। एव। एनम्। प्रथयन्ति। पशुभिरिति पशु–भिः। प्रेति। प्रजयेति प्र–जया। जनयन्ति। असौ। आदित्यः। न। वीति। अरोचत। तस्मै। देवाः। प्रायश्चित्तिम्। ऐच्छन्। तस्मै। एताः। मल्हाः। एति। अलभन्त। आग्नेयीम्। कृष्णग्रीवीमिति कृष्ण–ग्रीवीम्। संहितामिति सं–हिताम्। ऐन्द्रीम्। श्वेताम्। बार्हस्पत्याम्। ताभिः। एव। अस्मिन्। रुचम्। अदधुः। यः। ब्रह्मवर्चसकाम इति ब्रह्मवर्चस–कामः। स्यात्। तस्मै। एताः। मल्हाः। एति। लभेत (४)। आग्नेयीम्। कृष्णग्रीवीमिति कृष्ण–ग्रीवीम्। संहितामिति सं–हिताम्। ऐन्द्रीम्। श्वेताम्। बार्हस्पत्याम्। एताः। एव। देवताः। स्वेन। भागधेये-

नेति भाग—धेयेन । उपेति । धावति । ताः । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । दधति । ब्रह्मवर्चसीति ब्रह्म—वर्चसी । एव । भवति । वसन्ता । प्रातः । आग्नेयीम् । कृष्णग्रीवीमिति कृष्ण—ग्रीवीम् । एति । लभेत । ग्रीष्मे । मध्यंदिने । सꣳहितामिति सं—हिताम् । ऐन्द्रीम् । शरदि । अपराह्ण इत्यपर—अह्णे । श्वेताम् । बार्हस्पत्याम् । त्रीणि । वै । आदित्यस्य । तेजाꣳसि । वसन्ता । प्रातः । ग्रीष्मे । मध्यंदिने । शरदि । अपराह्ण इत्यपर—अह्णे । यावन्ति । एव । तेजाꣳसि । तानि । एव ( ५ ) । अवेति । रुन्धे । संवत्सरमिति सं—वत्सरम् । पर्यालभ्यन्त इति परि—आलभ्यन्ते । संवत्सर इति सं—वत्सरः । वै । ब्रह्मवर्चसस्येति ब्रह्म—वर्चसस्य । प्रदातेति प्र—दाता । संवत्सर इति सं—वत्सरः । एव । अस्मै । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । प्रेति । यच्छति । ब्रह्मवर्चसीति ब्रह्म—वर्चसी । एव । भवति । गर्भिणयः । भवन्ति । इन्द्रियम् । वै । गर्भः । इन्द्रियम् । एव । अस्मिन् । दधति । सारस्वतीम् । मेषीम् । एति । लभेत । यः । ईश्वरः । वाचः । वदितोः । सन् । वाचम् । न ।

वदेत् । वाक् । वै । सरस्वती । सरस्वतीम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सा । एव । अस्मिन् (६) । वाचम् । दधाति । प्रवदितेति प्र—वदिता । वाचः । भवति । अपन्नदतीत्यपन्न—दती । भवति । तस्मात् । मनुष्याः । सर्वाम् । वाचम् । वदन्ति । आग्नेयम् । कृष्णग्रीवमिति कृष्ण—ग्रीवम् । एति । लभेत । सौम्यम् । बभ्रुम् । ज्योगामयावीति ज्योक्—आमयावी । अग्निम् । वै । एतस्य । शरीरम् । गच्छति । सोमम् । रसः । यस्य । ज्योक् । आमयति । अग्नेः । एव । अस्य । शरीरम् । निष्क्रीणातीति निः—क्रीणाति । सोमात् । रसम् । उत । यदि । इतासुरितीत—असुः । भवति । जीवति । एव । सौम्यम् । बभ्रुम् । एति । लभेत । आग्नेयम् । कृष्णग्रीवमिति कृष्ण—ग्रीवम् । प्रजाकाम इति प्रजा—कामः । सोमः (७) । वै । रेतोधा इति रेतः—धाः । अग्निः । प्रजानामिति प्र—जानाम् । प्रजनयितेति प्र—जनयिता । सोमः । एव । अस्मै । रेतः । दधाति । अग्निः । प्रजामिति प्र—जाम् । प्रेति ।

जनयति । विन्दते । प्रजामिति प्र—जाम् । आग्नेयम् । कृष्णग्रीवमिति कृष्ण–ग्रीवम् । एति । लभेत । सौम्यम् । बभ्रुम् । यः । ब्राह्मणः । विद्याम् । अनूच्येत्यनु—उच्य । न । विरोचेतेति वि—रोचेत । यत् । आग्नेयः । भवति । तेजः । एव । अस्मिन् । तेन । दधाति । यत् । सौम्यः । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । तेन । कृष्णग्रीव इति कृष्ण—ग्रीवः । आग्नेयः । भवति । तमः । एव । अस्मात् । अपेति । हन्ति । श्वेतः । भवति ( ८ ) । रुचम् । एव । अस्मिन् । दधाति । बभ्रुः । सौम्यः । भवति । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । एव । अस्मिन् । त्विषिम् । दधाति । आग्नेयम् । कृष्णग्रीवमिति कृष्ण—ग्रीवम् । एति । लभेत । सौम्यम् । बभ्रुम् । आग्नेयम् । कृष्णग्रीवमिति कृष्ण—ग्रीवम् । पुरोधायामिति पुरः—धायाम् । स्पर्धमानः । आग्नेयः । वै । ब्राह्मणः । सौम्यः । राजन्यः । अभितः । सौम्यम् । आग्नेयौ । भवतः । तेजसा । एव । ब्रह्मणा । उभयतः । राष्ट्रम् । परीति । गृह्णाति । एकधेत्येक—

धा। समाव्रँङ्क्त इति॑ सम्—आव्रँङ्क्ते। पुरः।
एनम्। दुधते (९)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीया-
ष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

( अथ द्वितीयकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः । )

भूतिकामो ग्रामकामः प्रजार्थी दीर्घरोगवान्।
प्रजापश्वर्थिनौ चैषां श्वेताद्याः पशवः श्रुताः ॥ १ ॥

ताननेनाप्यशून्प्रथमानुवाके विधाय द्वितीये वरुणगृहीतादीनां पशव उच्यन्ते।
तत्र वरुणगृहीतस्य पशुं विधातुं प्रस्तौति—

प्रजापतिः प्रजा असृजत ता अस्मात्सृष्टाः
पराचीरायन्ता वरुणमगच्छन्ता अन्वैत्ताः
पुनरयाचत ता अस्मै न पुनरददात्सोऽब्रवी-
द्वरं वृणीष्वाथ मे पुनर्देहीति तासां वरमाऽ-
लभत स कृष्ण एकशितिपादभवत्, इति।

प्रजापतिना सृष्टाः प्रजाः पराचीः पराङ्मुख्योऽपरक्ताः सत्योऽस्मात्प्रजा-
पतेरायन्नगच्छन्। गत्वा च वरुणं प्राप्ताः। स च प्रजापतिस्ताः प्रजा अनु-
गम्य मदीयाः प्रजाः पुनरपि मह्यमेव देहीति वरुणमयाचत। वरुणस्तु न
ददौ। ततः स प्रजापतिर्वरुणमिदमब्रवीत्, एतासां प्रजानां मध्ये वरं श्रेष्ठं
गृहीत्वाऽवशिष्टास्ता मह्यं देहीति। स च वरुणस्तासां प्रजानां मध्ये वरं श्रेष्ठं
कंचित्पशुं मदीयोऽयमिति हस्तेनास्पृशत्। स च परीक्ष्यमाणः कृष्णवर्णः
सन्नेकेन श्वेतेन पादेन युक्तोऽभवत् ॥

विधत्ते—

यो वरुणगृहीतः स्यात्स एतं वारुणं कृष्णमेक-

१ क. ग. ङ. च. स्मृता।

शितिपादमा लभेत वरुणमेव स्वेन भागधे-
येनोप धावति स एवैनं वरुणपाशान्मुञ्चति, इति ।

वरुणगृहीतो जलजन्येन महोदरव्याधिना गृहीतः ॥

पशुविशेषणं प्रशंसति—

कृष्ण एकशितिपाद्भवति वारुणो
ह्येष देवतया समृद्ध्यै, इति ।

ईदृशं पशुं वरुणः प्रत्याहृतवानिति तस्य वरुणदेवताकत्वम् । स च यजमानस्याऽऽरोग्यसमृद्ध्यै संपद्यते ॥

पशुप्रतिपादिकामाख्यायिकां वशां विधातुं प्रस्तौति—

सुवर्भानुरासुरः सूर्यं तमसाऽविध्यत्तस्मै देवाः
प्रायश्चित्तिमैच्छन्तस्य यत्प्रथमं तमोऽपाघ्नन्त्सा
कृष्णाऽविरभवद्यद्द्वितीयꣳ सा फल्गुनी यत्तृ-
तीयꣳ सा बलक्षी यदध्यस्थादपाकृन्तन्त्साऽ-
विर्वशा समभवत्ते देवा अब्रुवन्देवपशुर्वा अयꣳ
समभूत्कस्मा इममा लप्स्यामह इत्यथ वै
तर्ह्यल्पा पृथिव्यासीदजाता ओषधयस्तामविं
वशामादित्येभ्यः कामायाऽलभन्त ततो
वा अप्रथत पृथिव्यजायन्तौषधयः, इति ।

सुवर्भानुरित्यासुरस्य कस्यचिन्नामधेयं, स्वर्गलोकगतां प्रभां नुदतीति सुवर्भानुः । स च पृथिव्या रूपं धृत्वा कृष्णवर्णः । तमःपुञ्जरूपत्वं "यत्त्वा सूर्य स्वर्भानुस्तमसाऽविध्यदासुरः" इत्येतस्यामृचि स्पष्टमाम्नातम् । पृथिव्याश्च कृष्णरूपत्वं लोके बहुलं दृश्यते । छन्दोगाश्च यत्कृष्णं तदन्नस्येत्यन्नकारणभूतायाः पृथिव्याः कृष्णरूपत्वमामनन्ति । अतस्तमःपुञ्जरूपः स आसुरः स्वकीयेन तमसा सूर्यमाच्छाद्य जगदान्ध्यं कृतवान् । तस्मै तस्य सूर्यप्रभाच्छादकस्य तमसः प्रायश्चित्तिं परिहारं विचार्य नानाविधैः प्रकाशरूपैर्मण्यादिद्रव्यैस्तमोऽपाघ्नंश्चतुर्भिः पर्यायैरपसारितवन्तः । प्रथमपर्यायेऽपसृतं तमः कृष्णवर्णा काचिदविरभूत् । द्वितीयपर्याये फल्गुनी लोहितवर्णा काचि-

दविरभूत् । तृतीयपर्याये वलक्षी श्वेता काचिदविरभूत् । अस्थ्नोऽप्युपरि वर्तमानः प्रकाशोऽस्यस्थः। कस्यचिन्मृतदेहस्य दीप्यमानमस्थि समादाय तदीयात्प्रकाशाच्चतुर्थपर्याये तमोऽपाकृन्तन्नपनीतवन्तः । तत्र तमो वशा वन्ध्या काचिदविरभूत्। ततो देवा विचार्य परस्परमिदमब्रुवन्—दैव्यादस्थ्नो जातत्वादयमुत्तमो देवपशुः । तमेनं कस्मै कामायोत्तमप्रयोजनायाऽऽलब्धं करिष्याम इति। अथ विचारादूर्ध्वं तर्हि तदानीमेव पृथिव्या अल्पत्वमोषधीनामनुत्पत्तिं च दोषद्वयमवेक्ष्य तत्परिहाररूपाय कामाय समर्थेभ्य आदित्येभ्यस्तां वशामालभ्य पृथिवीविस्तारमोषध्युत्पत्तिं च संपादितवन्तः ॥

विधत्ते—

यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति स एतामविं वशामादित्येभ्यः कामायाऽऽलभेताऽऽदित्यानेव कामः स्वेन भागधेयेनोप धावति त एवैनं प्रथयन्ति पशुभिः प्र प्रजया जनयन्ति, इति।

पशुभिः प्रथेय पशुबाहुल्यलक्षणं विस्तारं प्राप्नुयां, प्रजया पुत्रपौत्रादिरूपया प्रकृष्टो जायेय भवेयम्। कामाय कामप्रापकेभ्य इत्यर्थः ॥

ब्रह्मवर्चसकामस्य पशुविधानाय प्रस्तौति—

असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन्तस्मा एता मल्हा आऽलभन्ताऽऽग्नेयीं कृष्णग्रीवीः संहितामैन्द्रीः श्वेतां बार्हस्पत्यां ताभिरेवास्मिन्रुचमदधुः , इति।

पूर्ववत्तमोवेधरहितोऽप्यादित्यः कदाचित्प्रकाशमान्द्याद्विशेषेण न दीप्तवान्। तस्मै तदर्थमेता वक्ष्यमाणा मल्हा गलत्वलम्बितस्तनान्विता अजाः श्वेतास्तिस्र आलभन्त । कृष्णा ग्रीवा यस्याः सा कृष्णग्रीवी ग्रीवाव्यतिरिक्तप्रदेशेषु वर्णान्तरोपेतेत्यर्थः । कृत्स्नेऽपि शरीरप्रदेशे भेदस्थितलोहितशुक्लकृष्णवर्णैर्युक्ता संहिता ॥

विधत्ते—

यो ब्रह्मवर्चसकामः स्यात्तस्मा एता मल्हा आ लभेताऽऽग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेतां बार्हस्पत्यामेता एव देवताः स्वेन भागधेयेनोप धावति ता एवास्मिन्ब्रह्मवर्चसं दधति ब्रह्मवर्चस्येव भवति , इति।

श्रुताध्ययनसंपत्तिरूपं तेजो ब्रह्मवर्चसम् ॥

उक्तस्य पशुत्रयस्य प्रयोगार्थं पशुविशेषं कालविशेषं च विधत्ते—

वसन्ता प्रातराग्नेयीं कृष्णग्रीवीमा लभेत ग्रीष्मे मध्यंदिने सꣳहितामैन्द्रीꣳ शरद्यपराह्णे श्वेतां बार्हस्पत्यां त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे मध्यंदिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येवाव रुन्धे , इति।

प्रातरादिकालेषूपाकरणं वपायागो वा यथा भवति तथा प्रारभेत। वसन्ततौ प्रातःकाले वर्षास्विव तीव्रमेघावरणाभावाद्धेमन्तशिशिरयोरिव नीहारावरणाभावाच्चाऽऽदित्यस्य तेजः स्पष्टं प्रकाशते। ग्रीष्मर्तौ मध्याह्ने प्रकाशाधिक्यमतिस्पष्टम्। शरद्दतावपराह्णे सूर्यतेजः सेव्यं भवति। प्रातर्मध्यंदिनयोर्बालातपस्य तीव्रातपस्य च जगदादिहेतुत्वादसेव्यत्वम्। तान्येतानि यथोक्तान्यादित्यस्य त्रीणि तेजांसि प्रशस्तानि। अतस्तत्कालानुष्ठानेन प्रशस्ततेजःसंपत्तिर्भवति ॥

व्रतोपक्रममारभ्य संवत्सरपर्यन्तं ब्रह्मचर्यादिनियमं विधत्ते—

संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति , इति।

एकस्मिन्संवत्सरे निरन्तरं नियमं परिगृह्य तादृशेन पुरुषेण ताः स्वस्वकाल

---

१ क. घ ङ. च. ॰ति। श्रुताध्य॰। २ ख. ॰दित्य स्प॰।

आलभ्यन्ते। उपनीतस्य माणवकस्य संध्यावन्दनाद्याचारशिक्षा संवत्सरेण सम्यक्संपद्यत इति संवत्सरस्य ब्रह्मवर्चसप्रदातृत्वम् ॥

उक्तपशुषु कंचिद्गुणं विधत्ते—

गर्भिणयो भवन्तीन्द्रियं वै गर्भ
इन्द्रियमेवास्मिन्दधति , इति।

गर्भिणयस्तिस्रोऽपि गर्भयुक्ताः ॥

विद्वत्सभाजयार्थित्वकामिनः पशुं विधत्ते—

सारस्वतीं मेषीमा लभेत य ईश्वरो वाचो
वदितोः सन्वाचं न वदेद्वाग्वै सरस्वती सर-
स्वतीमेव स्वेन भागधेयेनोप धावति सैवास्मि-
न्वाच दधाति प्रवदिता वाचो भवति , इति।

वेदशास्त्राद्यभ्यासपाटवेन वाचो वदितुं समर्थोऽपि सभाकम्पादिना यो न वदेत्तस्यायं पशुः ॥

तस्मिन्पशौ कंचिद्गुणं विधत्ते—

अपन्नदती भवति तस्मान्म-
नुष्याः सर्वां वाचं वदन्ति, इति।

अपन्नदती दन्तपातरहिता। लोकेऽपि सदन्ताः पुरुषा वर्णलोपमन्तरेण संपूर्णां वाचं वदन्ति ॥

तीव्ररोगसहितस्य पशुद्वयोपेतं कर्म विधत्ते—

आग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुं
ज्योगामयाव्यग्निं वा एतस्य शरीरं
गच्छति सोमꣳ रसो यस्य ज्योगामय-
त्यग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्र-
समुत यदीतासुर्भवति जीवत्येव , इति।

बभ्रुः पिङ्गलः। शरीरे प्राणस्य बन्धकः सूक्ष्मो योऽन्नस्य रसः स सोमं प्राप्नोति। भोजनरुचौ व्याधिनाऽभिभूतायां भुक्तान्नरसः शरीरं न प्रविशति,

१ ख. मावाग्निमन्व°। २ च पक्षान्तर।

किं तु सोमाधिष्ठितौपधिकार्यं एवान्नेऽवतिष्ठते । सेयं रसस्य सोमप्राप्तिः । ततोऽग्निर्मांसादिकं शोषयति । सेयं शरीरस्याग्निप्राप्तिः ॥

प्रजाकामस्य द्विपशुकं कर्म दिधत्ते—

सौम्यं बभ्रुमा लभेताऽऽग्नेयं कृष्णग्रीवं प्रजाकामः सोमो वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्र जनयति विन्दते प्रजाम् , इति ॥

विदुषो जनानुरागाय द्विपशुकं कर्म विधत्ते—

आग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुं यो ब्राह्मणो विद्यामनूच्य न विरोचेत यदाग्नेयो भवति तेज एवास्मिन्तेन दधाति यत्सौम्यो ब्रह्मवर्चसं तेन कृष्णग्रीव आग्नेयो भवति तम एवास्मादप हन्ति श्वेतो भवति रुचमेवास्मिन्दधाति बभ्रुः सौम्यो भवति ब्रह्मवर्चसमेवास्मिन्त्विषिं दधाति , इति ।

पूर्वं सभायां मूकीभूतस्य कर्मोक्तम् । इदानीं प्रवदतोऽपि पारुष्यवचनेनाप्रस्तुतप्रसङ्गेन वा सभास्थितेभ्यो रुच्यभावे सति रुचिं कामयमानस्येदं कर्मेति विशेषः । तेनाऽऽग्नेयत्वेन तेजः प्रतिवादिभिरप्रधृष्यत्वमस्मिन्यजमाने स्थापयति । तेन सौम्यत्वेन ब्रह्मवर्चसं प्रसङ्गोचितवेदशास्त्रवचनस्फूर्तिरूपमस्मिन्दधाति । कृष्णग्रीवगुणकस्याऽऽग्नेयत्वेन बुद्धिमान्द्यरूपं तमोऽस्मादपहन्ति । ग्रीवातिरिक्तप्रदेशे श्वैत्येन रुचमेव सभोचितानुरञ्जनरूपां प्रभामेवास्मिन्दधाति । बभ्रुत्वे सति सौम्यत्वेन पूर्वोक्तं ब्रह्मवर्चसं प्राप्तस्य त्विषिर्दीप्तिर्जनानुरागातिशयो भवति ॥

पौरोहित्यस्पर्धावतस्त्रिपशुकं कर्म विधत्ते—

आग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायाः स्पर्धमान आग्नेयो वै ब्राह्मणः सौम्यो राजन्योऽभितः सौम्यमा-

अग्नेयौ भवतस्तेजसैव ब्रह्मणोभयतो राष्ट्रं परि गृह्णात्येकधा समावृक्के पुर एनं दधते ।, इति ॥

ब्राह्मणस्याग्निना सह मुखजन्यत्वसाम्येनाऽऽग्नेयत्वम् । सोम राजन्नित्यादिमन्त्रेण सोमस्य राजत्वेन व्यवहाराद्राजन्यः सौम्यः । सौम्यस्याग्निः पुरस्तादुपरिष्टाच्चाऽऽग्नेयानुष्ठाने सति राष्ट्रमुभयतो ब्रह्मणा तेजसैव परिगृह्णाति, वेदशास्त्रप्रयुक्तेन पौरोहित्यलक्षणेन ब्राह्मणोचितेन तेजसैव सर्वतो राष्ट्रं वशी करोतीत्यर्थः । तदानीं प्रतिस्पर्धिनमेकधा क्षणमात्रेण समावृङ्क्ते सम्यग्जयति । ततो राजामात्यादय एनं पुरो दधते पौरोहित्यपदे स्थापयन्ति ॥

अत्र मीमांसा ।

एकादशाध्यायस्य प्रथमपादे चिन्तितम्—

" कृष्णग्रीवद्वये तन्त्रं पृथग्वा देवतैक्यतः ।
तन्त्रं सौम्यव्यवायेन कालभेदात्पृथग्भवेत् ॥ " इति ॥

काम्यपशुकाण्डे श्रूयते—" आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः " इति । अयमर्थः—ममैव पौरोहित्यमस्तु नान्यस्येत्येवं स्पर्धमानो यथोक्तवर्णोपेतं पशुत्रयमालभेतेति । तत्राऽऽग्नेययोः कृष्णग्रीवयोः पश्वोर्देवतैक्यात्तन्त्रेणानुष्ठानमिति चेन्मैवम् । सौम्यपशुना व्यवधाने सति कालैक्याभावेन तन्त्रासंभवात् । तस्मादावापः ।

प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

"आग्नेयो ब्राह्मणोऽत्रापि पूर्ववत्सर्वनिर्णयः ।
द्वारं तु मुखजन्यत्वमाग्नेयत्वेन संस्तवे ॥ " इति ॥

इदमाम्नायते—" आग्नेयो वै ब्राह्मणः " इति । अत्राप्यत्यन्तप्रसिद्धार्थभेदादाग्नेयशब्दो न ब्राह्मणस्य नामधेयं, नाप्यग्निदेवतारूपो गुणो विधीयते । आग्नेयं सूक्तमाग्नेयं हविरित्येवं देवतातद्धितस्य सूक्तहविर्विषयत्वात् । न हि ब्राह्मणः सूक्तं नापि हविः । ततः संबन्धमात्रवाचितद्धितान्तेनाऽऽग्नेयशब्देन ब्राह्मणः स्तूयते । यद्यपि ब्राह्मणे नाग्निसंबन्धस्तथाऽप्यग्निसंबन्धी मुखजन्यत्वगुणो ब्राह्मणे विद्यते । तथा चाग्निब्राह्मणयोर्मुखजन्यत्वं काम्यश्चिदर्थवादे समाम्नायते—" प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दो रथंतरं साम ब्राह्मणो मनुष्याणामजः

१ ख. गस्तत्र ।

पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त " इति । तस्मादाग्नेयशब्दः स्तावकः । एवमैन्द्रो राजन्यो वैश्यो वैश्वदेव इत्यादिषु द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके
द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ द्वितीयाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः । )

देवासुरा एषु लोकेष्वस्पर्धन्त स एतं विष्णुर्वामनमपश्यत्तꣳ स्वायै देवताया आऽलभत ततो वै स इमाँल्लोकानभ्यजयद्वैष्णवं वामनमा लभेत स्पर्धमानो विष्णुरेव भूत्वेमाँल्लोकानभि जयति विषम आ लभेत विषमा इव हीमे लोकाः समृद्ध्या इन्द्राय मन्युमते मनस्वते ललामं प्राशृङ्गमा लभेत सङ्ग्रामे ( १ ) संयत्त इन्द्रियेण वै मन्युना मनसा सङ्ग्रामं जयतीन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति जयति तꣳ सङ्ग्राममिन्द्राय मरुत्वते पृश्निसक्थमा लभेत ग्रामकाम इन्द्रमेव मरुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै सजातान्प्र यच्छति ग्रा-

म्येव भवति यदृषभस्तेन ( २ ) ऐन्द्रो यत्पृ-
श्निस्तेन मारुतः समृद्ध्यै . पश्चात्पृश्निसक्थो
भवति पश्चादन्ववसायिनीमेवास्मै विशं करोति
सौम्यं बभ्रुमा लभेतान्नकामः सौम्यं वा अ-
न्नꣳ सोममेव स्वेन भागधेयेनोप धावति स
एवास्मा अन्नं प्र यच्छत्यन्नाद एव भवति
बभ्रुर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै सौम्यं
बभ्रुमा लभेत यमलम् ( ३ ) राज्याय सन्तꣳ
राज्यं नोपनमेत्सौम्यं वै राज्यꣳ सोममेव स्वेन
भागधेयेनोप धावति स एवास्मै राज्यं प्र
यच्छत्युपैनꣳ राज्यं नमति बभ्रुर्भवत्येतद्वै
सोमस्य रूपꣳ समृद्ध्या इन्द्राय वृत्रतुरे ललामं
प्राशृङ्गमा लभेत गतश्रीः प्रतिष्ठाकामः पाप्मा-
नमेव वृत्रं तीर्त्वा प्रतिष्ठां गच्छतीन्द्रायाभि-
मातिघ्ने ललामं प्राशृङ्गमा ( ४ ) लभेत यः
पाप्मना गृहीतः स्यात्पाप्मा वा अभिमाति-
रिन्द्रमेवाभिमातिहनꣳ स्वेन भागधेयेनोप
धावति स एवास्मात्पाप्मानमभिमातिं प्र
णुदत इन्द्राय वज्रिणे ललामं प्राशृङ्गमा लभेत
यमलꣳ राज्याय सन्तꣳ राज्यं नोपनमेदिन्द्र-

मेव वज्रिणꣳ स्वेन भागधेयेनोप धावति स एवास्मै वज्रं प्र यच्छति स एनं वज्रो भूत्या इन्ध उपैनꣳ राज्यं नमति ललामः प्राशृङ्गो भवत्येतद्वै वज्रस्य रूपꣳ समृद्ध्यै ( ५ ) ॥

( सङ्ग्रामे तेनालमभिमातिघ्ने ललामं प्राशृङ्गमेन पञ्चदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ द्वितीयाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः । )

---

देवासुरा इति देव—असुराः । एषु । लोकेषु । अस्पर्धन्त । सः । एतम् । विष्णुः । वामनम् । अपश्यत् । तम् । स्वायै । देवतायै । एति । अलभत । ततः । वै । सः । इमान् । लोकान् । अभीति । अजयत् । वैष्णवम् । वामनम् । एति । लभेत । स्पर्धमानः । विष्णुः । एव । भूत्वा । इमान् । लोकान् । अभीति । जयति । विषम इति वि—समे । एति । लभेत । विषमा इति वि—समाः । इव । हि । इमे । लोकाः । समृद्ध्या इति सम्—ऋद्ध्यै । इन्द्राय । मन्युमत इति मन्यु—मते । मनस्वते । ललामम् । प्राशृङ्गम् । एति । लभेत । संग्राम इति सं—ग्रामे ।

( १ ) संयत्त इति सं—यत्ते । इन्द्रियेण । वै । मन्युना । मनसा । संग्राममिति सं—ग्रामम् । जयति । इन्द्रम् । एव । मन्युमन्तमिति मन्यु—मन्तम् । मनस्वन्तम् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मिन् । इन्द्रियम् । मन्युम् । मनः । दधाति । जयति । तम् । संग्राममिति सं—ग्रामम् । इन्द्राय । मरुत्वते । पृश्निसक्थमिति पृश्नि—सक्थम् । एति । लभेत । ग्रामकाम इति ग्राम—कामः । इन्द्रम् । एव । मरुत्वन्तम् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मै । सजातानिति स—जातान् । प्रेति । यच्छति । ग्रामी । एव । भवति । यत् । ऋषभः । तेन ( २ )। ऐन्द्रः । यत् । पृश्निः । तेन । मारुतः । समृद्ध्या इति सम्—ऋद्ध्यै । पश्चात् । पृश्निसक्थ इति पृश्नि—सक्थः । भवति । पश्चादन्ववसायिनीमिति पश्चात्—अन्ववसायिनीम् । एव । अस्मै । विशम् । करोति । सौम्यम् । बभ्रुम् । एति । लभेत । अन्नकाम इत्यन्न—कामः । सौम्यम् । वै । अन्नम् । सोमम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव ।

अस्मै । अन्नम् । प्रेति । यच्छति । अन्नाद इत्यन्न—
अदः । एव । भवति । बभ्रुः । भवति । एतत् । वै ।
अन्नस्य । रूपम् । समृद्ध्या इति सम्—ऋद्ध्यै ।
सौम्यम् । बभ्रुम् । एति । लभेत । यम् । अलम्
( ३ )। राज्याय । सन्तम् । राज्यम् । न । उपनमे-
दित्युप—नमेत् । सौम्यम् । वै । राज्यम् । सोमम् ।
एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति ।
धावति । सः । एव । अस्मै । राज्यम् । प्रेति ।
यच्छति । उपेति । एनम् । राज्यम् । नमति ।
बभ्रुः । भवति । एतत् । वै । सोमस्य । रूपम् ।
समृद्ध्या इति सम्—ऋद्ध्यै । इन्द्राय । वृत्रतुर
इति वृत्र—तुरे । ललामम् । प्राशृङ्गम् । एति ।
लभेत । गतश्रीरिति गत—श्रीः । प्रतिष्ठाकाम इति
प्रतिष्ठा—कामः । पाप्मानम् । एव । वृत्रम् ।
तीर्त्वा । प्रतिष्ठामिति प्रति—स्थाम् । गच्छति ।
इन्द्राय । अभिमातिघ्न इत्यभिमाति—घ्ने । ललामम् ।
प्राशृङ्गम् । एति ( ४ ) । लभेत । यः । पाप्मना ।
गृहीतः । स्यात् । पाप्मा । वै । अभिमातिरित्य-
भि—मातिः । इन्द्रम् । एव । अभिमातिहनमित्यभि-
माति—हनम् । स्वेन । भागधेयेनेति भाग—धेयेन ।

उपेति। धावति। सः। एव। अस्मात्। पाप्मानम्। अभिमांतिमित्यभि—मातिम्। प्रेति। नुदते। इन्द्राय। वज्रिणे। ललामम्। प्राशृङ्गम्। एति। लभेत। यम्। अलम्। राज्याय। सन्तम्। राज्यम्। न। उपनमेदित्युप—नमेत्। इन्द्रम्। एव। वज्रिणम्। स्वेन। भागधेयेनेति भाग—धेयेन। उपेति। धावति। सः। एव। अस्मै। वज्रम्। प्रेति। यच्छति। सः। एनम्। वज्रः। भूत्यै। इन्धे। उपेति। एनम्। राज्यम्। नमति। ललामः। प्राशृङ्गः। भवति। एतत्। वै। वज्रस्य। रूपम्। समृद्ध्या इति सम्—ऋद्ध्यै (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः॥ ३॥

(अथ द्वितीयकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः।)

जलोदरगृहीतो यो ये वाञ्छन्ति पशुप्रथाम्।
ब्रह्मवर्चसकामो यो यो विद्वान्वक्तुमक्षमः॥ १॥
दीर्घरोगी प्रजाकामः सभास्वजनवर्जितः।
पौरोहित्ये स्पर्धमानश्चैतेषां पशवः श्रुताः॥ २॥

तानेतान्पशून्द्वितीयानुवाके विधाय तृतीयानुवाके जयादिहेतून्पशून्विधित्सन्नादौ लोकत्रयजयहेतुं पशुं विधातुं प्रस्तौति—

देवासुरा एषु लोकेष्वस्पर्धन्त स एतं वि-

ष्णुर्वामनमपश्यत्तꣳ स्वायै देवताया आऽ-
लभत ततो वै स इमाँल्लोकानभ्यजयत्, इति ।

लोकेषु विषयभूतेषु, वामनं ह्रस्वं पशुं, स्वायै विष्णुरूपायै देवतायै ॥

अथ विधत्ते—

वैष्णवं वामनमा लभेत स्पर्धमानो
विष्णुरेव भूत्वेमाँल्लोकानभि जयति, इति ।

स्पर्धमानो गृहक्षेत्रादिविषये विवादवान् । विष्णुप्रियहविर्दानादस्योपरितं विष्णुत्वम् ॥

चोदकपरम्पराप्राप्तं समदेशमपवदितुं विधत्ते—

विषम आ लभेत विषमा इव
हीमे लोकाः समृद्ध्यै, इति ।

पृथिव्यादिलोकानामुत्तरोत्तरं विस्तृतत्वादूर्ध्वभागाधिक्याद्वा विषमत्वम् सोऽयं विषमदेशः समृद्ध्यै कल्पते ॥

सङ्ग्रामार्थिनः पशुं विधत्ते—

इन्द्राय मन्युमते मनस्वते ललामं प्राशृ-
ङ्गमा लभेत सङ्ग्रामे संयत्त इन्द्रियेण वै
मन्युना मनसा सङ्ग्रामं जयतीन्द्रमेव
मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप
धावति स एवास्मिन्निन्द्रियं मन्युं मनो
दधाति जयति तꣳ संङ्ग्रामम् , इति ।

मनस्वते धैर्यवते । ललामशब्दः श्वेतपुण्ड्रवाल्लाङ्कितललाटोपेतं ब्रूते प्राशृङ्गो मुखं प्रत्यागतशृङ्गः पुंगवः । प्राशृङ्गो गौरिति भरद्वाजवचनात् प्राशृङ्गोऽवाक्शृङ्ग उक्षा वशा वेहद्धेनुर्वत्स ऋषभोऽनड्वान्पुनरुत्सृष्टो गोमृग इति गव्या इत्यापस्तम्बवचनात् । संयत्ते प्राप्ते सति । इन्द्रियं शारीरं बलम् मन्युः शत्रुविषयः कोपः । मनो धैर्यम् ॥

---

१ ख. ॰गक इ॰ ।

ग्रामार्थिनः पशुं विधत्ते—

इन्द्राय मरुत्वते पृश्निसक्थमा लभेत ग्रामकाम इन्द्रमेव मरुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै सजातान्प्र यच्छति ग्राम्येव भवति, इति।

मरुद्भिर्युक्तो मरुत्वान्। पृश्निसक्थः श्वेतोरुः। सजातान्सहोत्पन्नान्भ्रात्रादीन्सहवासिनो भृत्यादींश्च ॥

पुंगवत्वं सक्थिश्वैत्यं च प्रशंसति—

यदृषभस्तेनैन्द्रो यत्पृश्निस्तेन मारुतः समृद्ध्यै, इति।

सेक्तृत्वसामान्येनेन्द्रसंबन्धित्वं, वायव्यं श्वेतमित्युक्तत्वात्पृश्निवर्णस्य मारुतत्वं, तदुभयं समृद्ध्यै भवति ॥

पुरोवर्तिनोरूर्वोः पृश्निसक्थित्वं वारयितुं विधत्ते—

पश्चात्पृश्निसक्थो भवति पश्चादन्ववसायिनीमेवास्मै विशं करोति, इति।

यजमानो ग्रामस्वामी प्रथमं यत्कार्यं यथाऽध्यवस्यति तद्ग्रामनिवासिनी प्रजा पश्चाद्यजमानानुसारेणैव तत्कार्यमध्यवस्यति, न तु प्रातिकूल्यं चिन्तयतीति पश्चादन्ववसायिनी ॥

अन्नार्थिनः पशुं विधत्ते—

सौम्यं बभ्रुमा लभेतान्नकामः सौम्यं वा अन्नꣳ सोममेव स्वेन भागधेयेनोप धावति स एवास्मा अन्नं प्र यच्छत्यन्नाद एव भवति, इति।

सोमो वा ओषधीनाꣳ राजेति श्रुतत्वादन्नस्य सौम्यत्वम्। अन्नादो व्याधिराहित्येन दीप्ताग्निः ॥

पशुवर्णं प्रशंसति—

बभ्रुर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै, इति।

विदलितचणकाद्यन्नस्य प्रियंग्वादेर्वा रूपं पिङ्गलम् ॥

राज्यप्राप्तिकामिनः पशुं विधत्ते—

सौम्यं बभ्रुमा लभेत यमलꣳ राज्याय
सन्तꣳ राज्यं नोपनमेत्सौम्यं वै राज्यꣳ सोम-
मेव स्वेन भागधेयेनोप धावति स एवास्मै
राज्यं प्र यच्छत्युपैनꣳ राज्यं नमति बभ्रुर्भवत्ये-
तद्वै सोमस्य रूपꣳ समृद्ध्यै , इति ।

राज्ञो ज्येष्ठपुत्रत्वाच्छौर्यादिगुणसंपन्नत्वाद्राज्यायालं सन्तं सम्यग्योग्यं सन्तं यं पुरुषं प्रति राज्यं न प्राप्नुयात्तस्यायं पशुः । सोमोऽस्माकं ब्राह्मणानाꣳ राजेति श्रुतत्वाद्राज्यं सौम्यम् । चन्द्रमण्डलस्य सुवर्णवर्णत्वाद्बभ्रुत्वं सोमस्य रूपम् ॥

शत्रुबाधेन भ्रष्टश्रियः प्रतिष्ठार्थं पशुं विधत्ते—

इन्द्राय वृत्रतुरे ललामं प्राशृङ्गमा लभेत
गतश्रीः प्रतिष्ठाकामः पाप्मानमेव
वृत्रं तीर्त्वा प्रतिष्ठां गच्छति, इति ।

वृत्रतूर्वैरिहिंसकः । पाप्मानमेव नरकप्रदपापवद्बाधकमेव वृत्रं वैरिणम् ॥

पापक्षयार्थिनः पशुं विधत्ते—

इन्द्रायाभिमातिघ्ने ललामं प्राशृङ्गमा
लभेत यः पाप्मना गृहीतः स्यात्पाप्मा
वा अभिमातिरिन्द्रमेवाभिमातिहनꣳ
स्वेन भागधेयेनोप धावति स एवास्मा-
त्पाप्मानमभिमातिं प्र णुदते , इति ।

पाप्मना गोवधाद्युपपातकादिना ॥

राज्यार्थिनः पश्वन्तरं विधत्ते—

इन्द्राय वज्रिणे ललामं प्राशृङ्गमा लभेत यम-
लꣳ राज्याय सन्तꣳ राज्यं नोपनमेदिन्द्रमेव

( ब्रह्मवर्चसकामादीनां पशुविधिः )

वज्रिणꣳ स्वेन भागधेयेनोप धावति स एवास्मै
वज्रं प्र यच्छति स एनं वज्रो भूत्वा इन्ध
उपैनꣳ राज्यं नमति ललामः प्राशृङ्गो भवत्ये-
तद्वै वज्रस्य रूपꣳ समृद्ध्यै ॥ , इति ॥

वज्रं वज्रवत्प्रहरणसमर्थमायुधम् । स चाऽऽयुधविशेषो वज्रसमो भूत्वा इन्धे यजमानं वैरिसंतापाय प्रदीप्तं करोति । नतस्य शृङ्गस्य तीक्ष्णाग्रत्वाचीक्ष्णधारायुक्तवज्ररूपत्वम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-
दीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

( अथ द्वितीयाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

असावादित्यो न व्यरोचत तस्मै देवाः
प्रायश्चित्तिमैच्छन्तस्मा एतां दशर्षभामाऽलं-
भन्त तयैवास्मिन्रुचमदधुर्यो ब्रह्मवर्चसकामः
स्यात्तस्मा एतां दशर्षभामा लभेतामुमेवाऽऽ-
दित्यꣳ स्वेन भागधेयेनोप धावति स
एवास्मिन्ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भ-
वति वसन्ता प्रातस्त्रीँल्ललामानालभेत ग्रीष्मे
मध्यंदिने ( १ ) त्रीञ्छितिपृष्ठाञ्छरद्यपराह्णे
त्रीञ्छितिवारान्यानि वा आदित्यस्य तेजाꣳ-
सि वसन्ता प्रातर्ग्रीष्मे मध्यंदिने शरद्यपराह्णे
यावन्त्येव तेजाꣳसि तान्येवाव रुन्धे त्रयस्त्रय

आ लंभ्यन्तेऽभिपूर्वमेवास्मिन्तेजो दधाति संवत्सरं पर्यालंभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति संवत्सरस्य परस्तात्प्राजापत्यं कद्रुम् ( २ ) आ लंभेत प्रजापतिः सर्वा देवता देवतास्वेव प्रति तिष्ठति यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णꣳ श्याममा लंभेत सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवास्मै देवतया पशुभिस्त्वचं करोति न दुश्चर्मा भवति देवाश्च वै यमश्चास्मिँल्लोकेऽस्पर्धन्त स यमो देवानामिन्द्रियं वीर्यमयुवत तद्यमस्य ( ३ ) यमत्वं ते देवा अमन्यन्त यमो वा इदमभूद्यद्वयꣳ स्म इति ते प्रजापतिमुपाधावन्त्स एतौ प्रजापतिरात्मन उक्षवशौ निरमिमीत ते देवा वैष्णावरुणीं वशामाऽलंभन्तैन्द्रमुक्षाणं तं वरुणेनैव ग्राहयित्वा विष्णुना यज्ञेन प्राणुदन्तैन्द्रेणैवास्येन्द्रियमवृञ्जत यो भ्रातृव्यवान्त्स्यात्स स्पर्धमानो वैष्णावरुणीम् ( ४ ) वशामा लंभेतैन्द्रमुक्षाणं वरुणेनैव भ्रातृव्यं ग्राहयित्वा वि-

ष्णुना यज्ञेन प्र णुदत ऐन्द्रेणैवास्येन्द्रियं वृङ्क्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवतीन्द्रो वृत्रमहन्तं वृत्रो हतः षोडशभिर्भोगैरसिनात्तस्य वृत्रस्य शीर्षतो गाव उदायन्ता वैदेह्योऽभवन्तासामृषभो जघनेऽनुदैत्तमिन्द्रः ( ५ ) अचायत्सोऽमन्यत यो वा इममालभेत मुच्येताऽस्मात्पाप्मन इति स आग्नेयं कृष्णग्रीवमाऽलभतैन्द्रमृषभं तस्याग्निरेव स्वेन भागधेयेनोपसृतः षोडशधा वृत्रस्य भोगानप्यदहदैन्द्रेणेन्द्रियमात्मन्नधत्त यः पाप्मना गृहीतः स्यात्स आग्नेयं कृष्णग्रीवमा लभेतैन्द्रमृषभमग्निरेवास्य स्वेन भागधेयेनोपसृतः ( ६ ) पाप्मानमपि दहत्यैन्द्रेणेन्द्रियमात्मन्धत्ते मुच्यते पाप्मनो भवत्येव द्यावापृथिव्यां धेनुमा लभेत ज्योगपरुद्धोऽनयोर्हि वा एषोऽप्रतिष्ठितोऽथैष ज्योगपरुद्धो द्यावापृथिवी एव स्वेन भागधेयेनोप धावति ते एवैनं प्रतिष्ठां गमयतः प्रत्येव तिष्ठति पर्यारिणी भवति पर्यारीव ह्येतस्य राष्ट्रं यो ज्योगपरुद्धः समृद्ध्यै वायव्यम् ( ७ ) वत्समा लभेत वायुर्वा अनयोर्वत्स इमे वा

एतस्मै लोका अपंशुष्का विडपंशुष्काऽथैष ज्योगपंरुद्धो वायुमेव स्वेन भाग॒धेये॒नोप॑ धावति स एवास्मा इमाँल्लोँकान्विशं प्र दा॑पयति प्रास्मा इमे लोकाः स्नुवन्ति भुञ्जत्येनं विडुपं तिष्ठते ( ८ ) ॥

( मध्यंदिने कद्रुं यमस्य स्पर्धमानो वेष्णावरुणीं तमिन्द्रोऽस्य स्वेनं भाग-
धेयेनोपंभृतो वायव्यं द्विचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ द्वितीयाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

---

असौ । आदित्यः । न । वीति । अरोचत । तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन् । तस्मै । एताम् । दशर्षभामिति दश—ऋषभाम् । एति । अलभन्त । तया । एव । अस्मिन् । रुचम् । अदधुः । यः । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस—कामः । स्यात् । तस्मै । एताम् । दशर्षभामिति दश—ऋषभाम् । एति । लभेत । अमुम् । एव । आदित्यम् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । दधाति । ब्रह्मवर्चसीति ब्रह्म—वर्चसी । एव । भव-

ति। वसन्ता। प्रातः। त्रीन्। ललामान्। एति। लभेत। ग्रीष्मे। मध्यंदिने (१)। त्रीन्। शितिपृष्ठानिति शिति—पृष्ठान्। शरदि। अपराह्ण इत्यपर—अह्णे। त्रीन्। शितिवारानिति शिति—वारान्। त्रीणि। वै। आदित्यस्य। तेजांसि। वसन्ता। प्रातः। ग्रीष्मे। मध्यंदिने। शरदि। अपराह्ण इत्यपर—अह्णे। यावन्ति। एव। तेजांसि। तानि। एव। अवेति। रुन्धे। त्रयंत्रय इति त्रयः—त्रयः। एति। लभ्यन्ते। अभिपूर्वमित्यभि—पूर्वम्। एव। अस्मिन्। तेजः। दधाति। संवत्सरमिति सं—वत्सरम्। पर्यालभ्यन्त इति परि—आलभ्यन्ते। संवत्सर इति सं—वत्सरः। वै। ब्रह्मवर्चसस्येति ब्रह्म—वर्चसस्य। प्रदातेति प्र—दाता। संवत्सर इति सं—वत्सरः। एव। अस्मै। ब्रह्मवर्चसमिति ब्रह्म—वर्चसम्। प्रेति। यच्छति। ब्रह्मवर्चसीति ब्रह्म—वर्चसी। एव। भवति। संवत्सरस्येति सं—वत्सरस्य। परस्तात्। प्राजापत्यमिति प्राजा—पत्यम्। कद्रुम् (२)। एति। लभेत। प्रजापतिरिति प्रजा—पतिः। सर्वाः। देवताः। देवतासु। एव। प्रतीति। तिष्ठति। यदि। विभीयात्। दुश्चर्मेति दुः—चर्मा। भवि-

ष्यामि । इति । सोमापौष्णमिति सोमा—पौष्णम् ।
श्यामम् । एति । लभेत । सौम्यः । वै । देवतया ।
पुरुषः । पौष्णाः । पशवः । स्वया । एव । अस्मै ।
देवतया । पशुभिरिति पशु—भिः । त्वचम् । करोति।
न । दुश्चर्मेति दुः—चर्मा । भवति । देवाः । च । वै ।
यमः । च । अस्मिन् । लोके । अस्पर्धन्त । सः ।
यमः । देवानाम् । इन्द्रियम् । वीर्यम् । अयुवत ।
तत् । यमस्य (३) । यमत्वमिति यम—त्वम् ।
ते । देवाः । अमन्यन्त । यमः । वै । इदम् । अभूत् ।
यत् । वयम् । स्मः । इति । ते । प्रजापतिमिति
प्रजा—पतिम् । उपेति । अधावन् । सः । एतौ ।
प्रजापतिरिति प्रजा—पतिः । आत्मनः । उक्षवशा-
वित्युक्ष—वशौ । निरिति । अमिमीत । ते । देवाः ।
वैष्णावरुणीमिति वैष्णा—वरुणीम् । वशाम् । एति ।
अलभन्त । ऐन्द्रम् । उक्षाणम् । तम् । वरुणेन ।
एव । ग्राहयित्वा । विष्णुना । यज्ञेन । प्रेति । अनु-
दन्त । ऐन्द्रेण । एव । अस्य । इन्द्रियम् । अवृञ्जत ।
यः । भ्रातृव्यवानिति भ्रातृव्य—वान् । स्यात् ।
सः । स्पर्धमानः । वैष्णावरुणीमिति वैष्णा—वरु-
णीम् (४) । वशाम् । एति । लभेत । ऐन्द्रम् ।

उक्षाणम् । वरुणेन । एव । भ्रातृव्यम् । ग्राहयित्वा । विष्णुना । यज्ञेन । प्रति । नुदते । ऐन्द्रेण । एव । अस्य । इन्द्रियम् । वृङ्क्ते । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । इन्द्रः । वृत्रम् । अहन् । तम् । वृत्रः । हतः । षोडशभिरिति षोडश–भिः । भोगैः । असिनात् । तस्य । वृत्रस्य । शीर्षतः । गावः । उदिति । आयन् । ताः । वैदेह्यः । अभवन् । तासाम् । ऋषभः । जघने । अनु । उदिति । ऐत् । तम् । इन्द्रः ( ५ ) । अचायत् । सः । अमन्यत । यः । वै । इमम् । आलभेतेत्या–लभेत । मुच्येत । अस्मात् । पाप्मनः । इति । सः । आग्नेयम् । कृष्णग्रीवमिति कृष्ण–ग्रीवम् । एति । अलभत । ऐन्द्रम् । ऋषभम् । तस्य । अग्निः । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपसृत इत्युप–सृतः । षोडशधेति षोडश–धा । वृत्रस्य । भोगान् । अपीति । अदहत् । ऐन्द्रेण । इन्द्रियम् । आत्मन् । अधत्त । यः । पाप्मना । गृहीतः । स्यात् । सः । आग्नेयम् । कृष्णग्रीवमिति कृष्ण–ग्रीवम् । एति । लभेत । ऐन्द्रम् । ऋषभम् । अग्निः । एव । अस्य । स्वेन । भागधेयेनेति भाग–धेयेन ।

उपसृत इत्युप—सृतः (६) । पाप्मनाम् । अपीति । दहति । ऐन्द्रेण । इन्द्रियम् । आत्मन् । धत्ते । मुच्यते । पाप्मनः । भवति । एव । द्यावापृथिव्यामिति द्यावा—पृथिव्याम् । धेनुम् । एति । लभेत । ज्योगपरुद्ध इति ज्योक्—अपरुद्धः । अनयोः । हि । वै । एषः । अप्रतिष्ठित इत्यप्रति—स्थितः । अथ । एषः । ज्योक् । अपरुद्ध इत्यप—रुद्धः । द्यावापृथिवी इति द्यावा—पृथिवी । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । ते इति । एव । एनम् । प्रतिष्ठामिति प्रति—स्थाम् । गमयतः । प्रतीति । एव । तिष्ठति । पर्यारिणी । भवति । पर्यारि । इव । हि । एतस्य । राष्ट्रम् । यः । ज्योगपरुद्ध इति ज्योक्—अपरुद्धः । समृद्ध्या इति सम्—ऋद्ध्यै । वायव्यम् ( ७ ) । वत्सम् । एति । लभेत । वायुः । वै । अनयोः । वत्सः । इमे । वै । एतस्मै । लोकाः । अपशुष्का इत्यप—शुष्काः । विट् । अपशुष्केत्यप—शुष्का । अथ । एषः । ज्योक् । अपरुद्ध इत्यप—रुद्धः । वायुम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मै । इमान् । लोकान् । विशं-

म् । प्रेति॑ । दा॒पय॒ति॒ । प्रेति॑ । अ॒स्मै॒ । इ॒मे । लो॒काः । स्नु॒वन्ति॒ । भु॒ञ्ज॒ती । ए॒न॒म् । विट् । उ॒पेति॑ । ति॒ष्ठ॒ते॒ ( ८ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ द्वितीयकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

---

स्पर्धाकामो युद्धकामो ग्रामकामोऽन्नकामवान् ।
राज्यकामः प्रतिष्ठार्थी यः पापक्षयमिच्छति ॥
राज्यार्थी च पुमांसो ये तेषां पशव ईरिताः ॥ १ ॥

तृतीयानुवाके जयकामादीनां पशून्विधाय चतुर्थे ब्रह्मवर्चसकामादीनां पशून्विधित्सुरादौ ब्रह्मवर्चसकामाय विधातुं प्रस्तौति—

अमावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन्तस्मा एतां दशर्षभामाऽलभन्त तयैवास्मिन्रुचमदधुः, इति ।

पूर्वमेवोक्तोऽप्यादित्यस्य दीप्त्यभावः कालविशेषेणात्रापि प्रतीकारान्तरं दर्शयितुं पुनरुच्यते । दशानामृषभाणां समाहारो दशर्षभा । कर्मनामधेयमिति केचित्, तत्तु नात्यन्तयुक्तिसहम्, आलभन्तेत्यस्यानन्वयप्रसङ्गात् ॥

विधत्ते—

यो ब्रह्मवर्चसकामः स्यात्तस्मा एतां दशर्षभामा लभेतामुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति , इति ।

अमुमेवाऽऽदित्यमित्यर्थवादे श्रुतत्वादादित्योऽस्मिन्कर्मणि देवता ॥

---

१ ख च 'रोऽस्यामिति द'।

तत्रैव कालविशेषसहितं पशुगुणविशेषं विधत्ते—

वसन्ता प्रातस्त्रीन्ललामाना लभेत ग्रीष्मे मध्यंदिने त्रीञ्छितिपृष्ठाञ्छरद्यपराह्णे त्रीञ्छितिवारान्, इति।

शितिपृष्ठाः श्वेतपृष्ठाः। शितिवाराः श्वेतवालाः॥

पूर्ववत्कालविशेषं प्रशंसति—

त्रीणि वा आदित्यस्य तेजा॑ꣳसि वसन्ता प्रातर्ग्रीष्मे मध्यंदिने शरद्यपराह्णे यावन्त्येव तेजा॑ꣳसि तान्येवाव रुन्धे, इति॥

विहितानेव त्रित्वोपेतान्संघान्प्रशंसति—

त्रयस्त्रय आ लभ्यन्तेऽभिपूर्वमेवास्मिन्तेजो दधाति, इति।

पूर्वं वसन्ते यथा त्रित्वोपेतास्तथा ग्रीष्मशरदोरपि त्रित्वोपेतत्वे सति पूर्वसादृश्यं संपद्यते। तद्वदस्मिन्यजमानेऽप्यभिपूर्वं पूर्वपूर्वसादृश्येनैवोत्तरोत्तरकालेऽपि तेजो विधत्ते, न तु कदाचिदपि तेजो हीयत इत्यर्थः॥

आग्नेयकृष्णग्रीवादिष्विव ब्रह्मचर्यादिनियमकालं विधत्ते—

संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति, इति॥

दशमस्यर्षभस्य देवताकालवर्णविशेषान्विधत्ते—

संवत्सरस्य परस्तात्प्राजापत्यं कद्रुमा लभेत प्रजापतिः सर्वा देवता देवतास्वेव प्रति तिष्ठति, इति।

कद्रुः पिङ्गलः। प्रजापतेरुत्पादकत्वेन सर्वदेवता[ त्म ]कत्वम्॥

त्वग्दोषनिवारणाय पशुं विधत्ते—

यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमा-

(ब्रह्मवर्चसकामादीनां पशुविधिः)

पौष्णꣳ श्याममा लभेत सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवास्मै देवतया पशुभिस्त्वच करोति न दुश्चर्मा भवति, इति।

कण्डूल्यादिविशेषलिङ्गेन भाविकुष्ठरोगमनुमाय भीतस्यायं पशुः। पुरुषस्य सोमदेवताकत्वं पशूनां पौष्णत्वं च सोमापूषविषययाज्याव्याख्याप्रसङ्गेन दर्शितम्॥

भ्रातृव्यवतो द्विपशुकं कर्म विधातुं प्रस्तौति—

देवाश्च वै यमश्चास्मिँल्लोकेऽस्पर्धन्त स यमो देवानामिन्द्रियं वीर्यमयुवत तद्यमस्य यमत्वं ते देवा अमन्यन्त यमो वा इदमभूद्यद्वयꣳ स्म इति ते प्रजापतिमुपाधावन्त्स एतौ प्रजापतिरात्मन उक्षवशौ निरमिमीत ते देवा वैष्णावरुणीं वशामाऽलभन्तैन्द्रमुक्षाणं तं वरुणेनैव ग्राहयित्वा विष्णुना यज्ञेन प्राणुदन्तैन्द्रेणैवास्येन्द्रियमवृञ्जत, इति।

अयुवत देवेभ्यः पृथक्कृतवान्। अतो यवनामकोऽयं वर्णव्यत्ययेन यमः संपन्नः। इन्द्रियगते वीर्येऽपगते सति देवाः परस्परमिदमब्रुवन्—पूर्वं यद्भूलोकाधिपत्यं प्राप्य वयं स्मस्तदिदं प्राप्य यम एवाभूत्। उक्षा सेचनसमर्थो वत्सोत्पादकः। वशा वन्ध्या, लिङ्गव्यत्ययो द्रष्टव्यः। तं यमं वरुणपाशेनैव ग्राहयित्वा यज्ञरूपेण विष्णुना निष्कासितवन्तः। इन्द्रप्रसादेनास्य यमस्य वीर्यं नाशितवन्तः॥

विधत्ते—

यो भ्रातृव्यवान्त्स्यात्स स्पर्धमानो वैष्णावरुणीं वशामा लभेतैन्द्रमुक्षाणं वरुणेनैव भ्रातृव्यं ग्राहयित्वा विष्णुना यज्ञेन प्र णुदत ऐन्द्रेणैवास्येन्द्रियं वृङ्क्ते भवत्यात्मना परास्य भ्रातृव्यो भवति, इति।

आत्मना स्वेन रूपेण यजमानो विजयी भवति । अस्य भ्रातृव्यः पराभवति ।

पापविमुक्तिकामस्य द्विपशुकं कर्म विधातुं प्रस्तौति—

इन्द्रो वृत्रमहन्तं वृत्रो हतः षोडशभिर्भो-
गैरसिनात्तस्य वृत्रस्य शीर्षतो गाव उदायन्ता
वैदेह्योऽभवन्तासामृषभो जघनेऽनूदैत्तमिन्द्रोऽ-
चायत्सोऽमन्यत यो वा इममालभेत
मुच्येतास्मात्पाप्मन इति स आग्नेयं
कृष्णग्रीवमाऽलभतैन्द्रमृषभं तस्याग्निरेव स्वेन
भागधेयेनोपसृतः षोडशधा वृत्रस्य
भोगानप्यदहदैन्द्रेणेन्द्रियमात्मन्नधत्त , इति ।

तमिन्द्रं भोगैः शरीरैरसिनादवध्नाद्धनाद्वृत्रादुत्पन्नानि क्रोधाविष्टानि षोडश शरीराणि परितो वेष्टयित्वा स्थितानि, स च वृत्रः सर्पाकारैस्तैः शरीरैस्तमिन्द्रं रज्जुभिरिव बबन्ध । ततस्तस्य वृत्रस्य शीर्षतः काश्चिद्गाव उत्पन्नाः। ताश्च गावो विशिष्टदेहसंबन्धिन्योऽभवन् । तासां गवां जघने पृष्ठभागे कश्चिदृषभोऽनुगम्योदगच्छत् । तमृषभमुद्दिश्येन्द्रोऽचायत्स्वात्मानं पूजितवान् , अहो मदीयं कार्यं संपन्नमिति । ततः स इन्द्रो मनसा व्यचारयत् । किमिति, यः कोऽपीममृषभमालभेत देवतोद्देशेन हिंस्यात्स ईदृशाद्बन्धनादिरूपात्पाप्मनो मुच्येतेति । एवं विचार्य द्विपशुकं कर्म कृतवान् । तस्येन्द्रस्य संबन्धिना स्वभागेन तुष्टोऽग्निः सर्पाकाराणि षोडश शरीराणि तं वृत्रमप्यदहत् । तत ऐन्द्रयागेन(ण) सामर्थ्यमिन्द्रः स्वात्मन्यधत्त ॥

अथ विधत्ते—

यः पाप्मना गृहीतः स्यात्स आग्नेयं कृष्ण-
ग्रीवमा लभेतैन्द्रमृषभमग्निरेवास्य स्वेन भाग-
धेयेनोपसृतः पाप्मानमपि दहत्यैन्द्रेणेन्द्रिय-
मात्मन्धत्ते मुच्यते पाप्मनो भवत्येव, इति ।

चिरं राज्यभ्रष्टस्य पशुं विधत्ते—

द्यावापृथिव्यां धेनुमालभेत ज्योगप-

रुद्धोऽनयोर्हि वा एषोऽप्रतिष्ठितोऽथैष ज्योगपरुद्धो द्यावापृथिवी एव स्वेन भागधेयेनोप धावति ते एवैनं प्रतिष्ठां गमयतः प्रत्येव तिष्ठति, इति।

ज्योगपरुद्धश्चिरं राज्यभ्रष्टः। यस्तु प्रजापालनस्याभावादस्मिँल्लोके न प्रतितिष्ठति, वैदिककर्मानुष्ठानाभावात्स्वर्गेऽपि न प्रतितिष्ठति, तदानीं सोऽत्र ज्योगपरुद्ध इत्युच्यते। तस्य द्यावापृथिव्योः परितोषादुभयत्र प्रतिष्ठा संपद्यते॥

धेनोः कंचिद्गुणं विधत्ते—

पर्यारिणी भवति पर्यारीव ह्येतस्य राष्ट्रं यो ज्योगपरुद्धः समृद्ध्यै, इति।

या गौर्गर्भिणी सती प्राप्ते प्रसवकाले परित्यज्य चिरं गर्भं धृत्वा पश्चात्प्रसूते सा पर्यारिणी। तथा च सूत्रकारः—"पर्यारिणीति परिहारसूर्भवति" इति। यो ज्योगपरुद्ध एतस्य राष्ट्रं पर्यारीव भवति, भोगकाले चिरमतीत्य पश्चात्प्राप्यमाण(ण)त्वात्। अतः सदृशयोगः समृद्ध्यै भवति॥

ज्योगपरुद्धस्यैव धेनुप्रयोगादूर्ध्वं वत्सप्रयोगं विधत्ते—

वायव्यं वत्समा लभेत वायुर्वा अनयोर्वत्स इमे वा एतस्मै लोका अपशुष्का विडपशुष्काऽथैष ज्योगपरुद्धो वायुमेव स्वेन भागधेयेनोप धावति स एवास्मा इमाँल्लोकान्विशं प्र दापयति प्रास्मा इमे लोकाः स्नुवन्ति भुञ्जत्येन विडुप तिष्ठते॥, इति॥

यथा वत्सो धेनोः समीप एव संचरति तथा वायुरपि द्यावापृथिव्योः संचरतीति तद्वत्सत्वम्। अत एव द्यावापृथिव्यधेनुप्रयोगसमीपे तदीयवत्सप्रयोगो युज्यते। यदा लोकाः प्रजा चैतस्मै राज्ञेऽपशुष्का अपरक्ता भवन्ति तदानीमेवैष ज्योगपरुद्धो भवति। लोकशब्देन तत्र तत्र प्रभुत्वेन स्थिता ग्रामण्यादयो मुख्यपुरुषा उच्यन्ते, अवशिष्टा सर्वा प्रजा विट्शब्देन। वत्सेन

१ ख. 'णी प'। २ घ. ङ. च. 'द्यात्मोयमा'।

तुष्टो वायुर्लोकान्प्रजां च प्रदापयत्यनुरक्तान्करोति । ते च लोका अस्मै स्नुवन्ति मणिमुक्तादिधनं प्रस्नावयन्ति बाहुल्येन प्रयच्छन्तीत्यर्थः । प्रजा चैनं भुञ्जती पालयन्ती सेवते ॥

अत्र मीमांसा ।

अष्टमाध्यायस्य प्रथमपादे चिन्तितम्—

" ललामादिगणे दैक्षादैकादशिनतोऽथ वा ।
आद्यो विशेषराहित्यान्न गणत्वविशेषतः ॥ "

काम्यपशुकाण्डे पशुगणः श्रूयते–"वसन्ते ललामांस्त्रीन्वृषभानालभेत" इति । तत्र श्मशानाद्ययादिविशेषलिङ्गाभावाद्दैक्षादग्नीषोमीयाद्धर्मातिदेश इति चेत् । न । गणत्वेन विशेषलिङ्गेनैकादशिनेभ्योऽतिदेशात् । ऐकादशिनानां पशुगणप्रकृतित्वं लिङ्गादवगम्यते । तथा हि सौत्रामण्यां पशुगणं प्रकृत्यैवमाम्नायते— " यत्रिषु यूपेष्वालभेत । बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात् । भ्रातृव्यमस्मै जनयेत् । एकयूप आलभते " इति । यद्यत्राग्नीषोमीयः प्रकृतिः स्यात्तदा चोदकादेकस्यैव यूपस्य प्राप्तत्वेन यूपत्रयप्रसक्त्यभावात्तदुपन्यासेन दोषाभिधानं पुनरेकयूपविधानं च व्यर्थं स्यात् । ऐकादशिनानां प्रकृतित्वे तु प्रतिपशु पृथग्यूपातिदेशेन प्रसक्तिसद्भावात्तदुपपद्यत । तस्मात्पशुगणेष्वैकादशिनेभ्योऽतिदेशः ॥

दशमाध्यायस्य द्वितीयपादे चिन्तितम्—

" धेनुवत्सर्षभाश्छागे गवि वा गुणकीर्तनात् ।
अजेऽतिदिष्टे स्युर्मैवं गोजात्येकगुणोक्तितः ॥ "

पशुविकृतिषु श्रूयते—" द्यावापृथिव्यां धेनुमालभेत मारुतं वत्समैन्द्रमृषभम् " इति । तत्र धेनुशब्दो नवसूतिकामाचष्टे । वत्सशब्दो बालम् । ऋषभशब्दः पुमांसम् । तथा सति गुणवाचिन एते शब्दा अतिदिष्टमजद्रव्यमबाधित्वा तदेव द्रव्यं यथोक्तगुणविशिष्टं वदन्ति । गौस्तु न प्रत्यक्षमिह श्रूयते नाप्यतिदिश्यते प्रकृतावनुपदिष्टत्वात् । अतो न गां विशिषन्तीति पूर्वपक्षः । न खल्वेते यथोक्तगुणसामान्यवाचिनः, किं तर्हि गोगतानेव तान्गुणानाहुः । अतस्ते शब्दा अजेऽनुपपन्नाः सन्तोऽनुपदिष्टमनतिदिष्टमपि गां मुख्यवृत्त्या विशिंषन्तश्छागं बाधन्त इति राद्धान्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके
चतुर्थोऽनुवाकः ॥ ४ ॥

( अथ द्वितीयाष्टकेऽष्टमप्रपाठके प्रथमोऽनुवाकः । )

इन्द्रो॑ व॒लस्य॒ बिल॒मपौ॑र्णो॒त्स य उ॑त्त॒मः प॒शुरासी॒त्तं पृ॒ष्ठं प्रति॑ सं॒गृह्योद॑क्खिद॒त्तꣳ स॒हस्रं॑ प॒शवोऽनूदा॑य॒न्त्स उ॒न्नतो॑ऽभव॒द्यः प॒शु॒का॑मः॒ स्यात्स ए॒तमै॒न्द्रमु॒न्नत॒मा ल॑भेते॒न्द्रमे॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वास्मै॑ प॒शून्प्र य॑च्छति पशु॒माने॒व भ॑वत्यु॒न्नतः॑ ( १ ) भवति साह॒स्री वा ए॒षा ल॒क्ष्मी यदु॒न्नतो॑ ल॒क्ष्मिये॒व प॒शून॑व रु॒न्धे य॒दा स॒हस्रं॑ प॒शून्प्रा॒प्नुया॒दथ॑ वैष्ण॒वं वा॑मन॒मा ल॑भेतै॒तस्मि॒न्वै तत्स॒हस्र॒म॒ध्यति॑ष्ठ॒त्तस्मा॑दे॒ष वा॑म॒नः सम॑ीषितः प॒शुभ्य॑ ए॒व प्रजा॑तेभ्यः प्रति॒ष्ठां द॑धाति॒ कोऽर्ह॑ति स॒हस्रं॑ प॒शून्प्रा॒प्तुमि॑त्या॒हुर॑होरा॒त्राण्ये॒व स॒हस्र॒ꣳ॒ सं॒पाद्याऽऽ ल॑भेत प॒शवः॑ ( २ ) वा अ॑होरा॒त्राणि॑ प॒शूने॒व प्रजा॑ता॒न्प्रति॒ष्ठां ग॑मय॒त्योष॑धीभ्यो वे॒हत॒मा ल॑भेत प्र॒जाका॑म॒ ओष॑धयो॒ वा ए॒तं प्र॒जायै॒ परि॑ बाधन्ते॒ यो॑ऽलं॑ प्र॒जायै॒ सन्प्र॒जां न वि॒न्दत॒ ओष॑धयः॒ खलु॒ वा ए॒तस्यै॒ सूतु॒मपि॑ घ्नन्ति॒ या वे॒हद्भव॒त्योष॑धीरे॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ ता ए॒वास्मै॒ स्वाद्योने॑ः

प्रजां प्र जनयन्ति विन्दते ( ३ ) प्रजामापो वा ओषधयोऽसत्पुरुष आप एवास्मा असतः सद्ददति तस्मादाहुर्यश्चैवं वेद यश्च नाऽऽप-स्त्वावासतः सद्ददतीत्यैन्द्रीः सूतवशामा लभेत भूतिकामोऽजातो वा एष योऽलं भूत्यै सन्भूतिं न प्राप्नोतीन्द्रं खलु वा एषा सूत्वा वशाऽभवत् ( ४ ) इन्द्रमेव स्वेन भागधेये-नोप धावति स एवैनं भूतिं गमयति भवत्येव यः सूत्वा वशा स्यात्तमैन्द्रमेवाऽऽ लभेतैतद्वाव तदिन्द्रियः साक्षादेवेन्द्रियमव रुन्ध ऐन्द्राग्नं पुनरुत्सृष्टमा लभेत य आ तृतीयात्पुरुषा-त्सोमं न पिबेद्विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन्ना ( ५ ) तृतीयात्पुरुषात्सोमं न पिबतीन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मै सोमपीथं प्र यच्छत उपै-नः सोमपीथो नमति यदैन्द्रो भवतीन्द्रियं वै सोमपीथ इन्द्रियमेव सोमपीथमव रुन्धे यदा-ग्नेयो भवत्याग्नेयो वै ब्राह्मणः स्वामेव देवतामनु सं तनोति पुनरुत्सृष्टो भवति पुनरुत्सृष्ट इव ह्येतस्य ( ६ ) सोमपीथः समृद्ध्यै ब्राह्मण-

स्पर्त्यं तूपरमा लभेताभिचरन्ब्रह्मणस्पतिमेव स्वेनं भागधेयेनोपं धावति, तस्मां एवैनमा वृश्चति ताजगार्तिमार्छति तूपरो भवति क्षुरपंविर्वा एषा लक्ष्मी यत्तूपरः समृद्ध्यै स्फयो यूपो भवति वज्रो वै स्फयो वज्रमेवास्मै प्र हरति शरमयं बर्हिः शृणात्येवैनं वैभीदक इध्मो भिनत्त्येवैनम् ( ७ ) ॥

( भवत्युन्नतः पशवो जनयन्ति विन्दतेऽभवत्समैतस्येध्मश्चीणि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

( अथ द्वितीयाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः । )

इन्द्रः । वलस्यं । बिलम् । अपेति । और्णोत् । सः । यः । उत्तम इत्युंत्—तमः । पशुः । आसीत् । तम् । पृष्ठम् । प्रतीति । संगृह्येति सं—गृह्य । उदिति । अखिदत् । तम् । सहस्रम् । पशवः । अनुं । उदिति । आयन् । सः । उन्नत इत्युंत्—नतः । अभवत् । यः । पशुकाम इति पशु—कामः । स्यात् । सः । एतम् । ऐन्द्रम् । उन्नतमित्युंत्—नतम् । एतिं । लभेत । इन्द्रम् । एव । स्वेनं । भागधेयेनेतिं भाग—

धैर्येन । उपेति । धावति । सः । एव । अस्मै । पशून् । प्रेति । यच्छति । पशुमानिति पशु—मान् । एव । भवति । उन्नत इत्युत्—नतः ( १ )। भवति । साहस्री । वै । एषा । लक्ष्मी । यत् । उन्नत इत्युत्—नतः । लक्ष्मियां । एव । पशून् । अवेति । रुन्धे । यदा । सहस्रम् । पशून् । प्राप्नुयादिति प्र—आप्नुयात् । अथ । वैष्णवम् । वामनम् । एति । लभेत । एतस्मिन् । वै । तत् । सहस्रम् । अधीति । अतिष्ठत् । तस्मात् । एषः । वामनः । समीषित इति सम्—ईषितः । पशुभ्य इति पशु—भ्यः । एव । प्रजातेभ्य इति प्र—जातेभ्यः । प्रतिष्ठामिति प्रति—स्थाम् । दधाति । कः । अर्हति । सहस्रम् । पशून् । प्राप्तुमिति प्र—आप्तुम् । इति । आहुः । अहोरात्राणीत्यहः—रात्राणि । एव । सहस्रम् । संपाद्येति सं—पाद्य । एति । लभेत । पशवः ( २ ) । वै । अहोरात्राणीत्यहः—रात्राणि । पशून् । एव । प्रजातानिति प्र—जातान् । प्रतिष्ठामिति प्रति—स्थाम् । गमयति । ओषधीभ्य इत्योषधि—भ्यः । वेहतम् । एति । लभेत । प्रजाकाम इति प्रजा—कामः । ओषधयः । वै । एतम् । प्रजाया इति प्र—जायै । परीति । बाधन्ते । यः ।

अलम्। प्रजाया इति प्र—जायै । सन् । प्रजामिति प्र—जाम् । न । विन्दते । ओषधयः । खलु । वै । एतस्यै । सूतुम् । अपीति । घ्नन्ति । या । वेहत् । भवति । ओषधीः । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । ताः । एव । अस्मै । स्वात् । योनेः । प्रजामिति प्र—जाम् । प्रेति । जनयन्ति । विन्दते ( ३ ) । प्रजामिति प्र—जाम् । आपः । वै । ओषधयः । असत् । पुरुषः । आपः । एव । अस्मै । असतः । सत् । ददति । तस्मात् । आहुः । यः । च । एवम् । वेद । यः । च । न । आपः । तु । वाव । असतः । सत् । ददति । इति । ऐन्द्रीम् । सूतवशामिति सूत—वशाम् । एति । लभेत । भूतिकाम इति भूति—कामः । अजातः । वै । एषः । यः । अलम् । भूत्यै । सन् । भूतिम् । न । प्राप्नोतीति प्र—आप्नोति । इन्द्रम् । खलु । वै । एषा । सूत्वा । वशा । अभवत् ( ४ ) । इन्द्रम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । एनम् । भूतिम् । गमयति । भवति । एव । यम् । सूत्वा । वशा । स्यात् । तम् । ऐन्द्रम् । एव ।

एति । लभेत । एतत् । वाव । तत् । इन्द्रियम् । साक्षादिति स—अक्षात् । एव । इन्द्रियम् । अवेति । रुन्धे । ऐन्द्राग्नमित्यैन्द्र—अग्नम् । पुनरुत्सृष्टमिति पुनः—उत्सृष्टम् । एति । लभेत । यः । एति । तृतीयात् । पुरुषात् । सोमम् । न । पिबेत् । विच्छिन्न इति वि—छिन्नः । वै । एतस्य । सोमपीथ इति सोम—पीथः । यः । ब्राह्मणः । सन् । एति(५)। तृतीयात् । पुरुषात् । सोमम् । न । पिबति । इन्द्राग्नी इतीन्द्र—अग्नी । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । तौ । एव । अस्मै। सोमपीथमिति सोम—पीथम् । प्रेति । यच्छतः । उपेति । एनम् । सोमपीथ इति सोम—पीथः । नमति । यत् । ऐन्द्रः । भवति । इन्द्रियम् । वै । सोमपीथ इति सोम—पीथः । इन्द्रियम् । एव । सोमपीथमिति सोम—पीथम् । अवेति । रुन्धे । यत् । आग्नेयः । भवति । आग्नेयः । वै । ब्राह्मणः । स्वाम् । एव । देवताम् । अनु । समिति । तनोति । पुनरुत्सृष्ट इति पुनः—उत्सृष्टः । भवति । पुनरुत्सृष्ट इति पुनः—उत्सृष्टः । इव । हि । एतस्य (६) । सोमपीथ इति सोम—पीथः । समृद्ध्या

इति सम्—ऋद्ध्यै। ब्राह्मणस्पत्यमिति ब्राह्मणः—पत्यम्। तूपरम्। एति। लभेत। अभिचरन्नित्यभि—चरन्। ब्रह्मणः। पतिम्। एव। स्वेन। भागधेयेनेति भाग—धेयेन। उपेति। धावति। तस्मै। एव। एनम्। एति। वृश्चति। ताजक्। आर्तिम्। एति। ऋच्छति। तूपरः। भवति। क्षुरपविरिति क्षुर—पविः। वै। एषा। लक्ष्मी। यत्। तूपरः। समृद्ध्या इति सम्—ऋद्ध्यै। स्फ्यः। यूपः। भवति। वज्रः। वै। स्फ्यः। वज्रम्। एव। अस्मै। प्रेति। हरति। शरमयमिति शर—मयम्। बर्हिः। शृणाति। एव। एनम्। वैभीदकः। इध्मः। भिनत्ति। एव। एनम् (७)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

( अथ द्वितीयकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः। )

ब्रह्मवर्चसकामो यश्चमंदोपाद्विभेति यः।
भ्रातृव्यवान्पापभीरुर्भ्रष्टराज्यश्च यो भवेत् ॥ १ ॥
अनुवाके चतुर्थेऽस्मिन्नेतेषां पशवः श्रुताः ॥ २ ॥

अथ पञ्चमे पशुकामादीनां पशवो वक्तव्याः।
तत्रैवं विधातुं प्रस्तौति—

इन्द्रो वलस्य बिलमपौर्णोत्स य उत्तमः पशु-

१ ख °त्रैक वि°।

रासीत्तं पृष्ठं प्रति संगृह्योदक्खिदत्तं सहस्रं पशवोऽनूदायन्त्स उन्नतोऽभवत् , इति।

वलनामकः कश्चिदसुरस्तस्करो भूत्वा यतस्ततो बहून्पशूनपहृत्य कस्मिंश्चिद्बिले स्थापयामास। तं च वृत्तान्तमवगत्येन्द्रो बिलमपोर्णोत्, द्वारपिधानाय प्रक्षिप्तं पाषाणमपनीतवान्। तत्र य उत्तमः पशुस्तं पशुं पृष्ठं प्रति पृष्ठदेशे पृष्ठमूलमवलम्ब्योदक्खिददुत्क्षिप्तवान्। तस्य पशोर्यूथपतित्वात्तमनु सहस्रं पशव उद्गतवन्तः। स च मुख्यः पशुर्यूथपतित्वेन पूर्वमेवोन्नतोऽपि पश्चादिन्द्रोत्क्षेपणेनात्यन्तमुन्नतोऽभवत्॥

विधत्ते—

यः पशुकामः स्यात्स एतमैन्द्रमुन्नतमा लभेतेन्द्रमेव स्वेन भागधेयेनोप धावति स एवास्मै पशून्प्र यच्छति पशुमानेव भवति , इति॥

पशोरौन्नत्यं प्रशंसति—

उन्नतो भवति साहस्री वा एषा लक्ष्मी यदुन्नतो लक्ष्मियैव पशूनव रुन्धे , इति।

उन्नत इति यत्, एषा साहस्री लक्ष्मी सहस्रस्य निमित्तभूता तत एव लक्ष्मी संपद्रूपा। तथा सत्युन्नतालम्भेन पशुसमृद्धिरूपया लक्ष्म्या युक्तस्तान्पशूनवरुन्धे॥

पूर्वत्र यथा धेनुमालब्धवतः पश्चाद्वत्सालम्भो विहित एवमत्राप्युन्नतमालब्धवतो वामनालम्भं विधत्ते—

यदा सहस्रं पशून्प्राप्नुयादथ वैष्णवं वामनमा लभेतैतस्मिन्वै तत्सहस्रमध्यतिष्ठत्तस्मादेष वामनः समीषितः पशुभ्य एव प्रजातेभ्यः प्रतिष्ठां दधाति , इति।

पशुकाम उन्नतमालभ्य तत्फलभूतान्पशून्प्राप्यैवं सहस्रप्राप्तेरूर्ध्वं वामनमालभेत। यस्मादेतस्मिन्वामने तदुन्नतं पशुसहस्रं लीलार्थमारोहति तस्मात्सहस्रपशुप्रियत्वादेव(ष) वामनो विष्णोः सम्यगपेक्षितः। एतस्याऽऽलम्भेन पूर्वमु-

१ ख. ङ. 'ष्ठे पुच्छम्'। २ क. 'प्नुयात्सह'।

( पशुकामादीनां पशुविधिः )

त्पन्नेभ्यः सहस्रपशुभ्यः पश्वर्थं प्रतिष्ठां तृणोदकसंपूर्णं निवासस्थानं कृतवा-न्भवति ॥

एतस्य वामनस्य सहस्रप्राप्तिकालादन्यं कालं विधत्ते—

कोऽर्हति सहस्रं पशून्प्राप्तुमित्याहुरहोरात्राण्येव सहस्रꣳ संपाद्याऽऽलभेत पशवो वा अहोरात्राणि पशूनेव प्रजातान्प्रतिष्ठां गमयति , इति ।

सहस्रप्राप्तिः प्रायेण दुर्लभा, विघ्नानां चोरव्याघ्रादिकृतानां बहुत्वात् । अतः पशुप्राप्तेरूर्ध्वं सहस्रदिनान्यतिवाह्याऽऽलभेत । पशवो हि क्षीरादिभोगार्थं संपाद्यन्ते । तत्रैकैकस्मिन्दिने तद्भोगप्रदानादेकैकः पशुरिति गणनायां सहस्रसंख्याकान्यहोरात्राण्येव सहस्रं पशवः संपद्यन्ते । ततः सहस्रदिनेभ्य ऊर्ध्वं वामनालम्भेन यावतां तावतां वा विद्यमानानां पशूनां प्रतिष्ठा संपादिता भवति ॥

प्रजाकामस्य पशुं विधत्ते—

ओषधीभ्यो वेहतमा लभेत प्रजाकाम ओषधयो वा एतं प्रजायै परि बाधन्ते योऽलं प्रजायै सन्प्रजां न विन्दत ओषधयः खलु वा एतस्यै सूतुमपि घ्नन्ति या वेहद्भवत्योषधीरेव स्वेन भागधेयेनोप धावति ता एवास्मै स्वाद्योनेः प्रजां प्र जनयन्ति विन्दते प्रजामापो वा ओषधयोऽसत्पुरुष आप एवास्मा असतः सद्ददति तस्मादाहुर्यश्चैवं वेद यश्च नाऽऽपस्त्वावासतः सद्ददतीति , इति ।

वेहतं गर्भविनाशिनीम् । यः प्रजोत्पादने समर्थोऽपि प्रजां न लभते एतं प्रजार्थमोषधिदेवताः परितो बाधन्ते । अतस्ताभ्य आलम्भो युक्तः । या गौर्गर्भनाशिनी भवत्येतस्याः सूतुं गर्भमोषधयोऽपि घ्नन्ति । अतस्ता एव प्रियाया

---

१ ग. न. नास्ति।

षेहत आलम्भेन तुष्टा ओषधयो यजमानार्थं स्वाग्नियजमानसंबन्धिवीर्यात्प्रजामुत्पादयन्ति स्वरेतसैव प्रयच्छन्ति, न तु क्षेत्रजपुत्रिकासुतादिकम्। ततोऽसावौरसीमेव प्रजां लभते। तां ओषधयो लोकप्रसिद्ध्या स्तूयन्ते। तत्र तावदाप एवौषधयोऽपामोपधिकारणत्वात्। पुरुषो यजमानस्योत्पद्यमानः पुत्रः। स चोत्पत्तेः प्रागसदित्युच्यते, स्वकारणभूतरेतोवस्थायामनभिव्यक्तत्वात्। तथा सत्यन्नरूपेण स्थिता ओषधय एव यजमानार्थमनभिव्यक्तशरीराकाराद्रेतसः सदभिव्यक्तशरीरं प्रयच्छन्ति। यस्मादेवं तस्मात्कारणादीदृशवृत्तान्ताभिज्ञास्तदनभिज्ञाश्च लौकिका एवमाहुः—आप एवास्मा असतः सद्ददतीति। तत्राभिज्ञा ओपधिदेवताकुर्वं यथोक्तं पुत्रप्रदानमभिलक्ष्यैवं वदन्ति। अनभिज्ञास्तु क्षेत्रेषु जलसंपत्त्या सस्यनिष्पत्तिमभिलक्ष्याऽऽप एवासतः सस्यरहितात्क्षेत्रात्सद्विद्यमानत्वेन भासमानं सस्यं ददतीत्याहुः। यद्यभिज्ञा ओषधीनां पुत्रप्रदत्वमाहुः, यदि वाऽनभिज्ञा अपां सस्यप्रदत्वमाहुः, सर्वथाऽपि प्रशस्तमेतौषधिविषयं कर्म ॥

भूतिकामस्य पशुं विधत्ते—

ऐन्द्रीꣳ सूतवशामा लभेत भूतिकामोऽजातो वा एष योऽलं भूत्यै सन्भूतिं न प्राप्नोतीन्द्रं खलु वा एषा सूत्वा वशाऽभवदिन्द्रमेव स्वेन भागधेयेनोप धावति स एवैनं भूतिं गमयति भवत्येव, इति।

सकृद्वत्समुत्पाद्य पश्चाद्वन्ध्या गौः सूतवशा। यो भूत्यै योग्योऽपि भूतिं न प्राप्नोति सोऽयमुत्पन्नोऽप्यनुत्पन्नसम एव। तस्मादयमालभेत। एषाऽपि सूतवशा प्रथममिन्द्रसमानं वत्समुत्पाद्य वन्ध्याऽभवत् ॥

इन्द्रस्य प्रियायाः सूतवशायाः प्रयोगादूर्ध्वं वत्सप्रयोगं विधत्ते—

यꣳ सूत्वा वशा स्यात्तमैन्द्रमेवाऽऽ लभेतैतद्वाव तदिन्द्रियꣳ साक्षादेवेन्द्रियमव रुन्धे, इति।

सूतवशाया वत्स इन्द्रसमानः। अत एवेन्द्रमातुः सूतवशारूपेण निष्पत्तिरेवमाम्नायते—"सोऽमन्यत यो वै मदितोऽपरो जनिष्यते स इदं भविष्यतीति

१ ख. तावोष'।

तस्या अनुसृत्य यानिमाच्छिनत्तस्मा सूतवशाऽभवत्तत्सूतवशायै जन्म" इति। तथा सति स्वसमानत्वेनेन्द्रमियं तमेनं वत्समैन्द्रमेवाऽऽलभेत । वत्सस्येन्द्रियकार्यत्वादैन्द्रत्वान्मुख्यमेवेन्द्रियमवरुन्धे ॥

विच्छिन्नसोमपीथस्य पशुं विधत्ते—

ऐन्द्राग्नं पुनरुत्सृष्टमा लभेत य आ तृतीयात्पुरुषात्सोमं न पिबेद्विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन्ना तृतीयात्पुरुषात्सोमं न पिबतीन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मै सोमपीथं प्र यच्छत उपैनꣳ सोमपीथो नमति , इति।

गालितवृषणो बलीवर्द उत्सृष्ट इत्युच्यते । स एव जीर्णो लाङ्गलवहनादेर्मुक्तः पुनरुत्सृष्टः। स्वात्मानमारभ्य तृतीयः पुरुषः पितामहः पिता स्वयं च यदा सोमं न पिबेयुस्तदानीमेतस्य त्रयस्य सोमपानं विच्छिन्नं, स एनं पशुमालभेत ॥

इन्द्रमग्निं च क्रमेण प्रशंसति—

यदैन्द्रो भवतीन्द्रियं वै सोमपीथ इन्द्रियमेव सोमपीथमव रुन्धे यदाग्नेयो भवत्याग्नेयो वै ब्राह्मणः स्वामेव देवतामनु सं तनोति , इति।

सोमपानस्येन्द्रियवृद्धिहेतुत्वादिन्द्रियरूपत्वम् ॥

पशुविशेषणं प्रशंसति—

पुनरुत्सृष्टो भवति पुनरुत्सृष्ट इव ह्येतस्य सोमपीथः समृद्ध्यै , इति।

प्रथमं पितामहेन सोमपीथ उत्सृष्टः, पुनः पित्रा, पुनरपि स्वेन, तत उक्तपशुसादृश्यात्तदालम्भः समृद्ध्यै संपद्यते ॥

अभिचरतः पशुं विधत्ते—

ब्राह्मणस्पत्यं तूपरमा लभेताभिचरन्ब्रह्मणस्प-

तिमेव स्वेन भागधेयेनोप धावति तस्मा
एवैनमा वृश्चति ताजगार्तिमार्छति , इति ।

स ब्रह्मणस्पतिस्तस्मा एव यजमानार्थमेवैनं वैरिणमावृश्चति समन्ताच्छिनत्ति, तदानीमेव वैरी मरणं प्राप्नोति ॥

पशुविशेषणं प्रशंसति—

तूपरो भवति क्षुरपविर्वा एषा
लक्ष्मी यत्तूपरः समृद्ध्यै , इति ।

तूपर इति यदेषा क्षुरपविः क्षुर इव तीक्ष्णा धारा वज्रे यस्याः सा क्षुरपविस्तादृशी लक्ष्मी वैरिमारणार्था संपद्यते । शृङ्गाभावेऽपि युद्धे मेष इव सहसा घातं करोतीति वज्रसाम्यम् ॥

यूपस्य चोदकप्राप्तमष्टाश्रित्वादिरूपमपवदितुं स्फ्यसमानमाकारं विधत्ते—

स्फ्यो यूपो भवति वज्रो वै
स्फ्यो वज्रमेवास्मै प्र हरति , इति ।

अत्र सूत्रम्—" स्फ्यो यूप इति स्फ्याकृतिर्यूपः " इति ॥

कुशमयमपवदितुं विधत्ते—

शरमयं बर्हिः शृणात्येवैनम् , इति ।

शृणन्ति हिंसन्तीति शरास्तृणविशेषा येषु तृणेषूत्पन्नैः काण्डैर्ब्राह्मणाः* क्रियन्ते । तेषां च तृणानां शीर्णवज्रावयवैरुत्पन्नत्वाद्धिंसकत्वम् । वज्रावयवैरुत्पत्तिरन्यत्राऽऽम्नायते—" इन्द्रो वृत्राय वज्रं प्राहरत्स त्रेधा व्यभवत्स्फ्यस्तृतीयं[१] रथस्तृतीयं यूपस्तृतीयं येऽन्तःशरा अशीर्यन्त ते शरा अभवन्तच्छराणां[२] शरत्वम् " इति । तस्माच्छरमयेन बर्हिषा वैरिणं हिनस्त्येव ॥

पालाशमिध्मं बाधितुं विधत्ते—

वैभीदक इध्मो भिनत्त्येवैनम् ॥, इति ॥

अक्षशब्दवाच्याद्वृक्षादुत्पन्नो वैभीदकः । स च विशेषेण भेत्तुं शक्त इति कृत्वा वैरिणं भिनत्त्येव ॥

---

* ब्राह्मणा इत्यस्य स्थाने बाणा इति युक्तम् । अथवा ब्राह्मणा इति पदेन दर्भवटवो ज्ञेया ।

---

१ ख रथो । २ ख अत विशीर्यकश' ।

( ग्रामकामादीनां पशुविधिः )

अत्र मीमांसा ।

दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

" समुच्चेयं शरमयं कौशेनोतास्य बाधकम् ।
प्राचुर्यस्य विधेराद्यो मैवं प्रतिपदोक्तितः ॥ "

सोमारौद्रं चरुं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्नित्यत्र शरमयं बर्हिर्भवतीति श्रुतं, तदिदं प्राकृतेन कुशबर्हिषा सह समुच्चीयते । कुतः । मयट्शब्देन प्राचुर्यस्याभिधानादबाधेनापि तदुपपत्तेरिति पूर्वः पक्षः । नित्यं वृद्धशरादिभ्य इति सूत्रेण शरशब्दाद्विकारार्थो मयट्प्रत्ययः प्रतिपदोक्तः । अतस्तं परित्यज्य प्राचुर्यार्थो न ग्रहीतुं शक्यः । किं च, प्राचुर्यार्थत्वे कार्यान्तरं कल्पनीयं स्यात् । तस्मात्कुशबर्हिषो बाधकमिति राद्धान्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ द्वितीयाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः । )

बार्हस्पत्यꣳ शितिपृष्ठमा लभेत ग्रामकामो यः कामयेत पृष्ठꣳ समानानाꣳ स्यामिति बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवैनं पृष्ठꣳ समानानां करोति ग्राम्येव भवति शितिपृष्ठो भवति बार्हस्पत्यो ह्येष देवतया समृद्ध्यै पौष्णꣳ श्याममा लभेतान्नकामोऽन्नं वै पूषा पूषणमेव स्वेन भागधेयेनोप धावति स एवास्मै ( १ ) अन्नं प्र यच्छत्यन्नाद एव

१ स 'यच्छति' ।

भवति श्यामो भवत्येतद्वा अन्नस्य रूपꣳ समृ-
द्ध्यै मारुतं पृश्निमा लभेतान्नकामोऽन्नं वै
मरुतो मरुत एव स्वेन भागधेयेनोप धावति
त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति
पृश्निर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्या ऐन्द्र-
मरुणमा लभेतेन्द्रियकाम इन्द्रमेव (२) स्वेन
भागधेयेनोप धावति स एवास्मिन्निन्द्रियं द-
धातीन्द्रियाव्येव भवत्यरुणो भ्रूमान्भवत्येतद्वा
इन्द्रस्य रूपꣳ समृद्ध्यै सावित्रमुपध्वस्तमा
लभेत सनिकामः सविता वै प्रसवानामीशे
सवितारमेव स्वेन भागधेयेनोप धावति स
एवास्मै सनिं प्र सुवति दानकामा अस्मै प्रजा
भवन्त्युपध्वस्तो भवति सावित्रो ह्येषः (३)
देवतया समृद्ध्यै वैश्वदेवं बहुरूपमा लभेता-
न्नकामो वैश्वदेवं वा अन्नं विश्वानेव देवान्त्स्वेन
भागधेयेनोप धावति त एवास्मा अन्नं प्र
यच्छन्त्यन्नाद एव भवति बहुरूपो भवति
बहुरूपꣳ ह्यन्नꣳ समृद्ध्यै वैश्वदेवं बहुरूपमा
लभेत ग्रामकामो वैश्वदेवा वै सजाता विश्वा-
नेव देवान्त्स्वेन भागधेयेनोप धावति त

( ग्रामकामादीनां पशुविधिः )

एवास्मै ( ४ ) सजातान्प्र यच्छन्ति ग्राम्येव भवति बहुरूपो भवति बहुदेवत्यो ह्येष समृद्ध्यै प्राजापत्यं तूपरमा लभेत यस्यानाज्ञातमिव ज्योगामयेत्प्राजापत्यो वै पुरुषः प्रजापतिः खलु वै तस्य वेद यस्यानाज्ञातमिव ज्योगामयति प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवैनं तस्मात्स्रामान्मुञ्चति तूपरो भवति प्राजापत्यो ह्येष देवतया समृद्ध्यै (५) ॥

( अस्मा इन्द्रायैव सजाता वि क्षत्रेण पुरस्तात्स्वेन भागधेयेनोप धावति स एवास्मै प्राजापत्यो हि त्रीणि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ द्वितीयाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

बार्हस्पत्यम् । शितिपृष्ठमिति शिति—पृष्ठम् । एति । लभेत । ग्रामकाम इति ग्राम—कामः । यः । कामयेत । पृष्ठम् । समानानाम् । स्याम् । इति । बृहस्पतिम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । एनम् । पृष्ठम् । समानानाम् । करोति । ग्रामी । एव । भ-

वति । शितिपृष्ठ इति शिति—पृष्ठः । भवति । बार्ह-
स्पत्यः । हि । एषः । देवतया । समृद्ध्या इति
सम्—ऋद्ध्यै । पौष्णम् । श्यामम् । एति । लभेत ।
अन्नकाम इत्यन्न—कामः । अन्नम् । वै । पूषा । पूष-
णम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन ।
उपेति । धावति । सः । एव । अस्मै ( १ )। अन्नम् ।
प्रेति । यच्छति । अन्नाद इत्यन्न—अदः । एव ।
भवति । श्यामः । भवति । एतत् । वै । अन्नस्य ।
रूपम् । समृद्ध्या इति सम्—ऋद्ध्यै । मारुतम् ।
पृश्निम् । एति । लभेत । अन्नकाम इत्यन्न—कामः ।
अन्नम् । वै । मरुतः । मरुतः । एव । स्वेन । भाग-
धेयेनेति भाग—धेयेन । उपेति । धावति । ते । एव ।
अस्मै । अन्नम् । प्रेति । यच्छन्ति । अन्नाद इत्यन्न—अदः ।
एव । भवति । पृश्निः । भवति । एतत् । वै । अन्न-
स्य । रूपम् । समृद्ध्या इति सम्—ऋद्ध्यै । ऐन्द्र-
म् । अरुणम् । एति । लभेत । इन्द्रियकाम इती-
न्द्रिय—कामः । इन्द्रम् । एव ( २ )। स्वेन । भाग-
धेयेनेति भाग—धेयेन । उपेति । धावति । सः ।
एव । अस्मिन् । इन्द्रियम् । दधाति । इन्द्रियावी ।
एव । भवति । अरुणः । भ्रूमानिति भ्रू—मान् ।

भवति । एतत् । वै । इन्द्रस्य । रूपम् । समृद्ध्या इति सम्—ऋद्ध्यै । सावित्रम् । उपध्वस्तमित्युप—ध्वस्तम् । एति । लभेत । सनिकाम इति सनि—कामः । सविता । वै । प्रसवानामिति प्र—सवानाम् । ईशे । सवितारम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मै । सनिम् । प्रेति । सुवति । दानकामा इति दान—कामाः । अस्मै । प्रजा इति प्र—जाः । भवन्ति । उपध्वस्त इत्युप—ध्वस्तः । भवति । सावित्रः । हि । एषः ( ३ ) । देवतया । समृद्ध्या इति सम्—ऋद्ध्यै । वैश्वदेवमिति वैश्व—देवम् । बहुरूपमिति बहु—रूपम् । एति । लभेत । अन्नकाम इत्यन्न—कामः । वैश्वदेवमिति वैश्व—देवम् । वै । अन्नम् । विश्वान् । एव । देवान् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । ते । एव । अस्मै । अन्नम् । प्रेति । यच्छन्ति । अन्नाद इत्यन्न—अदः । एव । भवति । बहुरूप इति बहु—रूपः । भवति । बहुरूपमिति बहु—रूपम् । हि । अन्नम् । समृद्ध्या इति सम्—ऋद्ध्यै । वैश्वदेवमिति वैश्व—देवम् । बहुरूपमिति बहु—रूपम् । एति । लभेत । ग्राम-

काम इति ग्राम—कामः । वैश्वदेवा इति वैश्व—देवाः। वै । सजाता इति स—जाताः । विश्वान् । एव । देवान् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । ते । एव । अस्मै (४)। सजातानिति स—जातान् । प्रेति । यच्छन्ति । ग्रामी । एव । भवति । बहुरूप इति बहु—रूपः । भवति । बहुदेवत्य इति बहु—देवत्यः। हि । एषः । समृद्ध्या इति सम्—ऋद्ध्यै । प्राजापत्यमिति प्राजा—पत्यम् । तूपरम् । एति । लभेत । यस्य । अनाज्ञातमित्यना—ज्ञातम् । इव । ज्योक् । आमयेत् । प्राजापत्य इति प्राजा—पत्यः । वै । पुरुषः । प्रजापतिरिति प्रजा—पतिः । खलु । वै । तस्य । वेद । यस्य । अनाज्ञातमित्यना—ज्ञातम् । इव । ज्योक् । आमयति । प्रजापतिमिति प्रजा—पतिम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । एनम् । तस्मात् । स्रामात् । मुञ्चति । तूपरः । भवति । प्राजापत्य इति प्राजा—पत्यः । हि । एषः । देवतया । समृद्ध्या इति सम्—ऋद्ध्यै (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

(ग्रामकामादीनां पशुविधिः)

( अथ द्वितीयकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

पशुकामः प्रजाकामो भस्त्यर्थी च्छिन्नसोमकः ।
अभिचारी च ये तेषां पष्ठमे पशवः श्रुताः ॥ १ ॥

अथ षष्ठे ग्रामकामादीनां पश्वन्तराणि वक्तव्यानि ।

तत्रैकं पशुं विधत्ते—

बार्हस्पत्यꣳ शितिपृष्ठमा लभेत ग्रामकामो यः कामयेत पृष्ठꣳ समानानाꣳ स्यामिति बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवैनं पृष्ठꣳ समानानां करोति ग्राम्येव भवति, इति ।

ग्रामो मे भूयादन्येषां ग्रामस्वामिनां मध्ये पृष्ठवदुपरिवर्ती स्यामिति यः कामयेत तस्यायं पशुः ॥

पशुविशेषणं प्रशंसति—

शितिपृष्ठो भवति बार्हस्पत्यो ह्येष देवतया समृद्ध्यै, इति ।

राजसूये बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणेत्युक्तत्वात्तद्देवताकत्वम् ॥

अन्नकामस्य पशुं विधत्ते—

पौष्णꣳ श्याममा लभेतान्नकामोऽन्नं वै पूषा पूषणमेव स्वेन भागधेयेनोप धावति स एवास्मा अन्नं प्र यच्छत्यन्नाद एव भवति, इति ।

अन्नस्य पोषकत्वात्पूषत्वम् ॥

पशुविशेषणं प्रशंसति—

श्यामो भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै, इति ।

पत्रशाकाद्यन्नस्य रूपं श्यामम् ॥

अन्नकामस्य पश्वन्तरं विधत्ते—

मारुतं पृश्निमा लभेतान्नकामोऽन्नं वै मरुतो

---

२ क. घ. ङ. च. मप । अ । ३ क. घ. ङ. च. पृष्ठाद् ।

मरुत एव स्वेन भागधेयेनोप धावति त एवा-
स्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति , इति।

मरुतां वैश्यत्वेनान्नसंपादकत्वादन्नत्वम् ॥

पशुविशेषणं प्रशंसति—

पृश्निर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्धयै , इति।

पृश्निः श्वेतः, शाल्यन्नस्य रूपं श्वेतम् ॥

इन्द्रियकामस्य पशुं विधत्ते—

ऐन्द्रमरुणमा लभेतेन्द्रियकाम इन्द्रमेव
स्वेन भागधेयेनोप धावति स एवास्मि-
न्निन्द्रियं दधातीन्द्रियाव्येव भवति , इति ॥

अरुणस्य पशोर्गुणान्तरं विधत्ते—

अरुणो भूमान्भवत्येतद्वा इन्द्र-
स्य रूपꣳ समृद्धयै , इति ॥

महती भ्रूरस्यातीति भ्रूमान । इन्द्रस्य सहस्राक्षत्वेन भ्रूबाहुल्यं स्वरूपम् ॥

स्वप्रतिग्रहीतृकदानकामस्य पशुं विधत्ते—

सावित्रमुपध्वस्तमा लभेत सनिकामः सविता
वै प्रसवानामीशे सवितारमेव स्वेन भाग-
धेयेनोप धावति स एवास्मै सनिं प्र सुव-
ति दानकामा अस्मै प्रजा भवन्ति , इति।

उपध्वस्तः संकीर्णवर्णः। सनिकामः परकर्तृकदानकामः। प्रसवानां प्रेर-णानाम्। अस्मै यजमानार्थं परकर्तृकं दानं प्रसुवति प्रेरयति ॥

संकीर्णवर्णं प्रशंसति—

उपध्वस्तो भवति सावित्रो
ह्येष देवतया समृद्धयै , इति।

राजसूये सावित्रं द्वादशकपालं क्षत्तुर्गृह उपध्वस्तो दक्षिणेत्युक्तत्वात्स-वितृदेवताकत्वम् ॥

( ग्रामकामादीनां पशुविधिः )

अन्नकामस्य पश्वन्तरं विधत्ते —

वैश्वदेवं बहुरूपमा लभेतान्नकामो वैश्वदेवं वा अन्नं विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति , इति ।

सांकर्यमन्तरेण विस्पष्टा बहवो वर्णा यस्यासौ बहुरूपः ॥

पशुविशेषणं प्रशंसति—

बहुरूपो भवति बहुरूपं ह्यन्नं समृद्ध्यै , इति ।

भक्ष्यभोज्यलेह्यचोष्यभेदेनान्नस्य बहुरूपत्वम् ॥

ग्रामकामस्य पश्वन्तरं विधत्ते—

वैश्वदेवं बहुरूपमा लभेत ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै सजातान्प्र यच्छन्ति ग्राम्येव भवति , इति ।

सजाता भ्रातरो भृत्यादयश्च । ते च बहुत्वसाम्येन विश्वेषां देवानां संबन्धिनः ॥

पशुविशेषणं प्रशंसति -

बहुरूपो भवति बहुदेवत्यो ह्येष समृद्ध्यै , इति ।

विश्वेषां देवानामेतत्स्वामित्वात्पशोर्बहुदेवत्यत्वम् ॥

अज्ञातचिररोगग्रस्तस्य पशुं विधत्ते—

प्राजापत्यं तूपरमा लभेत यस्यानाज्ञातमिव ज्योगामयेत्प्राजापत्यो वै पुरुषः प्रजापतिः खलु वै तस्य वेद यस्यानाज्ञातमिव ज्योगामयति प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवैनं तस्मात्स्रामान्मुञ्चति , इति ।

विस्पष्टानि रोगविशेषलक्षणानि न दृश्यन्ते, बलक्षयकार्श्यादिकं च दृश्यते,

तदिदमज्ञातमिव भवति । प्रजापतिः पुरुषमसृजतेति श्रुतत्वात्पुरुषः प्राजापत्यः । चिकित्सकैरज्ञातोऽपि रोगविशेषः प्रजापतिना ज्ञायते । अतः प्रजापतिरेनं तस्मात्स्रामादज्ञातदीर्घरोगान्मोचयति ॥

प्रजापतिवपाजन्यत्वेन पशुविशेषण प्रशंसति—

तूपरो भवति प्राजापत्यो ह्येष देवतया समृद्ध्यै ॥ , इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ द्वितीयाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः । )

वषट्कारो वै गायत्रियै शिरोऽच्छिनत्तस्यै रसः पराऽपतत्तं बृहस्पतिरुपागृह्णात्सा शितिपृष्ठा वशाऽभवद्यो द्वितीयः परापतत्तं मित्रावरुणावुपागृह्णीतां सा द्विरूपा वशाऽभवद्यस्तृतीयः परापतत्तं विश्वे देवा उपागृह्णन्त्सा बहुरूपा वशाऽभवद्यश्चतुर्थः परापतत्स पृथिवीं प्राविशत्तं बृहस्पतिरभि ( १ ) अगृह्णादस्त्वेवायं भोगायेति स उक्षवशः समभवद्यल्लोहितं परापतत्तद्रुद्र उपागृह्णात्सा रौद्री रोहिणी वशाऽभवद्बार्हस्पत्याः शितिपृष्ठामा लभेत ब्रह्मवर्चसकामो बृहस्पतिमेव स्वेन भागधेये-

नोपं धावति स एवास्मिन्ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति छन्दसां वा एष रसो यद्वशा रसं इव खलु ( २ ) वै ब्रह्मवर्चसं छन्दसामेव रसेन रसं ब्रह्मवर्चसमवं रुन्धे मैत्रावरुणीं द्विरूपामा लंभेत वृष्टिकामो मैत्रं वा अहर्वारुणी रात्रिरहोरात्राभ्यां खलु वै पर्जन्यो वर्षति मित्रावरुणावेव स्वेनं भागधेयेनोपं धावति तावेवास्मां अहोरात्राभ्यां पर्जन्यं वर्षयतश्छन्दसां वा एष रसो यद्वशा रसं इव खलु वै वृष्टिश्छन्दसामेव रसेन ( ३ ) रसं वृष्टिमवं रुन्धे मैत्रावरुणीं द्विरूपामा लंभेत प्रजाकामो मैत्रं वा अहर्वारुणी रात्रिरहोरात्राभ्यां खलु वै प्रजाः प्र जायन्ते मित्रावरुणावेव स्वेनं भागधेयेनोपं धावति तावेवास्मां अहोरात्राभ्यां प्रजां प्र जनयतश्छन्दसां वा एष रसो यद्वशा रसं इव खलु वै प्रजा छन्दसामेव रसेन रसं प्रजामवं ( ४ ) रुन्धे वैश्वदेवीं बहुरूपामा लंभेतान्नकामो वैश्वदेवं वा अन्नं विश्वानेव देवान्त्स्वेनं भागधेयेनोपं धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति

छन्दसां वा एष रसो यद्वशा रस इव खलु वा
अन्नं छन्दसामिव रसेन रसमन्नमव रुन्धे वैश्व-
देवीं बहुरूपामा लभेत ग्रामकामो वैश्वदेवा वै
(५)सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप
धावति त एवास्मै सजातान्प्र यच्छन्ति ग्रा-
म्येव भवति छन्दसां वा एष रसो यद्वशा रस
इव खलु वै सजाताश्छन्दसामेव रसेन रसꣳ
सजातानव रुन्धे बार्हस्पत्यामुक्षवशामा लभेत
ब्रह्मवर्चसकामो बृहस्पतिमेव स्वेन भागधेये-
नोप धावति स एवास्मिन्ब्रह्मवर्चसम् (६)
दधाति ब्रह्मवर्चस्येव भवति वशं वा एष चर-
ति यदुक्षा वश इव खलु वै ब्रह्मवर्चसं वशे-
नैव वशं ब्रह्मवर्चसमव रुन्धे रौद्रीꣳ रोहिणीमा
लभेताभिचरन्रुद्रमेव स्वेन भागधेयेनोप धा-
वति तस्मा एवैनमा वृश्चति ताजगार्तिमार्छ-
ति रोहिणी भवति रौद्री ह्येषा देवतया समृ-
द्ध्यै स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमे-
वास्मै प्र हरति शरमयं बर्हिः शृणात्येवैनं वै-
भीदक इध्मो भिनत्त्येवैनम् (७) ॥

( ब्रह्मवर्चसकामादीनां पशुविधि )

( अभि खलु वृष्टिच्छन्दसामेव रसेन रस प्रजामव वैश्वदेवा वै ब्रह्म-
वर्चस यूप एकान्नत्रिंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ द्वितीयाष्टके प्रथमप्रपाठके अष्टमोऽनुवाक । )

---

वषट्कार इति वषट्—कारः । वै । गायत्रियै । शिरः । अच्छिनत् । तस्यै । रसः । परेति । अप-तत् । तम् । बृहस्पतिः । उपेति । अगृह्णात् । सा । शितिपृष्ठेति शिति—पृष्ठा । वशा । अभवत् । यः । द्वितीयः । परापतदिति परा—अपतत् । तम् । मित्रावरुणाविति मित्रा—वरुणौ । उपेति । अगृह्णीताम् । सा । द्विरूपेति द्वि—रूपा । वशा । अभवत् । यः । तृतीयः । परापतदिति परा—अपतत् । तम् । विश्वे । देवाः । उपेति । अगृह्णन् । सा । बहुरूपेति बहु—रूपा । वशा । अभवत् । यः । चतुर्थः । परापत-दिति परा—अपतत् । सः । पृथिवीम् । प्रेति । अविशत् । तम् । बृहस्पतिः । अभीति ( १ ) । अगृह्णात् । अस्तु । एव । अयम् । भोगाय । इति । सः । उक्षवश इत्युक्ष—वशः । समिति । अभवत् ।

यत् । लोहितम् । परापर्तदिति परा—अप॑तत् । तत् । रुद्रः । उपेति । अगृह्णात् । सा । रौद्री । रोहिणी । वशा । अभवत् । बार्हस्पत्याम् । शितिपृष्ठामिति शिति—पृष्ठाम् । एति । लभेत । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस—कामः । बृहस्पतिम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । दधाति । ब्रह्मवर्चसीति ब्रह्म—वर्चसी । एव । भवति । ऋष॒भ-साम् । वै । एषः । गर्भः । यत् । वशा । गर्भः । इव । खलु ( २ ) । वै । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । छन्दसाम् । एव । रसेन । रसम् । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । अवेति । रुन्धे । मैत्रावरुणीमिति मैत्रा—वरुणीम् । द्विरूपामिति द्वि—रूपाम् । एति । लभेत । वृष्टिकाम इति वृष्टि—कामः । मैत्रम् । वै । अहः । वारुणी । रात्रिः । अहोरात्राभ्यामित्यहः—रात्राभ्याम् । खलु । वै । पर्जन्यः । वर्षति । मित्रावरुणाविति मित्रा—वरुणौ । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । तौ । एव । अस्मै । अहोरात्राभ्यामित्यहः—रात्रा-

( ब्रह्मवर्चसकामादीनां पशुविधिः )

भ्राम् । पर्जन्यः । वर्षुकः । छन्दनाम् । वै ।
एषः । रसः । यत् । वशा । रसः । इव । खलु ।
वै । वृष्टिः । छन्दनात् । एव । रसेन (३) । रसम् ।
वृष्टिम् । अवेति । रुन्धे । मैत्रावरुणीमिति मैत्रा—
वरुणीम् । द्विरूपामिति द्वि—रूपाम् । एति । लभेत ।
प्रजाकाम इति प्रजा—कामः । मैत्रम् । वै । अहः ।
वारुणी । रात्रिः । अहोरात्राभ्यामित्यहोरात्र—आभ्याम् ।
खलु । वै । प्रजा इति प्र—जाः । प्रेति । जायन्ते ।
मित्रावरुणाविति मित्रा—वरुणौ । एव । स्वेन ।
भागधेयेनेति भाग—धेयेन । उपेति । धावति । तौ ।
एव । अस्मै । अहोरात्राभ्यामित्यहोरात्र—आभ्याम् ।
प्रजामिति प्र—जाम् । प्रेति । जनयतः । छन्दनाम् ।
वै । एषः । रसः । यत् । वशा । रसः । इव । खलु ।
वै । प्रजेति प्र—जा । छन्दनात् । एव । रसेन । रसम् ।
प्रजामिति प्र—जाम् । अवेति (४) । रुन्धे । वैश्व-
देवीमिति वैश्व—देवीम् । बहुरूपामिति बहु—रूपाम् ।
एति । लभेत । अन्नकाम इत्यन्न—कामः । वैश्वदेव-
मिति वैश्व—देवम् । वै । अन्नम् । विश्वान् ।
एव । देवान् । स्वेन । भागधेयेनेति भाग—धे-
येन । उपेति । धावति । ते । एव । अस्मै ।

अन्नम् । प्रेति । यच्छन्ति । अन्नाद इत्यन्न—अदः । एव । भवति । छन्दसाम् । वै । एषः । रसः । यत् । वशा । रसः । इव । खलु । वै । अन्नम् । छन्दसाम् । एव । रसेन । रसम् । अन्नम् । अवेति । रुन्धे । वैश्वदेवीमिति वैश्व—देवीम् । बहुरूपामिति बहु—रूपाम् । एति । लभेत । ग्रामकाम इति ग्राम—कामः । वैश्वदेवा इति वैश्व—देवाः । वै (५) । सजाता इति स—जाताः । विश्वान् । एव । देवान् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । ते । एव । अस्मै । सजातानिति स—जातान् । प्रेति । यच्छन्ति । ग्रामी । एव । भवति । छन्दसाम् । वै । एषः । रसः । यत् । वशा । रसः । इव । खलु । वै । सजाता इति स—जाताः । छन्दसाम् । एव । रसेन । रसम् । सजातानिति स—जातान् । अवेति । रुन्धे । बार्हस्पत्यम् । उक्षवशामित्युक्ष—वशाम् । एति । लभेत । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस—कामः । बृहस्पतिम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् (६) । दधाति । ब्रह्मवर्चसीति ब्रह्म—वर्चसी । एव । भवति ।

( ब्रह्मवर्चसकामादीनां पशुविधिः )

वशम् । वै । एषः । चरति । यत् । उक्षा । वशः । इव । खलु । वै । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । वशेन । एव । वशम् । ब्रह्मवर्चसमिति ब्रह्म—वर्च-सम् । अवेति । रुन्धे । रौद्रीम् । रोहिणीम् । एति । लभेत । अभिचरन्नित्यभि—चरन् । रुद्रम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । तस्मै । एव । एनम् । एति । वृश्चति । ताजक् । आर्तिम् । एति । ऋच्छति । रोहिणी । भवति । रौद्री । हि । एषा । देवतया । समृद्ध्या इति सम्—ऋद्ध्यै । स्फ्यः । यूपः । भवति । वज्रः । वै । स्फ्यः । वज्रम् । एव । अस्मै । प्रेति । हरति । शरमयमिति शर—मयम् । बर्हिः । शृणाति । एव । एनम् । वैभीदकः । इध्मः । भिनत्ति । एव । एनम् । ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ द्वितीयकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः । )

पुष्टिकामोऽन्नकामो द्वाविन्द्रियार्थी सनि तथा ।
अन्नं ग्रामं च वाञ्छन्तोऽज्ञातरोगश्च ये स्थिताः ॥
षष्ठेऽनुवाके पशवः क्रमेणैषामुदीरिताः ॥ १ ॥

अथ सप्तमे ब्रह्मवर्चसकामादीनां यथायोगं पश्वन्तराणि विधातुं प्रस्तौति—

वषट्कारो वै गायत्रियै शिरोऽच्छिनत्तस्यै रसः
पराऽपतत्तं बृहस्पतिरुपागृह्णात्सा शितिपृष्ठा
वशाऽभवद्यो द्वितीयः परापतत्तं मित्रावरुणा-
वुपागृह्णीताꣳ सा द्विरूपा वशाऽभवद्यस्तृतीयः
परापतत्तं विश्वे देवा उपागृह्णन्त्सा बहुरूपा
वशाऽभवद्यश्चतुर्थः परापतत्स पृथिवीं प्रावि-
शत्तं बृहस्पतिरभ्यगृह्णादस्त्वेवायं भोगा-
येति स उक्षवशः समभवद्यल्लोहितं परापतत्तद्रुद्र
उपागृह्णात्सा रौद्री रोहिणी वशाऽभवत्, इति।

वौषडित्यस्य मन्त्रस्याभिधानिदेवो वषट्कारः। तस्य गायत्र्या सह विरोधो ब्राह्मणान्तरे प्रसिद्ध इति वैरशब्देन सूच्यते। छिन्नाद्गायत्रीशिरसो जलं रक्तं च निर्गतं, ताभ्यामुभाभ्यामनेकविधा वशा उत्पन्नाः। ताश्च बृहस्पत्यादीनां परिग्रहेण प्रियाः सम्पन्नाः। द्वाभ्यां वर्णाभ्यामुपेता द्विरूपा। बहुभिर्वर्णैरुपेता बहुरूपा। चतुर्थपर्याये भूमौ पतितं रसं वृथा विनष्टो मा भूदिति बृहस्पतिरभ्यगृह्णात्। तस्यायमभिप्रायः—अयं रसो मम भोगाय भवत्वेव। उक्षवशो व्यर्थवीर्यो वृषभः॥

तत्राऽऽद्यं पशुं विधत्ते—

बार्हस्पत्याꣳ शितिपृष्ठामा लभेत ब्रह्म-
वर्चसकामो बृहस्पतिमेव स्वेन भाग-
धेयेनोप धावति स एवास्मिन्ब्रह्मवर्चसं
दधाति ब्रह्मवर्चस्येव भवति, इति।

ब्रह्मवर्चसस्यैहिकामुष्मिकपूजाहेतुत्वेन सारत्वाद्रससादृश्यमित्यभिप्रेत्य तत्साधनभूतां वशां प्रशंसति—

छन्दसां वा एष रसो यद्वशा रस इव
खलु वै ब्रह्मवर्चसं छन्दसामेव रसेन
रसं ब्रह्मवर्चसमव रुन्धे, इति।

वा अन्नं विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति छन्दसां वा एष रसो यद्वशा रस इव खलु वा अन्नं छन्दसामेव रसेन रसमन्नमव रुन्धे, इति।

अन्नस्य सर्वदेवभोज्यत्वाद्वैश्वदेवत्वं, जीवनहेतुत्वेन सारत्वाद्रससाम्यम् ॥

तमेव पशुं फलान्तराय विधत्ते—

वैश्वदेवीं बहुरूपामा लभेत ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै सजातान्प्र यच्छन्ति ग्राम्येव भवति छन्दसां वा एष रसो यद्वशा रस इव खलु वै सजाताश्छन्दसामेव रसेन रसꣳ सजातानव रुन्धे, इति।

सजातानां भ्रात्रादीनां भृत्यादीनां च बहुत्वेन देवतासाम्येन वैश्वदेवत्वं स्वाम्युपकारित्वेन च रससादृश्यम् ॥

चतुर्थं पशुं विधत्ते—

बार्हस्पत्यमुक्षवशमा लभेत ब्रह्मवर्चसकामो बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवास्मिन्ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति, इति॥

वशत्वविशेषणं प्रशंसति—

वशं वा एष चरति यदुक्षा वश इव खलु वै ब्रह्मवर्चसं वशेनैव वशं ब्रह्मवर्चसमव रुन्धे, इति।

उक्षेति यदेष वशं चरति धेनुभिः सहैवारण्ये गत्वा पुनस्तासामेव पृष्ठतो गृहेष्वागच्छतीति तस्य गोवशवाचित्वम् । ब्रह्मवर्चसमपीन्द्रियनियमनोपेतत्वाद्वश इव स्वाधीनपदार्थ इव भवति ॥

पञ्चमं पशुं विधत्ते—

रौद्रीꣳ रोहिणीमा लभेताभिचरन्रु-

( ब्रह्मवर्चसकामादीनां पशुविधिः )

द्रमेव स्वेन भागधेयेनोप धावति
तस्मा एवैनमा वृश्चति. ताजगार्ति-
मार्छति रोहिणी भवति रौद्री
ह्येषा देवतया समृद्ध्यै , इति ।

रुद्राध्याये नीलग्रीवो विलोहित इति रुद्रस्य विशेषणे लोहितत्वं श्रूयतेऽतो रोहिणी रुद्रदेवताका ॥

यूपस्य स्फ्योदकप्रमाणत्वादिकं विधत्ते

स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमे-
वास्मै प्र हरति शरमयं बर्हिः शृणात्येवैनं
वैभीदक इध्मो भिनत्त्येवैनम् ॥ , इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-
दीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके
सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ द्वितीयकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः । )

असावादित्यो न व्यरोचत तस्मै देवाः
प्रायश्चित्तिमैच्छन्तस्मा एताः सौरीः श्वेतां
वशामाऽऽलभन्त तयैवास्मिन्रुचमदधुर्यो ब्रह्म-
वर्चसकामः स्यात्तस्मा एताः सौरीः श्वेतां
वशामा लभेतामुमेवाऽऽदित्यः स्वेन भागधे-
येनोप धावति स एवास्मिन्ब्रह्मवर्चसं दधाति
ब्रह्मवर्चस्येव भवति बैल्वो यूपो भवत्यसौ
( १ ) वा आदित्यो यतोऽजायत ततो बिल्व

उदतिष्ठत्सर्यान्येव ब्रह्मवर्चसमवं रुन्धे ब्राह्मण-
स्पत्यां बभ्रुकर्णीमा लभेताभिचरन्वारुणं
दशकपालं पुरस्तान्निर्वपेद्वरुणेनैव भ्रातृव्यं
ग्राहयित्वा ब्रह्मणा स्तृणुते बभ्रुकर्णी भवत्ये-
तद्वै ब्रह्मणो रूपꣳ समृद्ध्यै स्फ्यो यूपो भवति
वज्रो वै स्फ्यो वज्रमेवास्मै प्र हरति शरमयं
बर्हिः शृणाति ( २ ) एवैनं वैभीदक इध्मो
भिनत्त्येवैनं वैष्णवं वामनमा लभेत यं यज्ञो
नोपनमेद्विष्णुर्वै यज्ञो विष्णुमेव स्वेन भाग-
धेयेनोप धावति स एवास्मै यज्ञं
प्र यच्छत्युपैनं यज्ञो नमति वामनो
भवति वैष्णवो ह्येष देवतया समृद्ध्यै
त्वाष्ट्रं वडबमा लभेत पशुकामस्त्वष्टा वै प-
शूनां मिथुनानाम् ( ३ ) प्रजनयिता त्वष्टा-
रमेव स्वेन भागधेयेनोप धावति स एवास्मै
पशून्मिथुनान्प्र जनयति प्रजा हि वा एत-
स्मिन्पशवः प्रविष्टा अथैष पुमान्त्सन्वडबः
साक्षादेव प्रजां पशूनव रुन्धे मैत्रꣳ श्वेतमा
लभेत सङ्ग्रामे संयत्ते समयकामो मित्रमेव
स्वेन भागधेयेनोप धावति स एवैनं मित्रेण

सं नयति ( ४ ) विशाखो भवति व्यवसाययत्येवैनं प्राजापत्यं कृष्णमा लभेत वृष्टिकामः प्रजापतिर्वै वृष्ट्या ईशे प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मै पर्जन्यं वर्षयति कृष्णो भवत्येतद्वै वृष्ट्यै रूपꣳ रूपेणैव वृष्टिमव रुन्धे शबलो भवति विद्युतमेवास्मै जनयित्वा वर्षयत्यवाशृङ्गो भवति वृष्टिमेवास्मै नि यच्छति ( ५ ) ॥

( असौ शृणाति मिथुनानां नयति यच्छति । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ द्वितीयाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः । )

---

असौ । आदित्यः । न । वीति । अरोचत । तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन् । तस्मै । एताम् । सौरीम् । श्वेताम् । वशाम् । एति । अलभन्त । तया । एव । अस्मिन् । रुचम् । अदधुः । यः । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस—कामः । स्यात् । तस्मै । एताम् । सौरीम् । श्वेताम् । वशाम् । एति । लभेत । अमुम् । एव । आदित्यम् । स्वेन । भाग-

धेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । दधाति । ब्रह्मवर्चसीति ब्रह्म—वर्चसी । एव । भवति । बैल्वः । यूपः । भवति । असौ (१)। वै । आदित्यः । यतः । अजायत । ततः । बिल्वः । उदिति । अतिष्ठत् । सयोनीति स—योनि । एव । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । अवेति । रुन्धे । ब्राह्मणस्पत्यामिति ब्राह्मणः—पत्याम् । बभ्रुकर्णीमिति बभ्रु—कर्णीम् । एति । लभेत । अभिचरन्नित्यभि—चरन् । वारुणम् । दशकपालमिति दश—कपालम् । पुरस्तात् । निरिति । वपेत् । वरुणेन । एव । भ्रातृव्यम् । ग्राहयित्वा । ब्रह्मणा । स्तृणुते । बभ्रुकर्णीति बभ्रु—कर्णी । भवति । एतत् । वै । ब्रह्मणः । रूपम् । समृद्ध्या इति सम्—ऋद्ध्यै । स्फ्यः । यूपः । भवति । वज्रः । वै । स्फ्यः । वज्रम् । एव । अस्मै । प्रेति । हरति । शरमयमिति शर—मयम् । बर्हिः । शृणाति (२) । एव । एनम् । वैभीदकः । इध्मः । भिनत्ति । एव । एनम् । वैष्णवम् । वामनम् । एति । लभेत । यम् । यज्ञः । न । उपनमेदित्युप—नमेत् । विष्णुः । वै । यज्ञः । विष्णुम् । एव । स्वेन । भागधेयेनेति

भाग—धेयेन । उपेति । धावति । सः । एव ।
अस्मै । यज्ञम् । प्रेति । यच्छति । उपेति । एनम् ।
यज्ञः । नमति । वामनः । भवति । वैष्णवः । हि ।
एषः । देवतया । समृद्ध्या इति सम्—ऋद्ध्यै ।
त्वाष्ट्रम् । वडबम् । एति । लभेत । पशुकाम इति
पशु—कामः । त्वष्टा । वै । पशूनाम् । मिथुना-
नाम् ( ३ ) । प्रजनयितेति प्र—जनयिता । त्वष्टा-
रम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन ।
उपेति । धावति । सः । एव । अस्मै । पशून् ।
मिथुनान् । प्रेति । जनयति । प्रजेति प्र—जा । हि ।
वै । एतस्मिन् । पशवः । प्रविष्टा इति प्र—विष्टाः ।
अथ । एषः । पुमान् । सन् । वडबः । साक्षादिति
स—अक्षात् । एव । प्रजामिति प्र—जाम् । पशून् ।
अवेति । रुन्धे । मैत्रम् । श्वेतम् । एति । लभेत ।
संग्राम इति सं—ग्रामे । संयत्त इति स—यत्ते ।
समयकाम इति समय—कामः । मित्रम् । एव ।
स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति ।
सः । एव । एनम् । मित्रेण । समिति । नयति (४)।
विशाल इति वि—शालः । भवति । व्यवसायय-
तीति वि—अवसाययति । एव । एनम् । प्राजापत्य-

मिति प्राजा—पत्यम् । कृष्णम् । एति । लभेत । वृष्टिकाम इति—वृष्टि—कामः । प्रजापतिरिति प्रजा—पतिः । वै । वृष्ट्याः । ईशे । प्रजापतिमिति प्रजा—पतिम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मै । पर्जन्यम् । वर्षयति । कृष्णः । भवति । एतत् । वै । वृष्ट्यै । रूपम् । रूपेण । एव । वृष्टिम् । अवेति । रुन्धे । शबलः । भवति । विद्युतमिति वि—द्युतम् । एव । अस्मै । जनयित्वा । वर्षयति । अवाशृङ्गः । भवति । वृष्टिम् । एव । अस्मै । नीति । यच्छति । ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ द्वितीयकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः । )

---

ब्रह्मतेजः प्रजां वृष्टिमन्नं ग्रामं तथा पुनः ।
ब्रह्मतेजोऽभिचारं च वाञ्छतां पशवः श्रुताः ॥ १ ॥

तानेतान्पशून्सप्तमेऽनुवाके विधायाष्टमे पुनर्ब्रह्मवर्चसकामादीनां पश्वन्तराणि विधास्यन्नादौ कस्यचित्पशोर्विधानाय प्रस्तौति—

असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन्तस्मा एताꣳ सौरीꣳ श्वेतां वशामाऽलभन्त तयैवास्मिन्रुचमदधुः, इति ।

आदित्यविषये बह्वयः प्रायश्चित्तयः कल्पयुगादिभेदेन व्यवस्थापनीयाः ।

( ब्रह्मवर्चसकामादीनां पशुविधिः )
विधत्ते—

यो ब्रह्मवर्चसकामः स्यात्तस्मा एता५ सौरी५ श्वेतां वशामा लभेतामुमेवाऽऽदित्य५ स्वेन भागधेयेनोप धावति स एवास्मिन्ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति , इति ॥

खादिरं बाधितुं विधत्ते—

बैल्वो यूपो भवत्यसौ वा आदित्यो यतोऽजायत ततो बिल्व उदतिष्ठत्स-योन्येव ब्रह्मवर्चसमव रुन्धे, इति ।

श्रीसूक्तेन बिल्वोत्पत्तिराम्नायते—" आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः " इति ।

अस्यायमर्थः—हे आदित्यवर्णे लक्ष्मि प्रथममुत्पन्नस्याऽऽदित्यस्य तपसः संतापरूपात्प्रकाशादध्यूर्ध्वं तव प्रियो बिल्ववृक्षो जात इति । ततः सौर्या वशाया बैल्वे यूपे सति सूर्यबिल्वयोः सहोदरत्वात्सयोनित्वम् । तेन च ब्रह्मवर्चसमपि सयोन्येव संपद्यते । स्वपित्रादीनां यस्यां वेदशाखायामध्ययनानुष्ठानादिप्रवृत्तिस्तत्रैव स्वस्यापि प्रवृत्तिर्ब्रह्मवर्चसस्य सयोनित्वम् ॥

अभिचरतः कंचित्पशुं विधत्ते—

ब्राह्मणस्पत्यां बभ्रुकर्णीमा लभेताभिचरन्, इति ।

पिङ्गलवर्णकर्णयुक्ता बभ्रुकर्णी ॥

तस्य पशोः प्राच्याङ्गं पुरोडाशं विधत्ते—

वारुणं दशकपालं पुरस्तान्निर्वपेद्वरुणेनैव भ्रातृव्यं ग्राहयित्वा ब्रह्मणा स्तृणुते, इति ।

एतदनुष्ठानेन भ्रातृव्यस्य प्रथमं रोगमुत्पाद्य पश्चाद्ब्रह्मणा ब्रह्मणस्पतिदेवताकेन कर्मणा हिनस्ति ॥

ब्रह्मणश्चतुर्मुखस्य हेमवर्णत्वाद्बभ्रुकर्ण्या ब्रह्मरूपत्वमित्यभिप्रेत्य पशुविशेषणं प्रशंसति—

बभ्रुकर्णी भवत्येतद्वै ब्रह्मणो रूप५ समृद्ध्यै, इति ॥

पूर्ववचोदकप्राप्तं बाधितुं विधत्ते—

स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्र-
मेवास्मै प्र हरति शरमयं बर्हिः शृणात्ये-
वैनं वैभीदक इध्मो भिनत्त्येवैनम्, इति॥

अग्निष्टोमादिमहायज्ञप्राप्तिकामिनः पशुं विधत्ते—

वैष्णवं वामनमा लभेत यं यज्ञो नोप-
नमेद्विष्णुर्वै यज्ञो विष्णुमेव स्वेन भाग-
धेयेनोप धावति स एवास्मै यज्ञं प्र
यच्छत्युपैनं यज्ञो नमति वामनो भवति
वैष्णवो ह्येष देवतया समृद्ध्यै, इति।

राजसूये वैष्णवं त्रिकपालं वामनो दक्षिणेत्युक्तत्वाद्वामनस्य विष्णुदेवत्य-
त्वम् ॥

विधत्ते—

त्वाष्ट्रं वडबमा लभेत पशुकामस्त्वष्टा
वै पशूनां मिथुनानां प्रजनयिता त्वष्टा-
रमेव स्वेन भागधेयेनोप धावति स
एवास्मै पशून्मिथुनान्प्र जनयति, इति।

यथा मनुष्येषु यत्र क्वापि पुंसः स्तनवृद्ध्या सत्यां श्मश्रुनिर्गमनात्प्राग्यो-
षित्त्वभ्रमो भवति तद्वदश्वेष्वपि केनाप्यवयवसंनिवेशविशेषेण यस्मिन्पुंस्य-
श्वे योषित्त्वबुद्धिरितरेषामश्वानां भवति। अत एव ते तेऽश्वास्तदा तदा
तमश्वमारोहन्ति, सोऽयमीदृशोऽश्वो वडवः। स च त्वष्टुः प्रियः। रेतसः
सिक्तस्य त्वष्टा रूपाणि विकरोतीति श्रुतत्वान्मिथुनप्रजनयितृत्वम् ॥

पशुविशेषणं प्रशंसति—

प्रजा हि वा एतस्मिन्पशवः प्रविष्टा अथैष पुमा-
न्त्सन्वडबः साक्षादेव प्रजां पशूनव रुन्धे, इति।

यदा स्त्रीलक्षणदर्शनेनास्मिन्पशौ स्त्रीत्वबुद्ध्या प्रजाः पशवश्च प्रविशन्ति,
तत्र प्रजानां प्रवेशो नामापत्योत्पत्तये प्रौढं समीचीनमश्वमानीय तत्राऽऽरोह-

शबलो भवति विद्युतमेवास्मै
जनयित्वा वर्षयति, इति।

श्वैत्यस्य मालिन्यविरोधित्वाद्विद्युत्साम्यम् ॥

कर्णसमीप एवावननशृङ्गत्वं विधत्ते—

अवाशृङ्गो भवति वृष्टिमेवास्मै नि यच्छति ॥, इति ॥

अधोमुखत्वेन वृष्टिधारासमत्वं द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-
दीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठ-
केऽष्टमोऽनुवाकः ॥ ८ ॥

---

(अथ द्वितीयाष्टके प्रथमप्रपाठके नवमोऽनुवाकः ।)

वरुणꣳ सुषुवाणमन्नाद्यं नोपानमत्स एतां वारुणीं कृष्णां वशामपश्यत्ताꣳ स्वायै देवतायां आऽलभत ततो वै तमन्नाद्यमुपानमद्य-मलमन्नाद्याय सन्तमन्नाद्यं नोपनमेत्स एतां वारुणीं कृष्णां वशामा लभेत वरुणमेव स्वेन भागधेयेनोप धावति स एवास्मा अन्नं प्र यच्छत्यन्नादः (१) एव भवति कृष्णा भवति वारुणी ह्येषा देवतया समृद्ध्यै मैत्रꣳ श्वेतमा लभेत वारुणं कृष्णमपां चौषधीनां च संधावन्नकामो मैत्रीर्वा ओषधयो वारुणी-रापोऽपां च खलु वा ओषधीनां च रसमुप

जीवामो मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवास्मा अन्नं प्र यच्छतोऽन्नाद एव भवति ( २ ) अपां चौषधीनां च संधावा लभेत उभयस्यावरुद्ध्यै विशाखो यूपो भवति द्वे ह्येते देवते समृद्ध्यै मैत्रꣳ श्वेतमा लभेत वारुणं कृष्णं ज्योगामयावी यन्मैत्रो भवति मित्रेणैवास्मै वरुणꣳ शमयति यद्वारुणः साक्षादेवैनं वरुणपाशान्मुञ्चत्युत यदीतासुर्भवति जीवत्येव देवा वै पुष्टिं नाविन्दन् ( ३ ) तां मिथुनेऽपश्यन्तस्यां न समराधयन्तावश्विनावब्रूतामावयोर्वा एषा मैतस्यां वदध्वमिति साऽश्विनोरेवाभवद्यः पुष्टिकामः स्यात्स एतामाश्विनीं यमीं वशामा लभेताश्विनावेव स्वेन भागधेयेनोप धावति तावेवास्मिन्पुष्टिं धत्तः पुष्यति प्रजया पशुभिः ( ४ ) ।

( अन्नादोऽन्नाद एव भवत्यविन्दन्पञ्चचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ द्वितीयाष्टके प्रथमप्रपाठके नवमोऽनुवाकः । )

---

वरुणम् । सुषुवाणम् । अन्नाद्यमित्यन्न—अद्यम् ।

न । उपेति । अनमत् । सः । एताम् । वारुणीम् । कृष्णाम् । वशाम् । अपश्यत् । ताम् । स्वायै । देवतायै । एति । अलभत । ततः । वै । तम् । अन्नाद्यमित्यन्न—अद्यम् । उपेति । अनमत् । यम् । अलम् । अन्नाद्यायेत्यन्न—अद्याय । सन्तम् । अन्नाद्यमित्यन्न—अद्यम् । न । उपनमेदित्युप—नमेत् । सः । एताम् । वारुणीम् । कृष्णाम् । वशाम् । एति । लभेत । वरुणम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मै । अन्नम् । प्रेति । यच्छति । अन्नाद इत्यन्न—अदः ( १ ) । एव । भवति । कृष्णा । भवति । वारुणी । हि । एषा । देवतया । समृद्ध्या इति सम्—ऋद्ध्यै । मैत्रम् । श्वेतम् । एति । लभेत । वारुणम् । कृष्णम् । अपाम् । च । ओषधीनाम् । च । संधाविति सं—धौ । अन्नकाम इत्यन्न—कामः । मैत्रीः । वै । ओषधयः । वारुणीः । आपः । अपाम् । च । खलु । वै । ओषधीनाम् । च । रसम् । उपेति । जीवामः । मित्रावरुणाविति मित्रा—वरुणौ । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । तौ । एव । अस्मै । अन्नम् ।

( अन्नाद्यकामादीनां पशुविधिः )

प्रति । यच्छतः । अन्नाद इत्यन्न—अदः । एव ।
भवति ( २ ) । अपाम् । च । ओषधीनाम् । च ।
संधाविति सं—धौ । एति । लभते । उभयस्य ।
अवरुद्ध्या इत्यव—रुद्ध्यै । विशाख इति वि—
शाखः । यूपः । भवति । द्वे इति । हि । एते इति ।
देवते इति । समृद्ध्या इति सम्—ऋद्ध्यै । मैत्रम् ।
श्वेतम् । एति । लभेत । वारुणम् । कृष्णम् । ज्योगा-
मयावीति ज्योक्—आमयावी । यत् । मैत्रः । भवति ।
मित्रेण । एव । अस्मै । वरुणम् । शमयति । यत् ।
वारुणः । साक्षादिति स—अक्षात् । एव । एनम् ।
वरुणपाशादिति वरुण—पाशात् । मुञ्चति । उत ।
यदि । इतासुरितीत—असुः । भवति । जीवति ।
एव । देवाः । वै । पुष्टिम् । न । अविन्दन् ( ३ ) ।
ताम् । मिथुने । अपश्यन् । तस्याम् । न । समिति ।
अराधयन् । तौ । अश्विनौ । अब्रूताम् । आवयोः ।
वै । एषा । मा । एतस्याम् । वदध्वम् । इति । सा ।
अश्विनोः । एव । अभवत् । यः । पुष्टिकाम इति
पुष्टि—कामः । स्यात् । सः । एताम् । आश्विनीम् ।
यमीम् । वशाम् । एति । लभेत । अश्विनौ । एव ।
स्वेन । भागधेयेनेति भाग—धेयेन । उप । धावति ।

धावति । तौ । एव । अस्मिन् । पुष्टिम् । धत्तः । पुष्यति । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( अथ द्वितीयकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः । )

ब्रह्मतेजेऽभिचारं च यज्ञप्राप्तिं तथा पशून् ।
समयं च तथा वृष्टिं वाञ्छतां पशवः श्रुताः ॥ १ ॥

तान्पशूनष्टमेऽनुवाके विधायाथ नवमेऽन्नाद्यकामादीनां पशून्विधित्सुरादौ कंचित्पशुं विधातुं प्रस्तौति—

वरुण॒ꣳ सुषुवाणमन्नाद्यं नोपानमत्स एतां वारुणीं कृष्णां वशामपश्यत्ता॒ꣳ स्वायै देवताया आऽलभत ततो वै तमन्नाद्यमुपानमत्, इति ।

सुषुवाणं सोमाभिषवं कृतवन्तम् ॥

विधत्ते—

यमलमन्नाद्याय सन्तमन्नाद्यं नोपनमेत्स एतां वारुणीं कृष्णां वशामा लभेत वरुणमेव स्वेन भागधेयेनोप धावति स एवास्मा अन्नं प्र यच्छत्यन्नाद एव भवति कृष्णा भवति वारुणी ह्येषा देवतया समृद्ध्यै, इति ।

धनिकः पुमानन्नं योग्याय शाल्यन्नपायसादिभोज्याय समर्थोऽपि संविभा-

तृणमनुष्याभावादिना तन्न प्राप्नुयात्तस्यायं पशुः। वरुणः पर्जन्यमुखेन प्रकाश मावृत्य कार्ष्ण्यं संपादयति। ततोऽस्य पशुवर्णस्य वरुणदेवत्यत्वम् ॥

द्विपशुकं कर्म विधत्ते—

मैत्रꣳ श्वेतमा लभेत वारुणं कृष्णमपां चौष-
धीनां च संधावन्नकामो मैत्रीर्वा ओषधयो
वारुणीरापोऽपां च खलु वा ओषधीनां
च रसमुप जीवामो मित्रावरुणावेव स्वेन
भागधेयेनोप धावति तावेवास्मा अन्नं
प्र यच्छतोऽन्नाद एव भवति, इति।

संधिशब्दं कालपरत्वेन देशपरत्वेन च द्वेधा सत्रकारो व्याख्यातवान्— "अपां चौषधीनां च संधाविति प्रावृषि शरत्प्रतिपत्तौ। वाऽपि वाऽपां चौष-धीनां च संधौ" इति। कूल्योर्मध्ये नदीक्षेत्रयोर्मध्य इति तस्यार्थः। ओषधी-नामुपकारकत्वेन मित्रसंबन्धित्वम्। संधौ प्रयोग उभयरसोपजीवनेन प्रशस्तः॥

एतदेवाभिप्रेत्य संधिं प्रशंसति—

अपां चौषधीनां च संधावा-
लभत उभयस्यावरुद्ध्यै। इति॥

यूपस्य शाखाद्वयं विधत्ते—

विशाखो यूपो भवति द्वे ह्येते देवते समृद्ध्यै, इति।

विविधे शाखे यस्यासौ विशाखः। तदिदं सूत्रकारो दर्शयति—"विशाखो यूप इति यदूर्ध्वं रशनायास्तद्विशाग्रं यद्वोपरशुमे शाखे अष्टाश्री सचषाले स्याताम्" इति॥

दीर्घरोगिणो द्विपशुकं कर्म विधत्ते—

मैत्रꣳ श्वेतमा लभेत वारुणं कृष्णं ज्योगा-
मयावी यन्मैत्रो भवति मित्रेणैवास्मै वरु-
णꣳ शमयति यद्वारुणः साक्षादेवैनं वरुण-
पाशान्मुञ्चत्युत यदीतासुर्भवति जीवत्येव, इति।

---

१ ख. °त्तौ, अपि चापा। च° °त्तौ वाऽपा।

मित्रो हि क्रूरं वरुणं शान्तं करोति । स च वरुणपाशान्मोचयति । तयोः पृथगुपक्रमः ॥

पुष्टिकामस्य पशुं विधातुं प्रस्तौति—

देवा वै पुष्टिं नाविन्दन्तां मिथुनेऽपश्यन्तस्यां न समराधयन्तावश्विनावब्रूतामावयोर्वा एषा मैतस्यां वदध्वमिति साऽश्विनोरेवाभवत्, इति ।

प्रजापशुसमृद्धिः पुष्टिः । सा च मनुष्यमिथुने पशुमिथुने च संगच्छतीत्येवं देवा उपायमपश्यन् । दृष्ट्वा च तस्यां पुष्टौ सम्यगाराधयितुं समर्था नाभवन् । तदानीमश्विनावूचतुः—आवयोरेवैषा पुष्टिः सर्वथेति । तस्मादेतस्यां पुष्टावावाभ्यां विना मा वदध्वं संवादमपि मा कुरुतेति । तस्मात्सा पुष्टिरश्विनोरधीनाऽभवत् ॥

विधत्ते—

यः पुष्टिकामः स्यात्स एतामाश्विनीं यमीं वशामालभेताश्विनावेव स्वेन भागधेयेनोप धावति तावेवास्मिन्पुष्टिं धत्तः पुष्यति प्रजया पशुभिः ॥, इति ॥

एकस्मिन्गर्भे सह जातौ यमौ, तयोर्मध्ये या स्त्री सा यमी ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( अथ द्वितीयाष्टके प्रथमप्रपाठके दशमोऽनुवाकः । )

आश्विनं धूम्रललाममा लभेत यो दुर्ब्राह्मणः सोमं पिपासेदश्विनौ वै देवानामसोमपावास्तां तौ पश्चा सोमपीथं प्राऽऽप्नुताम-

श्विनावेतस्य देवता यो दुर्ब्राह्मणः सोमं पिपा-
सत्यश्विनावेव स्वेन भागधेयेनोप धावति
तावेवास्मै सोमपीथं प्र यच्छत उपैनꣳ सोम-
पीथो नमति यद्बभ्रो भवति भ्रूमिमार्णमेवा-
स्मादप हन्ति ललामः ( १ ) भवति मुखत
एवास्मिन्तेजो दधाति वायव्यं गोमृगमा लभेत
यमजनित्वाऽऽसमभिशꣳसेयुरपूता वा एतं वागृ-
च्छति यमजनित्वाऽऽसमभिशꣳसन्ति नैष
ग्राम्यः पशुर्नाऽऽरण्यो यद्गोमृगो नेवैष ग्रामे
नारण्ये यमजनित्वाऽऽसमभिशꣳसन्ति वायुर्वै
देवानां पवित्रं वायुमेव स्वेन भागधेयेनोप
धावति स एव ( २ ) एनं पवयति पराची वा
एतस्मै व्युच्छन्ती व्युच्छति तमः पाप्मानं
प्र विशति यस्याऽऽश्विने शस्यमाने सूर्यो
नाऽऽविर्भवति सौर्यं बहुरूपमा लभेतामुमे-
वाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स
एवास्मात्तमः पाप्मानमप हन्ति प्रतीच्यस्मै
व्युच्छन्ती व्युच्छत्यप तमः पाप्मानꣳ
हते ( ३ ) ॥

( ललाम स एव षट्चत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ द्वितीयाष्टके प्रथमप्रपाठके दशमोऽनुवाक । )

---

आश्विनम् । धूम्रललाममिति धूम्र—ललामम् । एति । लभेत । यः । दुर्ब्राह्मण इति दुः—ब्राह्मणः । सोमम् । पिपासेत् । अश्विनौ । वै । देवानाम् । असोमपाविनावित्यसोम—पौ । आस्ताम् । तौ । पश्चा । सोमपीथमिति सोम—पीथम् । प्रति । आप्नुताम् । अश्विनौ । एतस्य । देवता । यः । दुर्ब्राह्मण इति दुः—ब्राह्मणः । सोमम् । पिपासति । अश्विनौ । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । तौ । एव । अस्मै । सोमपीथमिति सोम—पीथम् । प्रेति । यच्छतः । उपेति । एनम् । सोमपीथ इति सोम—पीथः । नमति । यत् । धूम्रः । भवति । धूम्रिमाणम् । एव । अस्मात् । अपेति । हन्ति । ललामः ( १ ) । भवति । मुखतः । एव । अस्मिन् । तेजः । दधाति । वायव्यम् । गोमृगमिति गो—मृगम् । एति । लभेत । यम् । अजघ्निवांसम् ।

अभिशःमेंयुरित्यभि—शःमेंयुः । अपेना । वै ।
एतम् । वाक् । ऋच्छति । यत्र । अजंभिवाःमम् ।
अभिशःमन्तीत्यभि—शःमंन्ति । न । एषः । ग्राम्यः ।
पशुः । न । आरण्यः । यत्र । गोमृग इति गो—
मृगः । न । इव । एषः । ग्रामे । न । अरण्ये । यम् ।
अजंभिवाःमम् । अभिशःमन्तीत्यभि—शःमंन्ति ।
वायुः । वै । देवानांम् । पवित्रम् । वायुम् । एव ।
स्वेनं । भागधेयेनेति भाग—धेयेन । उपेति । धावति ।
सः । एव(२) । एनम् । पवयति । पराची । वै । एतस्मै ।
व्युच्छन्तीति वि—उच्छन्ती । वीति । उच्छति ।
तमः । पाप्मानम् । प्रेति । विशति । यस्यं । आश्विने ।
शस्यमाने । सूर्यः । न । आविः । भवति । सौर्यम् ।
बहुरूपमिति बहु—रूपम् । एति । लभेत । अमुम् ।
एव । आदित्यम् । स्वेनं । भागधेयेनेति भाग—
धेयेन । उपेति । धावति । सः । एव । अस्मात् ।
तमः । पाप्मानम् । अपेति । हन्ति । प्रतीची ।
अस्मै । व्युच्छन्तीति वि—उच्छन्ती । वीति । उच्छति ।
अपेति । तमः । पाप्मानम् । हते । ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके
प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ द्वितीयकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः । )

---

अन्नाद्यमन्नपात्रं च वाञ्छन्तौ दीर्घरोगवान् ।
पुष्टिकामश्च नवम एतेषां पशवः श्रुताः ॥ १ ॥

अथ दशमेऽनुवाके नैमित्तिकाः पशवो विधातव्याः । तत्र दुर्ब्राह्मणस्य सोमपानेच्छां निमित्तीकृत्य पशुं विधत्ते—

आश्विनं धूम्रललाममा लभेत यो दुर्ब्राह्मणः सोमं पिपासेदश्विनौ वै देवानामसोमपावास्तां तौ पश्चा सोमपीथं प्राऽऽप्नुतामश्विनावेतस्य देवता यो दुर्ब्राह्मणः सोमं पिपासत्यश्विनावेव स्वेन भागधेयेनोप धावति तावेवास्मै सोमपीथं प्र यच्छत उपैनꣳ सोमपीथो नमति यद्धूम्रो भवति धूम्रिमाणमेवास्मादप हन्ति ललामो भवति मुखत एवास्मिन्तेजो दधाति, इति ।

मलिनश्वेतत्वं धूम्रत्वम् । ललाटे शौक्ल्येन लाञ्छितोऽवशिष्टे शरीरे धूम्रवर्णः पशुरश्विनोः प्रियः । दुर्ब्राह्मणलक्षणं बौधायन आह—

"यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः ॥" इति ॥

पर्वोक्तपुनरुत्सृष्टपशो यो ब्राह्मणः सन्ना तृतीयादित्युक्तत्वादीदृशो दुर्ब्राह्मणो नाधिकारी । अत्र तु सोमपाने श्रद्धालुत्वेनेच्छावत्त्वे सति दुर्ब्राह्मणोऽधिक्रियते । आश्विनग्रहब्राह्मणे तौ देवा अब्रुवन्नपतौ वा इमौ मनुष्यचरौ भिषजा इत्युक्तत्वादपूतयोरितरदेववत्सोमपातृत्वं नास्ति । पश्चाद्यज्ञस्य च्छिन्नं शिरः प्रतिसंधाय तेन तुष्टेभ्यो देवेभ्यः सोमग्रहं लब्धवन्तौ । तदपि तत्रैवाऽऽम्नातम्—" तौ बहिष्पवमानेन पवयित्वा ताभ्यामेतमाश्विनमगृह्णन् " इति । अतः समानशीलत्वाद्दुर्ब्राह्मणस्य सोमं पिपासोरश्विनौ देवता । पशोर्धूम्रत्ववर्णेन दौर्ब्राह्मण्यलक्षणं धूम्रिमाणं मालिन्यमस्मादपहन्ति । ललाटे शौक्ल्येनास्मिन्मुखत एव मुख्यमेव ब्रह्मवर्चसलक्षणं तेजो धत्ते ॥

मिथ्यापवादं निमित्तीकृत्य कंचित्पशुं विधत्ते—

वायव्यं गोमृगमा लभेत यमजघ्निवाꣳसमभिशꣳसेयुरपूता वा एनं वागृच्छति यमजघ्निवाꣳसमभिशꣳसन्ति नैष ग्राम्यः पशुर्नाऽऽरण्यो यद्गोमृगो नेवैष ग्रामे नारण्ये यमजघ्निवाꣳसमभिशꣳसन्ति वायुर्वै देवानां पवित्रं वायुमेव स्वेन भागधेयेनोप धावति स एवैनं पवयति, इति।

गोभिः सहारण्ये चरितु गवादृषभात्कस्याञ्चिन्मृग्यामुत्पन्नो गोमृगः। उभयलक्षणदर्शनात्तथात्वं निश्चेयम्। कश्चित्पुरुषो ब्राह्मणं न हतवांस्तथाऽपि शङ्कया तादृशं यं पुरुषं जना ब्रह्महत्यपवदेयुस्तस्यायं पशुः। यद्यप्यस्य पुरुषस्य ब्रह्महत्याप्रयुक्तो नरको नास्ति तथाऽप्यपूता वागृच्छत्येनं निन्दारूपा वाक्शङ्कितजनैः क्रियमाणा प्राप्नोत्येव। तामेव निन्दां निमित्तीकृत्यैष विहितो गोमृगो मुख्यो ग्राम्यो न भवति मृग्यामुत्पन्नत्वात्। नापि मुख्य आरण्यो वृषभादुत्पन्नत्वात्। अभिशस्तस्य ग्रामे नास्ति वासो बन्धुभिः सह व्यवहाराभावात्, नापि वानप्रस्थादिवदरण्ये ग्रामवासित्वात्। देवानां मध्ये वायोः पवित्रत्वं द्रव्यशुद्धिहेतुत्वादवगम्यते। तच्च याज्ञवल्क्येन स्मर्यते—

"रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः।
मरुताऽर्केण शुध्यन्ति पक्वेष्टकचितानि च॥" इति॥

अनुष्ठितेऽप्यस्मिन्पशौ निन्दां केचिल्लौकिका न परित्यजन्तीति चेत्तर्हि निन्दन्तु नाम ते, तथाऽप्ययमाबामज्ञैः शिष्टव्यवहार्य एव॥

सोमयागस्य आश्विनशस्त्रकाले सूर्यानाविर्भावं निमित्तीकृत्य कंचित्पशुं विधत्ते—

पराची वा एतस्मै व्युच्छन्ती व्युच्छति तमः पाप्मानं प्र विशति यस्याऽऽश्विने शस्यमाने सूर्यो नाऽऽविर्भवति सौर्यं बहुरूपमा लभेतामु-

मेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवास्मात्तमः पाप्मानमप हन्ति प्रतीच्यस्मै व्युच्छन्ती व्युच्छत्यप तमः पाप्मानꣳ हते ॥, इति॥

अग्निर्होता गृहपतिः स राजेत्यादिकं सहस्रसंख्याकाभिर्ऋग्भिरुपेतं शस्त्रमाश्विनम्[1] । तच्चातिरात्रयागे रात्रिपर्यायनामकेषु शस्त्रेषु पठितेषु पश्चात्प्रातर्वेलायामारब्धव्यम् । तस्मिञ्शस्त्रे शस्यमाने सति सूर्य उदित्वा मेघाद्यावरणमन्तरेण यदाऽऽविर्भवेत्तदा नायं पशुरपेक्षितः । यस्य यजमानस्य तदानीं नाऽऽविर्भवेत्, एतस्मै यजमानायेयं रात्रिर्व्युच्छन्ती प्रभातं प्राप्नुवती सती न सम्यक्प्राप्नोति, किं तु पराची व्युच्छन्ती पराङ्मुखी तस्मिन्नपरक्ता सती प्रभातं प्राप्नोति । तदानीमयं यजमानः प्रकाशविरुद्धं तमः स्वर्गविरोधिनं पाप्मानं च प्रविशति, तादृशस्यायं पशुः । स च बहुरूपश्चित्रवर्णः । प्रतीची संमुखी तस्मिन्ननुरक्तेत्यर्थः । तेन पशुना तमः पाप्मानं चापहन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ द्वितीयकाण्डे प्रथमप्रपाठक एकादशोऽनुवाकः । )

---

इन्द्रं वो विश्वतस्परीन्द्रं नरो मरुतो यद्ध वो दिवो या वः शर्म । अग्नेष्विन्द्रꣳ सुहवꣳ हवामहेऽꣳहोमुचꣳ सुकृतं दैव्यं जनम् । अग्निं मित्रं वरुणꣳ सातये भगं द्यावापृथिवी मरुतः स्वस्तये । ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपां वृषण्वान् । शिशीतमिन्द्रा-

---

[1] रा च नेषु पञ्चादृश ।

पर्वता इह नस्तन्नो विश्वे वरिवस्यन्तु देवाः।
प्रिया वो नाम ( १ ) हुवे तुराणाम् । आ
यत्तृपन्मरुतो वावशानाः । श्रियसे कं भा-
नुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः
सुखादयः। ते वाशीमन्त इष्मिणो अभी-
रवो विद्रे प्रियस्य मारुतस्य धाम्नः । अग्निः
प्रथमो वसुभिर्नो अव्यात्सोमो रुद्रेभिरभि
रक्षतु त्मना। इन्द्रो मरुद्भिर्ऋतुधा कृणोत्वा-
दित्यैर्नो वरुणः सं शिशातु। सं नो देवो
वसुभिरग्निः सं ( २ ) सोमस्तनूभी रुद्रि-
याभिः । समिन्द्रो मरुद्भिर्यज्ञियैः समादि-
त्यैर्नो वरुणो अजिज्ञिपत् । यथाऽऽदित्या
वसुभिः संबभूवुर्मरुद्भी रुद्राः समजानताभि।
एवा त्रिणामन्नहृणीयमाना विश्वे देवाः सम-
नसो भवन्तु। कुत्रा चिद्यस्य समृतौ रण्वा
नरो नृषदने। अर्हन्तश्चिद्यमिन्धते संजनयन्ति
जन्तवः। सं यदिषो वनामहे सं हव्या मा-
नुषाणाम्। उत द्युम्नस्य शवसः ( ३ ) ऋ-
तस्य रश्मिमा ददे । यज्ञो देवानां प्रत्येति
सुम्नमादित्यासो भवता मृडयन्तः। आ वोऽ-

वीची॑ सुम॒तिर्व॑वृत्याद॒ꣳहोश्चि॒द्या व॑रिवो॒वित्त॑-
रा॒ऽस॑त् । शुचि॑र॒पः सू॒यव॑सा॒ अद॑ब्ध॒ उप॑
क्षेति वृ॒द्धव॑याः सु॒वीरः॑ । नकि॒ष्टं घ्न॒न्त्यन्ति॑तो॒
न दू॒राद्य आ॑दि॒त्यानां॒ भव॑ति॒ प्रणी॑तौ । धा॒र-
य॑न्त आदि॒त्यासो॒ जग॒त्स्था दे॒वा विश्व॑स्य॒
भुव॑नस्य गो॒पाः । दी॒र्घाधि॑यो॒ रक्ष॑माणाः
( ४ ) अ॒सु॒र्य॑मृ॒तावा॒नश्चय॑माना ऋ॒णानि॑ ।
ति॒स्रो भूमी॑र्धारय॒न्त्रीꣳरु॒त द्यून्त्रीणि॑ व्र॒ता
वि॒दथे॑ अ॒न्तरे॑षाम् । ऋ॒तेना॑ऽऽदित्या॒ महि॑ वो
महि॒त्वं तद॑र्यमन्वरुण मित्र॒ चारु॑ । त्यान्नु क्ष॒-
त्रिया॒ꣳ अव॑ आदि॒त्यान्या॑चिषामहे । सु॒मृ॒डी॒-
का॒ꣳ अ॒भिष्ट॑ये । न द॑क्षि॒णा वि चि॑किते॒ न
स॒व्या न प्रा॒चीन॑मादित्या॒ नोत प॒श्चा ।
पा॒क्या॑ चिद्वसवो धी॒र्या॑ चि॒त् ( ५ ) यु॒ष्मा-
नी॑तो॒ अभ॑यं॒ ज्योति॑रश्याम् । आ॒दि॒त्याना॒म-
व॑सा॒ नूत॑नेन सक्षी॒महि॒ शर्म॑णा॒ शंत॑मेन ।
अ॒ना॒गा॒स्त्वे अ॑दिति॒त्वे तु॒रास॑ इ॒मं य॒ज्ञं द॑धतु
श्रोष॑माणाः । इ॒मं मे॑ वरुण श्रुधी॒ हव॑म॒द्या
च॑ मृडय । त्वाम॑व॒स्युरा च॑के । तत्त्वा॑ यामि॒
ब्रह्म॑णा॒ वन्द॑मान॒स्तदा शा॑स्ते॒ यज॑मानो ह॒-

विर्भिः। अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्र मोषीः (६).॥

(नामाग्नि स्मरे शतेमा रक्षमाणा धीयो चिदकाश्वपञ्चाशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः॥ ११॥

वायव्यं प्रजापतिस्ता वरुणं देवासुरा एष्वमावादित्येभ्यो दर्शपूर्णमासमिन्द्रो बलस्य बार्हस्पत्यं वषट्कारोऽसौ सर्गे वरुणमाश्विनमिन्द्रं वो नर एकादश (११)॥

वायव्यमाग्नेयीं कृष्णग्रीवीममावादित्येभ्यो वा अहोरात्राणि वषट्कारः प्रजनयिता हुवे तुराणां पञ्चषष्टिः॥ ६५॥

हरिः ॐ।

इति तैत्तिरीयसंहितायां द्वितीयाष्टके प्रथमः प्रपाठकः॥ १॥

(अथ द्वितीयाष्टके प्रथमप्रपाठके एकादशोऽनुवाकः।)

---

इन्द्रम्। वः। विश्वतः। परीति। इन्द्रम्। नरः। मरुतः। यत्। ह। वः। दिवः। या। वः। शर्म। भरेषु। इन्द्रम्। सुहवमिति सु—हवम्। हवामहे। अꣳहोमुचमित्यꣳहः—मुचम्। सुकृतमिति सु—कृतम्। दैव्यम्। जनम्। अग्निम्। मित्रम्। वरुणम्। सातये। भगम्। द्यावापृथिवी इति द्यावा—पृथिवी। मरुतः। स्वस्तये। ममत्तु। नः। परिज्मेति

परि—ज्मा । वमहा । ममत्तु । वातः । अपाम् ।
वृषण्वानिति वृषण्—वान् । शिशीतम् । इन्द्रापर्व-
तेतीन्द्रा—पर्वता । युवम् । नः । तत् । नः । विश्वे ।
वरिवस्यन्तु । देवाः । प्रिया । वः । नाम ( १ ) ।
हुवे । तुराणाम् । एति । यत् । तृपत् । मरुतः ।
वावशानाः । श्रियसे । कम् । भानुभिरिति भानु—
भिः । समिति । मिमिक्षिरे । ते । रश्मिभिरिति
रश्मि—भिः । ते । ऋक्वभिरित्यृक्व—भिः । सुखादय
इति सु—खादयः । ते । वाशीमन्त इति वाशि—
मन्तः । इष्मिणः । अभीरवः । विद्रे । प्रियस्य ।
मारुतस्य । धाम्नः । अग्निः । प्रथमः । वसुभिरिति
वसु—भिः । नः । अव्यात् । सोमः । रुद्रेभिः ।
अभीति । रक्षतु । त्मना । इन्द्रः । मरुद्भिरिति मरु-
त्—भिः । ऋतुथेत्यृतु—था । कृणोतु । आदित्यैः ।
नः । वरुणः । समिति । शिशातु । समिति । नः ।
देवः । वसुभिरिति वसु—भिः । अग्निः । समिति(२)।
सोमः । तनूभिः । रुद्रियाभिः । समिति । इन्द्रः ।
मरुद्भिरिति मरुत्—भिः । यज्ञियैः । समिति । आ-
दित्यैः । नः । वरुणः । अजिज्ञिपत् । यथा । आदि-
त्याः । वसुभिरिति वसु—भिः । संबभूवुरिति सं—

बभूवुः । मरुद्भिरिति मरुत्—भिः । रुद्राः । समजानतेति सम्—अजानत । अभि । एवा । त्रिणामन्निति त्रि—नामन् । अहृणीयमानाः । विश्वे । देवाः । समनस इति स—मनसः । भवन्तु । कुत्र । चित् । यस्य । समृताविति सम्—ऋतौ । रण्वाः । नरः । नृषदन इति नृ—सदने । अर्हन्तः । चित् । यम् । इन्धते । संजनयन्तीति सं—जनयन्ति । जन्तवः । समिति । यत् । इषः । वनामहे । समिति । हव्या । मानुषाणाम् । उत । द्युम्नस्य । शवसः (३) । ऋतस्य । रश्मिम् । एति । ददे । यज्ञः । देवानाम् । प्रतीति । एति । सुम्नम् । आदित्यासः । भवत । मृडयन्तः । एति । वः । अर्वाची । सुमतिरिति सु—मतिः । ववृत्यात् । अंहोः । चित् । या । वरिवोवित्तरेति वरिवोवित्—तरा । असत् । शुचिः । अपः । सूयवसा इति सु—यवसा । अदब्धः । उपेति । क्षेति । वृद्धवया इति वृद्ध—वयाः । सुवीर इति सु—वीरः । नकिः । तम् । घ्नन्ति । अन्तितः । न । दूरात् । यः । आदित्यानाम् । भवति । प्रणीताविति प्र—नीतौ । धारयन्तः । आदित्यासः । जगत् । स्थाः । देवाः । विश्वस्य । भुवनस्य । गोपा इति

गो—पाः । दीर्घाधिय इति दीर्घ—धियः । रक्षमाणाः ( ४ ) । असुर्यम् ऋतावान इत्यृत—वानः । चयमानाः । ऋणानि । तिस्रः । भूमीः । धारयन् । त्रीन् । उत । द्यून् । त्रीणि । व्रता । विदथे । अन्तः । एषाम् । ऋतेन । आदित्याः । महि । वः । महित्वमिति महि—त्वम् । तत् । अर्यमन् । वरुण । मित्र । चारु । स्यात् । नु । क्षत्रियान् । अवः । आदित्यान् । याचिषामहे । सुमृडीकानिति सु—मृडीकान् । अभिष्टये । न । दक्षिणा । वीति । चिकिते । न । सव्या । न । प्राचीनम् । आदित्याः । न । उत । पश्चा । पाक्या । चित् । वसवः । धीर्या । चित् ( ५ ) । युष्मानीतः । अभयम् । ज्योतिः । अश्याम् । आदित्यानाम् । अवसा । नूतनेन । सक्षीमहि । शर्मणा । शंतमेनेति शं—तमेन । अनागास्त्व इत्यनागाः—त्वे । अदितित्व इत्यदिति—त्वे । तुरासः । इमम् । यज्ञम् । दधतु । श्रोषमाणाः । इमम् । मे । वरुण । श्रुधि । हवम् । अद्य । च । मृडय । त्वाम् । अवस्युः । एति । चके । तत् । त्वा । यामि । ब्रह्मणा । वन्दमानः । तत् । एति । शास्ते । यजमानः । हविर्भिरिति हविः—भिः । अहेडमानः ।

( काम्येष्टियाज्यापुरोनुवाक्याभिधानम् )

वरुण । इह । बोधि । उरुशंसेत्युरु—शंसम । मा । नः । आयुः । प्रति । मोषीः ( ८६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

हरिः ॐ ।

इति तैत्तिरीयसंहितापदपाठे द्वितीयाष्टके प्रथमः प्रपाठकः ॥ १ ॥

( अथ द्वितीयकाण्डे प्रथमप्रपाठके एकादशोऽनुवाकः । )

दौब्राह्मण्याभिशापौ च मृत्योरभ्यावर्जनम् ।
निमित्तीकृत्य दशमे पशवः समुदीरिताः ॥ १ ॥

तैरेतैर्दशभिरनुवाकैः काम्यपशवः समाप्ताः । अथैकादशेऽनुवाके काम्येष्टियाज्या [ पुरोनुवाक्या ] उच्यन्ते ।

तस्मिंश्च काम्येष्टिकाण्डे पूर्वोदाहृताग्नेयादिचरुभ्य ऊर्ध्वं द्विहविष्का काचिदिष्टिरेवमाम्नायते—

“ ऐन्द्रमेकादशकपालं निर्वपेन्मारुतं सप्तकपालं ग्रामकाम इन्द्रं चैव मरुतश्च स्वेन भागधेयेनोप धावति त एवास्मै सजातान्प्र यच्छन्ति ग्राम्येव भवति ” [ सं० का० २ प्र० २ अ० ११ ] इति ॥

प्रकृतौ सह प्रयुज्यमानयोरपि द्वयोः पुरोडाशयोरेकस्मिन्नेवाधिश्रयणम्, इह तु तद्बाधितुं विधत्ते—

“ आहवनीय ऐन्द्रमधि श्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै ” [ सं० का० २ प्र० २ अ० ११ ] इति ।

पापेन वस्यसं वसुमत्तरं पापवस्यसं पापाधिक्ययोर्मिश्रणमित्यर्थः । मरुतामुग्रदेवत्वात्तदीयं हविः पापवस्यसम् । ऐन्द्रस्य तद्धविषो विभागेनावधारणार्थं भिन्नाग्नावधिश्रयणम् ॥

तत्रत्यकपालसंख्यां प्रशंसति—

" सप्तकपालो मारुतो भवति सप्तगणा वै मरुतो गणश एवास्मै सजातानव रुन्धे " [ सं० का० २ प्र० २ अ० ११ ] इति।

ईदृङ्चेत्यादिनोक्ताः सप्तसंख्याका मरुत एको गणः। तथाविधाश्च गणाः सप्तसंख्याकाः। तेषां हविष्प्रदानेन गणशो बहुविधगणरूपान्भ्रातृमित्रभृत्यादीनवरुन्धे॥

प्रकृतौ सामिधेनीमंत्रानुवचनात्प्रागेव हविरासादनं, तदपवदितुं विधत्ते—

" अनूच्यमान आ सादयति विशमेवास्मा अनुवर्त्मानं करोति " [ सं० का० २ प्र० २ अ० ११ ] इति।

अत्र सूत्रकारः " ऐन्द्रमासादयति सामिधेनीष्वनूच्यमानासु मारुतम् " इति। यजमानस्यानुकूलं वर्त्म वर्तनं यस्या विशः सेयमनुवर्त्मा॥

अनयोरुभयोर्हविषोर्याज्यानुवाक्यानां पूर्वकाण्ड एव समाम्नातानां प्रतीकानुदाहरति—

इन्द्रं वो विश्वतस्परीन्द्रं नरो मरुतो
यद्ध वो दिवो या वः शर्म ।, इति।

प्रथमं युग्मं षष्ठप्रपाठकस्यान्त्यानुवाके पठितं, द्वितीयं युग्मं तु पञ्चमप्रपाठकस्यान्त्यानुवाके पठितम्। तदर्थस्तु तत्रैव द्रष्टव्यः॥

उक्तामेवेष्टिं फलान्तराय विधत्ते—

" एतामेव निर्वपेद्यः कामयेत क्षत्राय च विशे च समदं दध्यामित्यैन्द्रस्यावद्यन्ब्रूयादिन्द्रायानु ब्रूहीत्याश्राव्य ब्रूयान्मरुतो यजेति मारुतस्यावद्यन्ब्रूयान्मरुद्भ्योऽनु ब्रूहीत्याश्राव्य ब्रूयादिन्द्रं यजेति स्व एवैभ्यो भागधेये समदं दधाति वितृꣳहाणास्तिष्ठन्ति " [ सं० का० २ प्र० २ अ० ११ ] इति।

मदेन सह वर्तत इति समदः कलहः। राज्ञः प्रजायाश्च परस्परं कलहं कुर्यामिति कामयितुरियमिष्टिः। अस्यामिष्टावयं प्रकृतेर्विशेषः—प्रकृतावाग्नेयस्यावदानकाले पुरोनुवाक्याप्रैषमुक्त्वा तदाश्रावणादूर्ध्वमाग्नेययाज्याया एव प्रैषं वदेत्, न तु देवतान्तरयाज्यायाः। इह त्वन्यविषयोऽनुवाक्याप्रैषोऽन्यविषयश्च याज्याप्रैष इति। एवं च सत्येभ्य इन्द्रमरुद्भ्यः स्वस्वभागे कलहं कृतवान्भवति। तदीयकलहानुसारेण राजा विशश्च वितृंहाणा विशेषेण परस्परं हिंसा कुर्वाणास्तिष्ठन्ति॥

---

१ ख. 'कान्युदा'।

कलहसमाधानकामस्य तामेवेष्टिं विधत्ते—

"एतामेव निर्वपेद्यः कामयेत कल्पेरन्निति यथादेवतमवदाय यथादेवतं यजेद्भागधेयेनैवैनान्यथायथं कल्पयति कल्पन्त एव" [ सं० का० २ प्र० २ अ० ११ ] इति।

कल्पेरन्परस्परकलहरहिता भवेयुः । एतानिन्द्रमरुतः स्वस्वभागभाजिनः कल्पयति । तथा सति राजा विशश्च कल्पन्त एव कलहरहिताः स्निग्धा भवन्त्येव । एतयोः कलहतत्समाधानार्थेष्ट्योः पर्वोदाहृता एव याज्यानुवाक्याः ॥

इष्ट्यन्तरं विधत्ते—

"ऐन्द्रमेकादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं ग्रामकाम इन्द्रं चैव विश्वांश्च देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै सजातान्प्र यच्छन्ति ग्राम्येव भवति" [ सं० का० २ प्र० २ अ० ११ ] इति ॥

प्रकृतौ हविर्द्वयस्य सहावदानं नास्ति । अत्र तु तद्विधत्ते—

"ऐन्द्रस्यावदाय वैश्वदेवस्यावद्येदथैन्द्रस्योपरिष्टादिन्द्रियेणैवास्मा उभयतः सजातान्परि गृह्णाति" [ सं० का० २ प्र० २ अ० ११ ] इति।

द्विर्हविषोऽवद्यतीति श्रुतत्वादैन्द्रस्य हविषो द्विरवदानं सकृत्कर्तव्यम् । तथा सत्यत्र सकृदैन्द्रमवदाय ततो वैश्वदेवं द्विरवदायपुनरप्युपरिष्टादैन्द्रमवद्येत् । एवं सति यजमानार्थं सजातान्ग्रामनिवासिनः सर्वानुभयोः पार्श्वयोरिन्द्रियसामर्थ्ययुक्तान्करोति ॥

अथ दक्षिणाविशेषं विधत्ते—

"उपाधाय्यपूर्वयं वासो दक्षिणा सजातानामुपहित्यै" [ सं० का० २ प्र० २ अ० ११ ] इति।

वस्त्रस्योभयपार्श्वान्तयोरुपानीय स्थापनीयं वस्त्रान्तद्वयम्, तच्च पत्नीवोपानयनकाले यत्र यानि प्रसिद्धानीति पूर्वम्, उपाधायि पूर्वं यस्य वस्त्रस्यासौ तदुपाधाय्यपूर्वयम् । अत एव सूत्रकारः—"उपाधाय्यपूर्वयं वासो दक्षिणा ( णेति ) चित्रान्तम्" इत्यर्थः (ति) । तादृशस्य वाससो दानं सजातानामुपहित्यै यजमानमेवाश्रयं संपद्यते ॥

अस्यामिष्टौ पुरोनुवाक्यामाह—

भगंप्विन्द्रं सुहवं हवामहेऽंहोमुचं सुकृतं दैव्यं जनम् । अग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुतः स्वस्तये । , इति।

इन्द्रमग्न्यादिदेवांश्च भरेषु ध्रियमाणेषु संपाद्यमानेषु हविःषु हवामहे आह्वयामः। किमर्थं, सातये देवेभ्यो हविर्दानाय, स्वस्त्यै यजमानस्य श्रेयसे च। कीदृशमिन्द्रं, सुहवं सुखेनाऽऽह्वातुं शक्यम्। अंहोमुचं पापान्मोचयितारं, सुकृतं शोभनं हितं करोतीति सुकृत्तं सुकृतं, दैव्यं दिवि भवं, जनं जनयितारं वृष्टिद्वारेण सस्याद्युत्पादकम्। अत्र पूर्वार्धस्येन्द्रविषयत्वादुत्तरार्धस्येतरबहुदेवविषयत्वाच्च हविर्द्वयस्यैकैव पुरोनुवाक्या ॥

तत्रैव याज्यामाह—

ममत्तु नः परिज्मा वसर्हा ममत्तु वातो
अपां वृषण्वान्। शिशीतमिन्द्रापर्वता
युवं नस्तन्नो विश्वे वरिवस्यन्तु देवाः।, इति।

परितः सर्वतो ज्मनं भक्षणं यस्याग्नेः सोऽयं परिज्मा। स च नोऽस्मान्ममत्तु हर्षयतु। वासरस्य हन्ता गमयिता सूर्यः, स च नो ममत्तु वातो नो ममत्तु। अपां वृषण्वान्वर्षकः पर्जन्यदेवो नो ममत्तु। पर्वतशब्देन कैलासादिपर्वतवासिदेवविशेषो हिमवान्वाऽभिधीयते। आश्वमेधिकेषु पशुविधिषु हिमवतो हस्तीति देवत्वश्रवणात्। हे इन्द्रापर्वतौ युवां नोऽस्माञ्छिशीतं तनू कुरुतम्। पापबहुलानामस्माकं पापक्षयस्तनूकरणम्। तत्तेन हविष्प्रदानेन विश्वे देवा नोऽस्मान्वरिवस्यन्तु परिचर्यासमयं कृपयाऽवलोकयन्तु ॥

इष्ट्यन्तरं विधत्ते—

" पृश्नियै दुग्धे प्रैयङ्गवं चरुं निर्वपेन्मरुद्भ्यो ग्रामकामः पृश्नियै वै पयसो मरुतो जाताः पृश्नियै प्रियङ्गवो मारुताः खलु वै देवतया सजाता मरुत एव स्वेन भागधेयेनोप धावति त एवास्मै सजातान्प्र यच्छन्ति ग्राम्येव भवति " [ सं० का० २ प्र० २ अ० ११ ] इति।

पृश्निः श्वेता गौस्तादृश्या गोर्मरुतां प्रियंगूनां( णां ) चोत्पत्तिप्रसिद्धिः शाखान्तरीयार्थवादे द्रष्टव्या। पृश्नियै प्रियंगव इत्यत्र पयसो जाता इत्यनुवर्तते। एकोदरत्वात्प्रियंगूनां (णा) मरुद्देवत्यत्वम् ॥

विधत्ते—

" प्रियवती याज्यानुवाक्ये भवतः प्रियमेवैनꣳ समानानां करोति द्विपदा पुरोनुवाक्या भवति द्विपद एवाव रुन्धे चतुष्पदा याज्या चतुष्पद एव पशूनव रुन्धे " [ सं० का० २ प्र० २ अ० ११ ] इति।

प्रियशब्दोऽस्ति ययोस्ते ऋचौ प्रियवत्यौ। ते चोदाहरिष्येते। तत्प्रयोगाद्यजमानस्य समानानां मध्ये प्रियत्वम्। तयोर्ऋचोर्विद्यमानं पाठप्राप्तं द्विपद(दा)त्वं चतुष्पद(दा)त्वं च मनुष्यप्राप्त्या पशुप्राप्त्या च प्रशस्यते ॥

तत्र पुरोनुवाक्यां द्विपदामाह—

प्रिया वो नाम हुवे तुराणाम्।
आ यत्तृपन्मरुतो वावशानाः।, इति।

हे मरुतस्तुराणां हविःस्वीकारं प्रति त्वरमाणानां वो युष्माकं प्रिया नाम प्रियाणि नामानि आहुवे आह्वयामि। यद्यस्मात्त्रयं तृपत्तृप्तिं वावशानाः कामयमानाः स्थ तस्मादाह्वयामि ॥

तत्रैव चतुष्पदां याज्यामाह—

श्रियसे कं भानुभिः सं मिमिक्षिरे
ते रश्मिभिस्त ऋक्वभिः सुखादयः।
ते वाशीमन्त इष्मिणो अभीरवो
विद्रे प्रियस्य मारुतस्य धाम्नः।, इति।

ते मरुतः पुरोवानरूपाः सन्तः कं सुखं श्रियसे प्राणिभिराश्रयितुं भानुभिर्भासकै रश्मिभिः सूर्यरश्मिभिः सहिताः संमिमिक्षिरे मेहं वृष्ट्या भूमि सम्यक्सेक्तुमिच्छन्ति। ते मरुत ऋक्वभिर्याज्यापुरोनुवाक्यारूपाभिर्ऋग्भिः स्तुताः सन्तः सुखादयः शोभनं हविः खादितवन्तो भक्षितवन्तः। ततस्ते मरुतो वाशीमन्त उत्साहजनितघोषरूपबहुविधशब्दवन्त इष्मिणः स्वस्थानमिति गतिमन्तोऽभीरवः स्वकार्यस्य निष्पन्नत्वेन विघ्नकारिभ्योऽसुरेभ्यो भयरहिताः प्रियस्य मारुतस्य धाम्नो मरुतां संबन्धि यत्प्रियं स्थानं तद्विद्रे लब्धवन्तः ॥

इष्ट्यन्तरं विधातुं प्रस्तौति—

“देवासुराः संयत्ता आसन्ते देवा मिथो विप्रिया आसन्तेऽन्योऽन्यस्मै ज्यैष्ठ्यायातिष्ठमानाश्चतुर्धा व्यक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैः स इन्द्रः प्रजापतिमुपाधावत्तमेतया संज्ञान्याऽयाजयदग्नये वसुमते पुरोडाशमष्टाकपालं निरवपत्सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणायाऽऽदित्यवते चरुं ततो वा इन्द्रं देवा ज्यैष्ठ्यायाभि समजानन” [ सं० का० २ प्र० २ अ० ११ ] इति।

१ क. घ. ङ. च. द्विपादं। २ क. घ. ङ. च. °तुष्पादं।

देवा असुराश्च यदा युद्धार्थमुद्यतास्तदानीमहमेव ज्यैष्ठ्यो भविष्यामि नेतर इत्येवं परस्परं ज्यैष्ठ्यमनङ्गीकुर्वाणा देवाः परस्परं मियरहिताः सन्तः सेनां चतुर्धा विभज्य विविधं यथा भवति तथा प्रक्रान्तवन्तः । तत्र वसुभिः सहितोऽग्निरेकः सघः । रुद्रैः सहितः सोमो द्वितीयः संघः । मरुद्भिः सहित इन्द्रस्तृतीयः संघः । आदित्यैः सहितो वरुणश्चतुर्थः संघः । तदानीमिन्द्रः प्रजापतिमुपमेत्य तदुपदेशेन सञ्ज्ञानीनामिकामिष्टिं कृतवान । तत ऊर्ध्वमिष्टिसामर्थ्यादपगतमत्सरा देवा ज्यैष्ठ्यार्थमिन्द्रं सम्यगभ्यनुज्ञातवन्तः । सम्यग्ज्ञायतेऽभ्यनुज्ञायते ययेष्ट्याऽसौ संज्ञानी । तातृनप्त्रार्थवादेन्वेन संज्ञान्या अननुष्ठितत्वान्नास्ति कस्यचित्प्राधान्यं, किं तु स्वकार्यसिद्धिमभिप्रेत्य सर्वे मात्सर्यं जहुः। इह त्विष्टिप्रसादादिन्द्रस्य प्राधान्यम् । एतच्चोभयं कल्पभेदाद्युगभेदाद्वा द्रष्टव्यम् ॥

विधत्ते—

" यः समानैर्मिथो विप्रियः स्यात्तमेतया संज्ञान्या याजयेदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेत्सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणायाऽऽदित्यवते चरुमिन्द्रमेवैनं भूतं ज्यैष्ठ्याय समाना अभि सं जानते वसिष्ठः समानानां भवति ।" [ सं० का० २ प्र० २ अ० ११ ] इति ।

इन्द्रमेव भूतं स्वामिनमेव सन्तमेनं यजमानं ज्यैष्ठ्यार्थं सम्यगभ्यनुजानन्ति। ततोऽयं समानानां वसिष्ठो वासयितृतमः पालको भवति ॥

तत्र पुरोनुवाक्यामाह—

अ॒ग्निः प्र॑थ॒मो वसु॑भिर्नो अव्या॒त्सोमो॑ रु॒द्रेभि॑-
र॒भि र॑क्षतु॒ त्मना॑ । इन्द्रो॑ म॒रुद्भि॑र्ऋतु॒धा
कृ॑णोत्वादि॒त्यैर्नो॒ वरु॑णः सꣳ शिशातु ।[1] इति ।

वसुभिः सहितोऽग्निः प्रथमसंघाधिपतिर्नोऽस्मानवतु । रुद्रैः सहितः सोमस्त्मना स्वयमेव प्रीतिपुरःसरमभिरक्षतु । मरुद्भिः सहित इन्द्र ऋतुशः तत्तदृतूचितभोगधारिणोऽस्मान्करोतु । आदित्यैः सहितो वरुणो नोऽस्मान्संशिशातु संशितव्रतान्सम्यगनुष्ठितव्रतान्करोतु ॥

तत्रैव याज्यामाह—

सं नो॑ दे॒वो वसु॑भिर॒ग्निः सꣳ सोम॑स्त-

---

१ च. 'बादे तेन तेन ।

( काम्येष्टियाज्यापुरोनुवाक्याभिधानम् )

नूभी रुद्रियाभिः । समिन्द्रो मरुद्भिर्यज्ञियैः
समादित्यैर्नो वरुणो अजिज्ञिपत् ।, इति ।

वसुभिः सहितोऽग्निर्देवो नोऽस्मान्समजिज्ञिपत्सम्यगनुष्ठानं ज्ञापयतु । रुद्रसंबन्धिनीभिस्तनूभिः सहितः सोमः समजिज्ञिपत् । यज्ञयोग्यैर्मरुद्भिः सहित इन्द्रः समजिज्ञिपत् । आदित्यैः सहितो वरुणः समजिज्ञिपत् ॥

तत्रैव विकल्पितामन्यां याज्यामाह—

यथाऽऽदित्या वसुभिः संबभूवुर्मरुद्भी रुद्राः
समजानताभि । एवा त्रिणामन्नहृणीय-
माना विश्वे देवाः समनसो भवन्तु ।, इति ।

पूर्वोक्तेषु संघचतुष्टयमध्यवर्तिषु देवेषु यथा वरुणसमीपवर्तिन आदित्या अग्निसमीपवर्तिभिर्वसुभिः संबभूवुः संगताः प्रीतियुक्ता बभूवुः, यथा चेन्द्रसमीपवर्तिभिर्मरुद्भिः सह सोमसमीपवर्तिनो रुद्रा अभिसमजानत ज्येष्ठत्वं सम्यगभ्यनुज्ञातवन्तः, त्रीणि नामान्याहवनीयगार्हपत्यदक्षिणाग्निरूपाणि हव्यवाहनकव्यवाहनसहरक्षोरूपाणि वा यस्याग्नेः सोऽग्निस्त्रिणामा हे त्रिणामन्नेवा, एवमेव यथा रुद्रादयस्तद्वद्विश्वे देवा अन्येऽपि रुद्रादिसमीपवर्तिनो देवाः सर्वेऽहृणीयमाना वाग्भिरनपह्रियमाणविभवाः समनसः परस्परं समानमनस्का भवन्तु । यद्यप्यत्र चत्वारि हवींषि तथाऽपि सहपदानेन पुरोनुवाक्याया भेदो नास्ति, तथा याज्याया अपि । यथा पूर्वत्र ग्रामकामं प्रति विहितयोरैन्द्रैन्द्रवत्योर्हविषोः सहपदाभावात्पुरोनुवाक्यादिभेदो नास्ति ॥

अत्रैव स्विष्टकृतः पुरोनुवाक्यामाह—

कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने ।
अर्हन्तश्चिद्यमिन्धते संजनयन्ति जन्तवः ।, इति ।

यस्य स्विष्टकृद्देवस्य समृतौ सगतौ सत्यां नृषदने मनुष्यस्थाने ग्रामगृहादौ कुत्राचिद्यत्र कुत्रापि नरो मनुष्या रण्वा रमणशीला वर्तन्ते, किं च यं स्विष्टकृद्देवमर्हन्तो यज्ञार्हा विशेषाः यजमाना यत्र क्वचिदपि ... वर्तमाना इन्धते चित् प्रज्वालयन्ति, प्रज्वाल्य च जन्तवो यजमानाः संजनयन्ति समीचीनं फलमुत्पादयन्ति, तादृशः स्विष्टकृद्देवः प्रसीदत्विति शेषः ॥

[1] ग च रण्वा विरे ।

भिषूयमाणोऽपि न क्रुध्यतीत्यर्थः। त्रिषु सवनेष्वभिषवार्थमासादिता उपला-स्तूपलास्तेषा प्रमर्म प्रहारो यस्य सोमस्य सोऽयं तूपलप्रमर्मा। धुनिः कम्पमानः प्रहारैरितस्ततः कम्पते। शिमीशब्दः कर्मवाची, शिम्यो बहुविधान्य-भिषवशोधनग्रहणादीनि कर्माण्यस्य सन्तीति शिमीवान्। शरवोऽभिषवकाले शीर्णावयवाः, ते च बहवो यस्यासौ शरुमान्। रसनिष्पीडनेन यदवशिष्टं नीरसं तदृजीषं तदस्यास्तीत्यृजीषी। ईदृशः सोमो विश्वानि वनानि वर्धयतीति शेषः। "सोमो वा ओषधीनाः राजा"। "सोमो वनस्पतीनाम्"। "वनस्पतिगते सोमे" इत्यादिश्रुतिस्मृतिभ्यां चान्द्रमसोऽर्मासवनस्याभिवृद्धिदर्शनाच्च वर्धयितृत्वम्। कीदृशानि वनानि। अतसा सर्वत्र संततानीत्यर्थः। अर्वागर्वाचीनानि प्रतिमानानि लौकिकोपमानानीन्द्र न देभुर्न हिंसन्ति। नीचैरुपमानैः स्वसाम्यापादनमेवोत्तमस्य हिंसा, तां कर्तुमुपमानानि न प्रवर्तन्त इत्यर्थः॥

तत्रैव विकल्पितां पुरोनुवाक्यामाह—

प्र सुवानः सोम ऋतयुश्चिकेतेन्द्राय ब्रह्म जमदग्निरर्चन्। वृषा यन्ताऽसि शवसस्तुरस्यान्तर्यच्छ गृणते धर्त्रं दृꣳह।, इति।

ऋतयुर्यज्ञमिच्छन्यजमानः सोमः सुवानः सोममभिषुण्वन्निन्द्राय ब्रह्मेन्द्रार्थं बृहत्सोमपानं प्रचिकेत प्रकर्षेण जानाति। कीदृशो यजमानः। जमदग्निरेतन्नामकमुनिसदृशः। किं कुर्वन्, अर्चन्स्तुतिभिः पूजयन्। हे इन्द्र त्वं वृषा फलस्य वर्षयिता यन्ताऽसि सोमस्य नियामकोऽसि। कीदृशस्य, शवसो बलवतः, उदरे स्थापयितुमशक्यस्येत्यर्थः। तुरस्य वमनाय त्वरमाणस्य। अन्तर्यच्छ नियन्तृत्वादुदरमध्ये तं सोमं जरयितुं नियच्छ। गृणते त्वां स्तुवते यजमानाय धर्त्रं दृंह सोमस्य धारकं वायुं दृढीं कुरु॥

तत्रैव विकल्पितां याज्यामाह—

सबाधस्ते मदं च शुष्मयं च ब्रह्म नरो ब्रह्मकृतः सपर्यन्। अर्को वा यत्तरते सोमचक्षास्तत्रेदिन्द्रो दधते पृत्सु तुर्याम्।, इति।

हे सोम नरो मनुष्या ऋत्विजस्ते ब्रह्म श्यामाकचरुरूपं परिवृढं हविः

---

१ क. ख. घ. ङ. तमाऽस्य।

सपर्यन्पूजयन्ति समर्पयन्ति । कीदृशस्य ते, सबाधः । धकारान्तो बाधशब्दोऽभिषवकृतमुपद्रवं ब्रूते, तेनोपद्रवेण सह वर्तत इति सबाध्, इति प्रातिपदिकं, तस्य षष्ठी सबाध इति । अभिषवपीडितस्य तवेत्यर्थः । कीदृशं ब्रह्म, मदं च हर्षकरमपि शुष्मयं च बलप्रापकमपि । कीदृशा नराः, ब्रह्मकृत इष्टिरूपं परिवृढं कर्म कुर्वन्तीति ब्रह्मकृतः । सोमचक्षा अर्को वा सोमशब्देनाभिधीयमानस्त्वं सूर्य एव । अतस्तेजस्वित्वान्नास्ति तव कश्चिदप्युपद्रव इत्यभिप्रायः । यद्यत्रास्मदुदरे पीतो रसस्तुरने वमनाय व्यग्रतां करोति तत्रेत्तत्रैवोदरेऽयमिन्द्रः पृत्सु सङ्ग्रामेष्विव तुर्या दधते तूर्णं यातारं करोति वमनाय संभ्रमं कुर्वतः सोमस्य निवारकं वायुं शीघ्रं तत्र प्रेरयतीत्यर्थः ॥

अथ पञ्चमप्रपाठके विहितायामभ्युदयेष्टौ विष्णवे शिपिविष्टाय शृते चरुमित्युक्तं यत्तृतीयं हविस्तत्रानन्तरभावि मन्त्रत्रयमुत्कर्षणीयम् । तस्मिंश्च त्रये पुरोनुवाक्यां दर्शयति—

वषट् ते विष्णवास आ कृणोमि
तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं
पात स्वस्तिभिः सदा नः ।, इति ।

अस्यते क्षिप्यते कर्मानुष्ठानाय देवतया विधिना वा प्रेर्यत इत्यासो यजमानः । तादृशोऽहं ते तवाऽऽ समन्ताद्वषट्कृणोमि हविर्दानं करोमि ! शिपिषु पशुषु विष्टः प्रविष्टो यज्ञः शिपिविष्टः पशुसाध्यो यज्ञ इत्यर्थः । "यज्ञो वै विष्णुः । पशवः शिपिः" इति श्रुतेः । हे शिपिविष्ट यज्ञात्मक विष्णो मे मदीयं तद्धव्यं जुषस्व । सुष्टुतयः शोभनस्तुतिरूपा मे गिरस्त्वां वर्धन्तु वृद्धिं प्रापयन्तु । एकस्मिन्नपि विष्णौ यूयमिति पूजार्थं बहुवचनम् । पूज्या यूयं स्वस्तिभिः श्रेयोभिर्नोऽस्मान्सदा पात रक्षत ॥

तत्रैव याज्यामाह—

प्र तत्ते अद्य शिपिविष्ट नामार्यः शꣳसामि
वयुनानि विद्वान् । तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ।, इति ।

हे शिपिविष्टाद्यास्मिन्यज्ञे ते त्वदीयं तन्नामाहं प्रशंसामि । कीदृगहं, वयुनानि विद्वान्, ज्ञापकानि नामनिर्वचनानि जानन् । "यज्ञो वै विष्णुः ।

पशवः शिपिः। यज्ञ एव पशुषु प्रतितिष्ठति" इति श्रुत्याऽऽख्यातं शिपिविष्टनाम्नो निर्वचनं जानामीत्यर्थः। अत एवार्योऽहं शब्दार्थाभिज्ञानां स्वामी हे विष्णो तं त्वा गृणामि तथाविधं त्वां स्तौमि। किंविधम्। अस्य रजसः पराके क्षयन्तं दृश्यमानस्य मलिनलोकस्यात्यन्तं दूरे निवसन्तं तवसं तपस्विनम्। कीदृशोऽहम्। अतव्यीयानतपस्वी। यद्यप्यहं तपोरहितस्तथाऽपि तपस्विनस्तव प्रसादात्स्तोतुं शक्त इत्यर्थः॥

तत्रैव विकल्पितां याज्यामाह—

## किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि। मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ।, इति।

हे विष्णो त्वं यद्यस्मात्कारणाच्छिपिविष्टोऽस्मीति प्रकर्षेण ववक्षे पुनः पुनर्वक्षि तस्मात्ते तव मनसि किमित्परिचक्ष्यं भत्किमिदं गर्हणीयमभत्, नैतद्गर्हणीयं वृथैव तव लज्जेत्यभिप्रायः। यद्यप्येतन्नाम लोकेऽत्यन्तरोगिण्युत्पादितगलत्वचि (चि) मूढैः प्रयुज्यते शिपिविष्टोऽयमिति, तथाऽप्यवयवार्थस्य ब्राह्मणेन व्याख्यातत्वान्नास्त्यत्र तव लज्जाकारणम्। तस्मादेतद्वर्पो वरिष्ठं नामास्मत्माऽपगहः, अस्माकमग्रे गूढं मा कुरु। यद्यस्मात्त्वं गृहनार्थेव समिथे युद्धे कवचशीर्षकाभ्यां गढोऽन्यरूपो बभूथ बभविथ, तदन्यथा यथा तथा वा भवतु, तथाऽप्यस्मदवद्धौ प्रशस्तमिदं मा गोपायेत्यर्थः॥

पशुकामस्य त्रिहविष्कामिष्टिं विधत्ते—

"अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामोऽग्निरेवास्मै पशून्प्रजनयति वृद्धानिन्द्रः प्र यच्छति" [सं० का० २ प्र० ३ अ० २] इति॥

पञ्चद्रव्यसमष्टिरूपं तृतीयं हविर्विधत्ते—

"दधि मधु घृतमापो धाना भवन्त्येतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनव रुन्धे" [सं० का० २ प्र० ३ अ० २] इति।

तत्र दधिघृतयोः पशुसंबन्धात्तत्साहचर्येण सर्वेषां पशुरूपत्वम्॥

अस्मिन्हविषि द्रव्यसंख्यां विविधद्रव्यत्वं च प्रशंसति—

"पञ्चगृहीतं भवति पाङ्क्ता हि पशवो बहुरूपं भवति बहुरूपा हि पशवः समृद्ध्यै" [सं० का० २ प्र० ३ अ० २] इति।

---

१ क. °त्तरहित°। २ ख. °णादावि°। ३ ख. °र्षेणाभ्या।

एकैकस्य द्रव्यस्य ग्रहणेन पञ्चगृहीतत्वं, गोमहिषाश्वादिरूपेण पशूनां बहुरूपत्वम् ॥

द्रव्यं विधाय देवतां विधत्ते—

"प्राजापत्यं भवति प्राजापत्या वै पशवः प्रजापतिरेवास्मै पशून्प्र जनयति" [ सं० का० २ प्र० ३ अ० २ ] इति ॥

घृतं न पूतमुभे सुश्चन्द्रेत्येते ऋचौ विधत्ते—

"आत्मा वै पुरुषस्य मधु यन्मध्वग्नौ जुहोत्यात्मानमेव तद्यजमानोऽग्नौ प्र दधाति पङ्क्त्यौ याज्यानुवाक्ये भवतः पाङ्क्तः पुरुषः पाङ्क्ताः पशव आत्मानमेव मृत्योर्निष्क्रीय पशूनव रुन्धे" [ सं० का० २ प्र० ३ अ० २ ] इति।

यस्मिन्कस्मिंश्चिद्दुर्गे समुत्पन्नस्य मधुनो दध्यादिवत्सर्वप्राणिसुलभत्वं नास्ति, आत्माऽपि हस्तपादादिवत्सर्वैः सुष्ठु विज्ञेयो न भवति, तत्साम्यान्मधुनः पुरुषत्वं, मधुहोमेन वह्नौ प्रक्षिप्तस्याऽऽत्मनः पङ्क्तिच्छन्दसोः पाठेन मृत्योर्निष्क्रयो भवति ॥

तत्र प्रथमहविषः पुरोनुवाक्यामाह—

अग्ने दा दाशुषे रयिं वीरवन्तं परीणसम् । शिशीहि नः सूनुमतः ।, इति ।

हेऽग्ने दाशुषे हविर्दत्तवते यजमानाय रयिं दा धनं देहि । तथा वीरवन्तं वीरैर्भृत्यादिभिरुपेतं पुत्रं देहि । कीदृशं, परीणसं परितः शोभना नासिकाद्या अवयवा यस्य तं तथाविधम् । सूनुमतस्त्वया दीयमानैः पुत्रैर्युक्तान्नोऽस्माञ्शिशीहि सर्वेषु कार्येषु तीक्ष्णी कुरु ॥

तत्रैव याज्यामाह—

दा नो अग्ने शतिनो दाः सहस्रिणो दुरो न वाजꣳ श्रुत्या अपावृधि । प्राची द्यावापृथिवी ब्रह्मणा कृधि सुवर्ण शुक्रमुषसो वि दिद्युतुः।,इति ।

हेऽग्ने नोऽस्मभ्यं शतिनो दाः शतसंख्याकान्पशून्देहि । तथा सहस्रसंख्याकान्देहि । दुरो न द्वाराणीव । पशुसंपत्तौ हि* "वायव्यꣳ श्वेतमालभेत" "सरस्वत्याज्यभागा स्यात्" इत्यादीनि बहूनि कर्माणि सुखेनानुष्ठातुं शक्यन्ते । अतोऽनुष्ठानस्य द्वारभूतान्पशून्देहि । ततः पशुप्राप्तेरूर्ध्वं वाजमन्नं

* सर्वपुस्तकेषु हीत्यस्य स्थाने देहीति वर्तते, तत्त्वयुक्तम् ।

श्रुत्यै ब्राह्मणभोजनादिजन्यकीर्तये प्रावृधि विघ्नमपनीय वर्धय । प्रकर्षेणाऽऽनुकूल्यमस्मान्तो गच्छत इति प्रान्यौ, ब्रह्मणा मन्त्रपुरःसरेण कर्मणा तुष्टः सन्द्यावापृथिव्यौ प्रान्यौ कुरु । उपस उषःकालाः सुवर्ण स्वर्गे इवास्मद्गृहे शुक्रं प्रकाशं विदिद्युतुर्विशेषेण द्योतितं कुर्वन्तु प्रभूतं कुर्वन्त्वित्यर्थः ॥

तत्रैव विकल्पितां याज्यामाह—

अग्निर्दा द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रा सनोति । अग्निर्दिवि हव्यमा ततानाग्नेर्धामानि विभृता पुरुत्रा ।, इति ।

अयमग्निर्द्रविणं दा ददातु । वीरपेशा वीराणामस्मत्पुत्रादीनां पालको योऽग्निरसावृषिमृषिमसमानं पुत्रं सहस्रा सहस्रप्रकारेण सनोति ददातु । सोऽग्निर्दिवि स्वर्गे हव्यमस्मदीयमाततान समन्ताद्विस्तारितवान । तादृशस्याग्नेः पुरुत्रा पुरुषु प्रदेशेषु धामानि स्थानानि विभृता विशेषेण संपादितानि ॥

द्वितीयहविषो याज्यानुवाक्ययोः प्रतीके दर्शयति—

मा नो मर्धीरा तू भर ।, इति ।

मा नो मर्धीरा भरा दद्धि तन्न इति पुरोनुवाक्या। आ तू भर माकिरेतत्परिष्ठादिति याज्या । तदुभयं पर्वकाण्डे सप्तमप्रपाठके व्याख्यातम् ॥

तृतीयहविषः पुरोनुवाक्यामाह—

घृतं न पूतं तनूरेपाः शुचि हिरण्यम् । तत्ते रुक्मो न रोचत स्वधावः ।, इति ।

हे स्वधावोऽन्नवन्प्रजापते तनूरेपास्त्वदीयं शरीरं पापरहितम् । किमिव, पूतं घृतं न घृतमिव । नेत्युपमार्थानुवर्तते । शुचि हिरण्यं न शुद्धं सुवर्णमिव, रुक्मो न, आभरणमिव । ते त्वदीयं तच्छरीरं रोचत सर्वेभ्यो रोचताम् ॥

तत्रैव याज्यामाह—

उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि । उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भर ।, इति ।

हे सुश्चन्द्र सुष्ठ्वाह्लादनकर, आसनि त्वदीय आस्ये सर्पिषः संबन्धिन्यावुभे दर्वीसदृशे हस्ते श्रीणीषे सेवसे हस्तपरणपर्यन्तं सर्पिस्त्वया पीतमित्यर्थः ।

उतापि च हे शवसस्पते बलस्याधिपत उक्थेषु शस्त्रवत्सु यज्ञेषु नोऽस्मानुत्पुपूर्या उत्कर्षेण पूरय प्रापयेत्यर्थः । स्तोतृभ्यो यजमानेभ्य इषमन्नमाभर संपादय ॥

अथान्यत्र वायव्यां यवागूं निर्वपेदित्यादिना विहिते कर्मण्युत्कर्षणीयां[2] पुरोनुवाक्यामाह—

वायो शतꣳ हरीणां युवस्व पोष्या-
णाम् । उत वा ते सहस्रिणो
रथ आ यातु पाजसा ।, इति ।

हे वायो पोष्याणां पुष्टिमतां हरीणामश्वानां शतं युवस्वास्मद्गृहे समागन्तुं रथे योजय । उत वा ते सहस्रिणः, अथ वा ते सहस्रसंख्याका अश्वा रथे युज्यन्तामिति शेषः । स च रथः पाजसा बलेन शीघ्रमायातु ॥

तत्रैव याज्यामाह—

प्र याभिर्यासि दाश्वाꣳसमच्छा नियुद्भिर्वाय-
विष्टये दुरोणे । नि नो रयिꣳ सुभोजसं
युवेह नि वीरवद्गव्यमश्वियं च राधः ।, इति ।

हे वायो दुरोणे यज्ञगृह इष्टये क्रियमाणेष्टिसिद्ध्यर्थं नियुत्संज्ञकाभिर्याभिर्वडवाभिर्दाश्वांसमच्छ हविर्दत्तवन्तं यजमानं प्राप्तुं प्रकर्षेण यासि ताः समीचीना अस्माकमनुकूला इति शेषः । इह कर्मणि नोऽस्माकं सुभोजसं रयिं सुष्ठु भोजनोपयुक्तं धनं नियुव नितरां मिश्रय । किं च, राधोऽन्नं नियुव । कीदृशं राधः, वीरवद्गव्यमश्वियं पुत्रैर्गोभिरश्वैर्युक्तमित्यर्थः ॥

अथ काम्यैन्द्रकर्मण्युक्तयाज्यानुवाक्ये आम्नायेते । तत्र पुरोनुवाक्यामाह—

रेवतीर्नः सधमाद इन्द्रे सन्तु तुवि-
वाजाः । क्षुमन्तो याभिर्मदेम ।, इति ।

रेवत्यो धनवत्यः सधमादोऽस्माभिः सह मादय( य )न्त्यो हर्षयुक्तास्तुविवाजो बह्वन्नोपेता आपो नोऽस्माकं स्वामिनीन्द्रे सन्त्वस्मत्सुखार्थं[3] तिष्ठन्तु । याभिरद्भिः सह वयं क्षुमन्तः शब्दयन्त इन्द्रं स्तुवन्तो मदेम हृष्यास्म[4] ॥

---

१ क घ ङ. °त्कर्षणेमा पु° । २ ख च °णीयम् । पु° । ३ ख °य सभीपस्थाय ति° । ४ ख हृष्याम ।

तत्रैव याज्यामाह—

रेवाꣳ इद्रेवतः स्तोता स्यात्त्वावतो
मघोनः । प्रेदु हरिवः श्रुतस्य ।, इति ।

हे हरिव इन्द्रायं यजमानो रेवाꣳ इद्धनवानेव सन्रेवतो धनवतो देवस्य प्रेदु अत्यन्तप्रकर्षेण स्तोता स्यात् । कीदृशस्य देवस्य, त्वावतस्त्वत्सदृशस्य मघोनो धनवतः श्रुतस्य देवेषु श्रूयमाणस्य । तादृशं देवं स्तुत्वा स्वाभीष्टं प्राप्नोतीत्यभिप्रायः ॥

अत्र विनियोगसंग्रहः—

" हिरण्याऽऽपः प्रजा मेति चतस्रः शतकृष्णले ।
उदु चित्रं चरौ सौर्ये स प्रत्याग्नेययागके ॥ १ ॥
हिर सावित्रके तद्वद्धडिन्द्रा भूमिग चरौ ।
सोमेन्द्र ऋद्रचस्तारः शिपिविष्टे वषट्त्रयम् ॥ २ ॥
अग्रे तिस्रो दातृयुक्ते मा न आ तू प्रदातृके ।
घृतं दध्यादिगणके वायो वायव्यके क्वचित् ॥
क्काष्यैन्द्रे रेवतीलिङ्गादिति त्रिंशदुदीरिताः ॥ " इति ॥ ३ ॥

अथ मीमांसा ।

अष्टमाध्यायस्य प्रथमपादे चिन्तितम्—

" कृष्णलेषु घृतस्योत व्रीहेस्तेजोयुतेर्भवेत् ।
घृतस्य मेवं वैशद्याच्चरुशब्दयुतेस्तथा ॥ "

" प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलम् " इत्यत्र कृष्णलेषु पांशुयाजद्रव्यस्य घृतस्य धर्माः कर्तव्याः, कृष्णलाख्यसुवर्णस्य घृतस्य च तेजस्वित्वसाम्यादिति चेन्न । सुवर्णशकलव्रीह्योर्वैशद्यसाम्यात् । नहि घृतस्य प्रवलकाठिन्याविरलत्वादिरूपं वैशद्यमस्ति । चरुशब्दस्त्वौषधद्रव्यविषयः कृष्णलेषु प्रयुज्यमान औषधधर्मान्प्रापयति । तस्माद्व्रीहिधर्माः कर्तव्याः ।

दशमाध्यायस्य प्रथमपादे चिन्तितम्—

" अवघातः कृष्णलानामस्ति नो वाऽस्ति पाकवत् ।
प्रत्यक्षोक्त्या चरेत्पाकमवघाते तु नास्ति सा ॥ "

---

१ ख च °त्यन्त प्र । २ क घ ङ सोऽनव । ख च नाऽनव । ३ क ख घ ङ °दिगण° । ४ ख °र्यैन्द्री रेवती लिङ्गा । ग ङ प्यन्द्री रे । ५ क घ ङ °युतेर्भ° । ६ क ख घ ङ °ठिन्यवि° । ७ ख °द्दश्चौषधद्र° । ८ क घ ङ च °मानानाप° । ख माना-नौषधिधर्मा° ।

विकृतिरूपाणां काम्येष्टीनां काण्ड उदाह्रियते—" प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः " इति। कृष्णलशब्दः सुवर्णशकलवाची। प्रकृतौ व्रीहीनवहन्तीति पुरोडाशहेतूनां व्रीहीणामवघातो विहितः। सोऽत्र चरुहेतूनां कृष्णलानां चोदकवशादस्ति नो वेति संदेहः। अस्तीति पूर्वपक्षप्रतिज्ञा। वितुषीकरणं प्राकृत उपकारः। लुप्तेऽप्युपकारे तत्सत्तायां पाकवदिति निदर्शनम्। लुप्तेऽपि विक्लेदनोपकारे पाकः प्रतिवादिनोऽभिमतः, तद्वदवघातोऽप्यस्तु। घृते श्रपयतीति प्रत्यक्षोक्त्या पाकोऽभ्युपगतः। अवघाते तु सोक्तिर्नास्तीति वैषम्यादवघातो नास्ति।

तत्रैव द्वितीयपादे चिन्तितम्—

" नास्त्यस्ति वा कृष्णलेषु पाकः श्रौतोऽप्यसंभवी।
अदृष्टार्थतया स स्यादौष्ण्ये तु सुतरां भवेत्॥ "

घृते श्रपयतीतिप्रत्यक्षश्रुतिविहितोऽपि पाको विक्लेदनायोग्येषु न कर्तव्य इति पूर्वः पक्षः। दृष्टार्थस्य विक्लेदनस्यासंभवेऽप्यदृष्टार्थं पाकः कर्तव्यः। अन्यथा विधिवैयर्थ्यापत्तेः। यदा तु पाकशब्द औष्ण्यवाची तदा न कोऽपि विवादः।

तत्रैवान्यच्चिन्तितम्—

" उपस्तराभिघारौ स्तस्तेषु नो वा द्वयं भवेत्।
अदृष्टार्थमसंसक्तिर्दृष्टार्थं नेति लुप्यते॥ "

तेषु कृष्णलेषूपस्तरणमभिघारणं चेत्येतदुभयं पाकवददृष्टार्थं कर्तव्यमिति पूर्वः पक्षः। न तावत्पाकवदत्र प्रत्यक्षविधिरस्ति। चोदकस्तु दृष्टं द्वारमपेक्षते। प्रकृतावुपस्तरणाभिघारणयोर्दृष्टार्थत्वात्। सूक्ष्माणां पुरोडाशावयवानां स्रुचि संसक्तिं निवारयितुं तदुभयं क्रियते। कृष्णलानां तु संसक्तिप्रसङ्ग एव नास्ति। अतस्तन्निवारणलक्षणं द्वारं नास्तीत्युपस्तरणाभिघारणद्वयं लुप्यते।

तत्रैवान्यच्चिन्तितम्—

" भक्षो नास्त्यस्ति वा तेषु नास्ति प्रीतेरभावतः।
चुश्चुषाकारनिर्धानवचनात्स्यात्प्रदानवत्॥ "

यथा पुरोडाशे प्राशित्रादिभागो भक्ष्यते तथा तेषु कृष्णलेषु भक्षो नास्ति, प्रीतिरूपस्य दृष्टद्वारस्याभावादिति पूर्वः पक्षः। चुश्चुषाकारं भक्षयन्ति निर्ध-

१ ख. पठ्यते। २ ख. घ. ङ. च. °क्तिर्दृष्टा°।

यन्तो भक्षयन्तीति प्रत्यक्षं वचनमाम्नायते। इक्षुदण्डभक्षणे तद्रसस्वीकारे च यः शब्दविशेषस्तस्यानुकरणं चुश्चुषेति। घृते निरुप्तेषु कृष्णलेषु यल्लिप्तमाज्यं तदन्तर्नेतुमिव वालाश्चुश्चूषां कृत्वा तदाज्यं निःशेषेण पिबन्तो भक्षयेयुरित्यर्थः। अनदनीयद्रव्याणामपि कृष्णलानां यथा वचनात्प्रदानं तद्वद्भक्ष्याणामपि भक्षणं भवेत्।

तत्रैवान्यच्चिन्तितम्—

" सकृत्सहत्वयोरेकमेकधेत्यन्त्यमेव वा।
एकं नियामकाभावादवाधादन्त्यमेव हि॥" इति॥

तत्रैव कृष्णलभक्षणे श्रूयते—"एकधा ब्रह्मण उपहरति" इति। तत्रैकधेत्ययं धाप्रत्ययः प्रकारवाची सकृदेकवारमित्यमुमर्थं वा बहूनां सहभावं वा ब्रूते। उपहारो भक्षणाय समर्पणम्। एकधेत्यनेन शब्देन सकृत्त्वसहत्वयोरन्यतरद्विवक्षितमुत सहत्वमेवेति संशयः। नियामकाभावादुभयोर्मध्ये यत्किंचिदन्यतरदिति पूर्वः पक्षः। अबाधोऽत्र नियामकः। प्रकृताविडाप्राशित्रचतुर्धाकरणशंयुवाककालेषु चतुर्धाभक्षणसिद्ध्यै चत्वार उपहारा उपदिष्टाः। अत्रापि ते चोदकप्राप्ताः। तत्र सकृत्त्वपक्ष उपरितनास्त्रय उपहारास्तत्तत्कालविशेषाश्च बाध्येरन्। सहत्वपक्षे कालविशेषा एव बाध्यन्ते, न तु त्रय उपहाराः। तस्मादन्त्यपक्षरूपं सहत्वमेवैकधेत्यस्य शब्दस्यार्थः।

तत्रैवान्यच्चिन्तितम्—

" सर्वं ब्रह्मण इत्यत्र ब्रह्मभागस्य सर्वता।
अन्यभागस्यापि वाऽऽद्यो भागान्तरमवाधितुम्॥
सर्वत्वमन्यभागीयं ब्रह्मणोऽत्र विधीयते।
स्वभागीयं चोदकाप्तं बाध्यतामन्यभक्षणम्॥"

कृष्णलभक्षण एवेदमपरं श्रूयते—" सर्वं ब्रह्मणे परिहरति " इति। परिहारः समर्पणम्। ब्रह्मसहितानामृत्विजामेकैकस्य चतुर्षु कालेषु चत्वारो भक्षणभागाश्चोदकप्राप्ताः। तत्र सर्वता किं ब्रह्मसंबन्धिचतुर्भागविषया, उतेतरसंबन्धिभागचतुष्टयविषयाऽपीति संदेहः। अध्वर्युप्रभृतीनामृत्विजां ये ये चत्वारो भागास्तेषां बहूनामबाधनायाऽऽद्यः पक्षोऽभ्युपगन्तव्यः। तत्रैषा वचनव्यक्तिः—ब्रह्मसंबन्धमनूद्य सर्वत्वपरिहारयोरेकमनुवादेऽन्तर्भाव्येतरद्विधेयं " यद्ब्रह्मणे सर्वं तत्परिहरति, यद्ब्रह्मणे परिहरति तत्सर्वम् " इति। उभयथाऽपि विधेर्ब्रह्मभागमात्रे पर्यवसानाच्चोदकप्राप्ता अन्यभागा अबाधिता भविष्यन्तीति पूर्वः पक्षः। सर्वत्वपरिहारावनूद्य ब्रह्मसंबन्धोऽत्र विधीयते। यत्प-

रिहर्तव्यं सर्वं तद्ब्रह्मण इति वचनव्यक्तिः। तत्र ब्रह्मभागाणामितरभागाणां च यत्सर्वत्वं तस्य ब्रह्मसंबन्धे सति ब्रह्मभागाणां ब्रह्मसंबन्धस्य चोदकादेव प्राप्तत्वात्तत्रानर्थको विधिरन्यभागानां ब्रह्मसंबन्धविधाने पर्यवस्यति। तस्मादन्येषां भक्षणं बाध्यते।

तत्रैवान्यच्चिन्तितम्—

" युगपत्स्वस्वकाले वा तत्सर्वं भक्षयेदयम्।
अविलम्बादादिमोऽन्त्यस्तं तं कालमबाधितुम्॥ "

अतीतेनाधिकरणद्वयेन युगपत्सर्वं ब्रह्मणे समर्पयेदित्युक्तं, तत्र भक्षयितुं युगपत्समर्पितस्य सर्वस्य मध्ये कियदपि भक्षयित्वाऽवशेषितस्य विलम्बे कारणाभावाद्युगपदित्याद्यः पक्षः प्राप्नोति। चोदकप्राप्तस्य तत्तत्कालस्याबाधो विलम्बे हेतुः। तस्मात्स्वस्वकाल इत्यन्त्यः पक्षोऽभ्युपगन्तव्यः।

अष्टमाध्यायस्य प्रथमपादे चिन्तितम्—

" फलं च नियमः कर्ता संघः सौर्ये न वाऽग्रिमः।
प्रयाजवन्न विध्यादिविध्यन्तत्वविभेदतः॥ "

इष्टौ फलादयश्चत्वारः सन्ति। फलं स्वर्गः। नियमो यावज्जीविकत्वम्। कर्ता स्वर्गकामः। संघ आग्नेयादीनां षण्णा साहित्यम्। त एते चत्वारः सौर्ये प्रयाजादिवदतिदेष्टव्या इति चेन्न। वैषम्यात्। प्रयाजादिराकाङ्क्षितविध्यन्तत्वादतिदिश्यते। विध्यादिस्तु नाऽऽकाङ्क्षितः। सौर्यं चरुं निर्वपेदिति मुख्यविधेः प्रत्यक्षश्रवणात्। अन्यथा विध्यन्तेऽपि कस्याऽऽकाङ्क्षा वर्ण्येत। तस्मात्प्रधानकर्मणोऽनाकाङ्क्षितस्य विकृतावप्रवृत्तेस्तत्संबद्धाः फलादयोऽप्यनाकाङ्क्षितत्वान्नातिदिश्यन्ते।

तत्रैवान्यच्चिन्तितम्—

" गोदोहनाद्यस्ति नो वा भवेत्प्रणयनाश्रयात्।
अनङ्गत्वादपेक्षाया अभावान्नातिदिश्यते॥ "

" चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य " इति दर्शपूर्णमासयोः श्रुतं गोदोहनं सौर्येऽप्यतिदेष्टव्यम्। कुतः, तदाश्रयस्य प्रणयनस्य सद्भावादिति चेन्मैवम्। क्रत्वङ्गतया चमस एव प्रणयनसाधनमपेक्षितं, न त्वङ्गं पुरुषार्थं गोदोहनम्। अतः फलनियमादिवन्नातिदेशः।

तत्रैवान्यच्चिन्तितम्—

" स्पर्शद्वयं व्यवस्थाप्यं विकल्प्यं वा व्यवस्थितिः।
प्रकृताविव नो तत्र तस्याः शाब्दत्ववर्जनात्॥ "

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

दर्शपूर्णमासयोर्होविर्षां स्पर्शनद्वयं व्यवस्थितमन्त्रद्वयसाध्यमाम्नातम्—"चतुर्होत्रा पौर्णमास्यामभिमृशेत्पञ्चहोत्राऽमावास्यायाम्" इति। पृथिवी होतेत्यादिमन्त्रश्चतुर्होता। अग्निर्होतेत्यादिमन्त्रः पञ्चहोता। तदुभयं सौर्यादौ चोदकप्राप्तं तत्कालभेदेनानुप्राप्तद्वये व्यवस्थापनीयम्। कुतः। प्रकृतौ पौर्णमास्यमावास्ययोः कालयोर्भेदेन व्यवस्थितत्वादिति चेन्न। प्रकृतौ व्यवस्थाया आर्थिकत्वात्। शाब्दस्यैवाङ्गत्वेनातिदेशार्हत्वात्। तस्मादुभयं विकृताविच्छया विकल्प्यते।

तत्रैवान्यच्चिन्तितम्—

"षट्सु कस्याप्युताऽऽग्नेयस्यैव सौर्येऽग्निमो यतः।
अविशेषो न दैवैक्यादौषधद्रव्यकत्वतः॥"

दर्शपूर्णमासगतेषु षट्सु यागेषु यस्य कस्यापि विध्यन्तः सौर्ये कर्तव्यः, अस्यैवेति विशेषनियामकस्याभावादिति चेन्न। दैवतैक्यस्य नियामकत्वात्। सौर्यशब्दगततद्धितप्रत्ययविग्रहस्य सूर्योदेवतेति द्विवचनेनापि कर्तुं शक्यत्वादेव तैक्यमनिश्चितमिति चेन्न। विविशेषपार्थवादोक्तावमुमेवाऽऽदित्यमित्येकवचनेन तद्व्यपदेशात्। आग्नेयार्थवादेऽपि सोऽग्नयेऽध्रियतेत्येकवचनं व्यपदिष्टम्। अत आग्नेयस्यैव विध्यन्तो न त्वग्नीषोमीयैन्द्राग्नयोः। यद्यप्यैन्द्रयोर्दधिपयसोः प्राजापत्य उपांशुयाजेऽपि दैवतैक्यमस्ति तथाऽप्यौषधद्रव्यकत्वमाग्नेये विशेष्यते। तस्मात्तस्यैव विध्यन्तः।

नवमाध्यायस्य द्वितीयपादे चिन्तितम्—

"सौर्यादौ पार्वणौ होमौ स्तो न वा कालदेवकौ।
स्तः संघदेवकौ संघाविकारत्वान्न तत्र तौ॥"

दर्शपूर्णमासयोः श्रूयते—"स्रुवेण पार्वणौ जुहोति" इति। तत्र पर्वशब्दः कालविशेषवाची। ततः कालदेवकौ तौ होमावारादुपकारकतया प्रयाजादिवत्सौर्यादिविकृतिष्वतिदिश्येते इति चेन्मैवम्। पर्वशब्दस्याऽऽग्नेयादित्रिकसंघपरत्वात्। दानार्थवाचिनः पृणातेर्धातोर्निष्पन्नोऽयं पर्वशब्दः। स च प्रीय(पूर्य)ते दीयतेऽस्मिन्नित्यधिकरणव्युत्पत्त्या कालमाचष्टे। भावव्युत्पत्त्या तु क्रियापरः सन्प्रकरणवशादाग्नेयादिकर्मत्रयसंघमाह। तौ च मन्त्रवर्णोऽप्यनुगृहीतो भवति। "ऋषभं वाजिनं वयं पूर्णमासं यजामहे" इत्येको मन्त्रः। "अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना" इत्यपरो मन्त्रः।

---

१ क. ग. ड. च. °स्थित स°। २ ख. °मासीमं°। ३ ख. °स्याम्।

तत्राग्नीषोमवत्कर्मत्रयसंघस्य व्यासक्तदेवतात्वम् । न च संघस्य विकृतिः सौर्यादिः । किं त्वाग्नेयस्यैव । ततः संघार्थयोर्होमयोर्नास्ति सौर्यादौ प्राप्तिः ।

दशमाऽध्यायस्य प्रथमपादे चिन्तितम्—

" सौर्ये चरौ चरुः स्थाली किं वाऽन्नं लौकिकोक्तितः ।
स्थाल्यस्यां श्रपणं योग्यं कपालविकृतित्वतः ॥
विद्वच्छ्रुतिप्रसिद्ध्याऽन्नं देवतातद्धितोक्तितः ।
योग्यत्वेन प्रदेयं तत्पुरोडाशहविर्यथा ॥ "

सौर्यं चरुं निर्वपेदित्यादिवाक्ये चरुशब्दः किं स्थालीं वक्ति, आहोस्विदोदनमिति संदेहः । तत्र लौकिका आ हिमवत आ च कुमारीभ्यः सर्वेऽपि सर्वदेशीयस्वस्वभाषाप्रसिद्ध्या यत्किंचिद्वकारवकाराद्यक्षरमुपरि प्रक्षिप्य चरुशब्दमल्पे पात्रे पाकाधिकरणे ताम्रादिमये प्रयुञ्जते । निघण्टुकाराश्चोखा स्थाली चरुरित्येतान्शब्दान्पर्यायत्वेनोपदिशन्ति । तस्माच्चरुशब्दः स्थालीं वक्ति । यदि तस्या अदनीयत्वाभावेन पुरोडाशवत्प्रदानयोग्यता न स्यात्तर्हि मा भूत्पुरोडाशविकृतित्वं, पुरोडाशाधिष्ठानकपालविकृतित्वं तु भविष्यति, श्रपणयोग्यतायाः सद्भावात् । यथा कपालेषु हविः श्रप्यते तथा स्थाल्यामपि श्रपयितुं शक्यते । तस्माच्चरुः स्थालीति प्राप्ते ब्रूमः—अन्नमेव चरुशब्देनोच्यते । कुतः । श्रुतिप्रसिद्धेः । आदित्यः प्रायणीयश्चरुरिति विधाय तद्वाक्यशेषे ह्यदितिमोदनेनेत्योदनशब्देन चरुरनूद्यते । यदि भोज्यान्ने चरुशब्दः क्वापि न प्रयुज्यते तर्ह्योदनविशेषवाची चरुशब्दोऽस्तु । तत्र विद्वत्प्रसिद्धिः । विद्वांसो याज्ञिकाः शब्दैकगम्यधर्माधर्मव्यवहारिणः शब्दार्थाविप्लवे तात्पर्यवन्तोऽनवस्रावितान्तरूष्मपक्के जीवतण्डुले विशदसिक्थ ओदने चरुशब्दं प्रयुञ्जते । सत्योदनवाचित्वे सौर्यमिति तद्धितोऽप्युपपद्यते । यथाऽऽग्नेयमिति देवतातद्धितसंयुक्तपुरोडाशः प्रदेयद्रव्यं तथा चरुरपि । अन्ये च निघण्टुकारा हव्यपाके चरुः पुमानिति पठन्ति । तस्माच्चरुशब्दोऽन्नवाची ।

तत्रैवान्यच्चिन्तितम्—

" चरुः कपाले पक्तव्यः क्वापि वा उचितेऽथवा ।
कपाले चोदकप्राप्तेरनपूपत्वतः क्वचित् ॥
स्थाल्यां चरुत्वयोग्यत्वात्कटाहे योग्यता नहि ।
चिन्ताद्वयफलं त्वत्र पेषणादिनिवर्तनम् ॥ "

× अत्र ' तद्धित ' इति पद विरुद्धम् ।

१ क घ ङ याग्यत्वेन । २ क घ ङ च. वा पिठरेऽथ ।

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

विषयसंशयनिर्देशकं पूर्वार्धं स्पष्टार्थम् । यथा प्रकृतौ पुरोडाशस्य कपाले पाकस्तथा विकृतौ चरोरित्याद्यः पूर्वपक्षः । पुरोडाशस्याप्पत्वात्कपालगतोष्मणा पाकः संभवति, चरुस्त्वोदनत्वादुदकगतोष्मणा पक्तव्यः । अतोऽप्राकृतकार्यत्वाच्चोदकप्राप्तिर्नास्तीति यद्युच्येत तर्हि अनपूपस्य चरोरुदकधारणयोग्ये कटाहघटादौ यत्र क्वापि पाक इति द्वितीयः पूर्वपक्षः । निरुप्तानां मुष्टिचतुष्टयपरिमितानां तण्डुलानामल्पेनैव पात्रेण पक्तुं योग्यत्वाच्चरोः स्थाल्यामेव पाक इति राद्धान्तः । पूर्वत्र चरुरोदन इति चिन्तितम् । न ह्योदने पेषणादिरस्ति । अतः पेषणादिनिवृत्तिः पूर्वचिन्तायाः साक्षात्फलम् । तद्द्वारेण चरुनिष्पादकस्थालीचिन्ताया अपि फलमित्युपचर्यते ।

पेषणादीन्यनुक्रामति—

" पेषणं यवनं वापस्तापश्चोपहितिः प्रथा ।
मार्जनाभ्यूहनज्वालास्तथा व्युद्धृत्य सादनम् ॥ "

पेषणं चूर्णनं, यवनं पिष्टस्योदकमिश्रणं, वाप उदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेपः, तापः कपालानामङ्गारैः प्रतापनम् , उपहितिरङ्गारेषु कपालस्थापनम् , प्रथा कपालेष्ववस्थापितस्य पुरोडाशस्य हस्तसंघट्टनेन सर्वेषु कपालेषु प्रसारण, मार्जनं श्लक्ष्णीकरणम् । अभ्यूहनं भस्मनाऽङ्गारैश्चोपर्याच्छादनं, ज्वाला दर्भपुञ्जीलैः प्रज्वालनम्, व्युद्धृत्य सादनं कपालेभ्यः पृथक्कृतस्य पुरोडाशस्यान्तर्वेद्यवस्थापनम् । ननु पेषणादिनिवृत्तेः पूर्वाधिकरणद्वयफलत्वे किमिति सूत्रकारः प्रत्येकं सूत्रैर्विचारितवानित्याशङ्क्य मन्दमतिव्युदासायेत्याह—

" एतानि मन्दप्रज्ञस्य कर्तव्यानीति विभ्रमः ।
अपूपस्यैव योग्यानीत्येतत्सूत्रैर्निरूपितम् ॥ "

तत्रैव चतुर्थपादे चिन्तितम्—

" सौर्यादिनिगमे कोऽपि शब्दः स्याद्वैध एव वा ।
चरौ सूर्यान्वयादाद्यः प्रयोगान्वयतोऽन्तिमः ॥ "

सौर्यं चरुं निर्वपेदित्यादिविकृतिषु चोदकातिदिष्टा ये निगमास्तेष्वग्न्यादिशब्दस्थाने स्[1]र्यार्थप्रत्यायकः शब्द ऊहितव्यः । स चार्थ आदित्यख्यादिना पर्या ...पि प्रत्याययितुं शक्यते । वैधस्तु सूर्यशब्दश्चरुयाग एवान्वितः, न त्वग्न्यादिशब्दवन्निगमेषु पठितः । तस्मात्कोऽपीति प्राप्ते ब्रूमः—अत्र सौर्यं चरुं निर्वपेदिति प्रयोगवचनेन सूर्यान्वयो भवति, न तु सौर्यं चरुमिति[2] चरुणा । कारकविभक्तिर्हि द्वितीया । सा चाऽऽख्यातेन संबध्यते न नाम्ना । सति च

१ ख °र्याय । २ ख सौर्यश्चरुरिति ।

प्रयोगान्वये याज्यापुरोनुवाक्ययोर्निगमेषु वा यत्र यत्र प्रयोगोऽपेक्षितस्तत्र सर्वत्र सूर्यशब्द एव युक्तः। प्रकृतावपि निगमेषु नार्थमात्रविवक्षयाऽग्निशब्दः प्रयुज्यते, किं तर्हि वैधशब्दविवक्षयाऽपि। तथा सत्यतिदेशोऽपि वैधशब्दविषय एव भविष्यति। तस्मात्सूर्यशब्द एव प्रयोक्तव्यः॥

द्वादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" आरम्भणीया सौर्यादौ नोत स्यान्न प्रयोगवत्।
क्रत्वर्था न प्रयोगार्था क्रत्वारम्भे ततो भवेत्॥ "

दर्शपूर्णमासयोः प्रथमप्रयोगस्यैवोपक्रम आरम्भणीया न प्रयोगान्तरस्येति नवमे निर्णीतम्। आदौ कृतस्य कर्तृसंस्कारस्य यावज्जीवपर्याप्तत्वाद्यथा न प्रयोगान्तर आरम्भणीयापेक्षा, तथा यावज्जीवप्रकृतिकालमध्यपातिनीनां सौर्यादिविकृतीनां नास्ति तदपेक्षेति प्राप्ते ब्रूमः—दर्शपूर्णमासावारप्स्यमान इत्युक्तत्वात्क्रत्वर्थेयमारम्भणीया, न तु प्रयोगार्था। क्रत्वन्तराणि हि सौर्यादीनि। ततः प्रयोगान्तरवैषम्यात्सौर्यादौ सा कर्तव्या। न च यावज्जीवकालः प्रकृत्यङ्गं, कर्तृधर्मत्वेन द्वितीये वर्णितत्वात्। अतो नोक्तरक्षोघ्नन्यायोऽत्र प्रसरति। तस्मान्नास्त्यत्र प्रसङ्गः।

तृतीयाध्याये चतुर्थपादे चिन्तितम्—

" सोमवामिचरुर्लोके वेदे वेन्द्रियसंक्षयः।
दृष्टदोषो लौकिकेऽतो वमने विहितश्चरुः॥
अदोषो वमनायैव लोके पानं श्रुतौ पुनः।
जरणाय ततो वान्तिदोषशान्त्यै भवेच्चरुः॥ "

इदमाम्नायते—" सोमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिनः " इति। तत्र लौकिके सोमवमने विहितोऽयं चरुः। कुतः, " वि वा एष इन्द्रियेण वीर्येण ( सोमपीथेन ) र्ध्यते यः सोमं वमिति " इति दृष्टदोषमुपन्यस्य तच्छान्तये चरुविधानादिति चेन्मैवम्। लोके धातुसाम्यार्थिनो वमनायैव सोमस्य पाने सति वमनस्य दोषाहेतुत्वात्। वेदे तु " हिन्व मे गात्रा हरिवः " इत्यनेन मन्त्रेण जरयितुं सोमः पीयते। तत्र वमनप्रायश्चित्तार्थोऽयं चरुः।

तत्रैवान्यच्चिन्तितम्—

" ऋत्विजां वमनेऽप्येष कर्तुरेवोत वर्जनात्।
विशेषस्याग्रिमो मैवं कर्तुरेव निरूपितः॥ "

१ ख च 'न्तरे वे'। २ क घ. ङ. 'प्रमापन्नस्य।

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

ई[1]गस्य सोम[2]वमने चरुरिति विशेषस्याभावादृत्विजां यजमानस्य च[3] वमने सर्वत्रासौ चरुरिति चेन्मैवम्। यो [4]वमति स निर्वपतीति निर्वप्तुर्वमनं चरुनिमित्तं, निर्वप्ता च यजमानः। ऋत्विजो निर्वप्तृत्वेऽधिकारान्तरप्रसङ्गात्। तस्माद्यजमानस्यैव वमने चरुविधिः।

अष्टमाध्यायस्य प्रथमपादे चिन्तितम्—

"क्षीरस्याऽऽज्यस्य वा नीरे मधुन्यप्यग्रिमो यतः।
द्रवत्वं न घृतेऽप्यस्य सत्त्वाद्वर्णाच्च संभवात्॥"

चित्रायागे श्रूयते—"दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्" इति। तत्र मधुन्युदके च द्रवत्वसामान्येन सानाय्यगतस्य पयसो धर्मा इति चेत्। न। घृतेऽप्यग्निसंपर्केण द्रवत्वसद्भावादशुक्लवर्णत्वादाज्यधर्माणामुत्पवनादीनां संभवात्पयोधर्माणां दोहनादीनामसंभवाच्चोपांशुयाजगतस्याऽऽज्यस्य धर्माः कर्तव्याः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे द्वितीयप्रपाठके प्रथमादिद्वादशान्ता अनुवाकाः॥ १—१२॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ १॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे द्वितीयः प्रपाठकः॥ २॥

१ ख. च. ईदृश°। २ ग. च. °मस्य व°। ३ क. ख. घ. ङ. वा। ४ क. ख. घ. ङ. वमिति। ख. च. °यागग°।

( अथ द्वितीयाष्टके तृतीयः प्रपाठकः । )

( तत्र प्रथमोऽनुवाक । )

हरिः ॐ ।

आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम आदित्या वा एतं भूत्यै प्रति नुदन्ते योऽलं भूत्यै सन्भूतिं न प्राप्नोत्यादित्यानेव भुवद्वतः स्वेन भागधेयेनोप धावति त एवैनं भूतिं गमयन्ति भवत्येवाऽऽदित्येभ्यो धारयद्वद्भ्यश्चरुं निर्वपेदपरुद्धो वाऽपरुध्यमानो वाऽऽदित्या वा अपरोद्धार आदित्या अवगमयितार आदित्यानेव धारयद्वतः ( १ ) स्वेन भागधेयेनोप धावति त एवैनं विशि दाध्रत्यनपरुध्यो भवत्यदितेऽनु मन्यस्वेत्यपरुध्यमानोऽस्य पदमा ददीतेयं वा अदितिरियमेवास्मै राज्यमनु मन्यते सत्याऽऽशीरित्याह सत्यामेवाऽऽशिषं कुरुत इह मन इत्याह प्रजा एवास्मै समनसः करोत्युप प्रेत मरुतः ( २ ) सुदानव एना विश्पतिनाऽभ्यमुꣳ राजानमित्याह मारुती वै विड्ज्येष्ठो विश्पतिर्विशैवैनꣳ राष्ट्रेण समर्धयति

यः परस्तांद्ग्राम्यवादी स्यात्तस्य गृहाद्व्रीहीना हरेच्छुक्लाꣳश्च कृष्णाꣳश्च वि चिनुयाद्ये शुक्लाः स्युस्तमादित्यं चरुं निर्वपेदादित्या वै देवतया विड्विशमेवाव गच्छति ( ३ ) अवंगताऽस्य विडनवगतꣳ राष्ट्रमित्याहुर्ये कृष्णाः स्युस्तं वारुणं चरुं निर्वपेद्वारुणं वै राष्ट्रमुभे एव विशं च राष्ट्रं चाव गच्छति यदि नावगच्छेदिममहमादित्येभ्यो भागं निर्वपाम्याऽमुष्मादमुष्यै विशोऽवंगन्तोरिति निर्वपेदादित्या एवैनं भागधेयं प्रेप्सन्तो विशमव ( ४ ) गमयन्ति यदि नावगच्छेदाश्वत्थान्मयूखान्त्सप्त मध्यमेषायामुप हन्यादिदमहमादित्यान्बध्नाम्याऽमुष्मादमुष्यै विशोऽवंगन्तोरित्यादित्या एवैनं बद्धवीरा विशमव गमयन्ति यदि नावगच्छेदेतमेवाऽऽदित्यं चरुं निर्वपेदिध्मेऽपि मयूखान्त्सं नह्येदनपरुध्यमेवाव गच्छत्याश्वत्था भवन्ति मरुतां वा एतदोजो यदश्वत्थ ओजसैव विशमव गच्छति सप्त भवन्ति सप्तगणा वै मरुतो गणश एव विशमव गच्छति ( ५ ) ॥

( धारयद्वतो मरुतो गच्छति विशमवैतदष्टादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ द्वितीयाष्टके तृतीयः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

आदित्येभ्यः । भुवद्वद्भ्य इति भुवद्वत्—भ्यः । चरुम् । निरिति । वपेत् । भूतिकाम इति भूति—कामः । आदित्याः । वै । एतम् । भूत्यै । प्रतीति । नुदन्ते । यः । अलम् । भूत्यै । सन् । भूतिम् । न । प्राप्नोतीति प्र—आप्नोति । आदित्यान् । एव । भुवद्वत इति भुवत्—वतः । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । ते । एव । एनम् । भूतिम् । गमयन्ति । भवति । एव । आदित्येभ्यः । धारयद्वद्भ्य इति धारयद्वत्—भ्यः । चरुम् । निरिति । वपेत् । अपरुद्ध इत्यप—रुद्धः । वा । अपरुध्यमान इत्यप—रुध्यमानः । वा । आदित्याः । वै । अपरोद्धार इत्यप—रोद्धारः । आदित्याः । अवगमयितार इत्यव—गमयितारः । आदित्यान् । एव । धारयद्वत इति

धारयन्—वतः ( १ )। स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । ते । एव । एनम् । विशि । दाधति । अनपरुध्य इत्यनप—रुध्यः । भवति । अदिते । अन्विति । मन्यस्व । इति । अपरुध्यमान इत्यप—रुध्यमानः । अस्य । पदम् । एति । ददीत । इयम् । वै । अदितिः । इयम् । एव । अस्मै । राज्यम् । अन्विति । मन्यते । सत्या । आशीरित्या—शीः । इति । आह । सत्याम् । एव । आशिषमित्या—शिषम् । कुरुते । इह । मनः । इति । आह । प्रजा इति प्र—जाः । एव । अस्मै । समनस इति स—मनसः । करोति । उप । प्रेति । इत । मरुतः ( २ )। सुदानव इति सु—दानवः । एना । विश्पतिना । अभीति । अमुम् । राजानम् । इति । आह । मारुती । वै । विट् । ज्येष्ठः । विश्पतिः । विशा । एव । एनम् । राष्ट्रेण । समिति । अर्धयति । यः । परस्तात् । ग्राम्यवादीति ग्राम्य—वादी । स्यात् । तस्य । गृहात् । व्रीहीन् । एति । हरेत् । शुक्लान् । च । कृष्णान् । च । वीति । चिनुयात् । ये । शुक्लाः । स्युः । तम् । आदित्यम् । चरुम् । निरिति । वपेत् । आदित्या । वै । देवतया ।

विट् । विशम् । एव । अवेति । गच्छति ( ३ )।
अवगतेत्यव—गता । अस्य । विट् । अनवगतमित्य-
नव—गतम् । राष्ट्रम् । इति । आहुः । ये । कृष्णाः ।
स्युः । तम् । वारुणम् । चरुम् । निरिति । वपेत् ।
वारुणम् । वै । राष्ट्रम् । उभे इति । एव । विशम् ।
च । राष्ट्रम् । च । अवेति । गच्छति । यदि । न ।
अवगच्छेदित्यव—गच्छेत् । इमम् । अहम् । आदि-
त्येभ्यः । भागम् । निरिति । वपामि । एति । अमु-
ष्मात् । अमुष्यै । विशः । अवगन्तोरित्यव—गन्तोः ।
इति । निरिति । वपेत् । आदित्याः । एव । एनम् ।
भागधेयमिति भाग—धेयम् । प्रेप्सन्त इति प्र—ई-
प्सन्तः । विशम् । अवेति (४)। गमयन्ति । यदि ।
न । अवगच्छेदित्यव—गच्छेत् । आश्वत्थान् । मयू-
खान् । सप्त । मध्यमेषायामिति मध्यम—ईषायाम् ।
उपेति । हन्यात् । इदम् । अहम् । आदित्यान् ।
बध्नामि । एति । अमुष्मात् । अमुष्यै । विशः ।
अवगन्तोरित्यव—गन्तोः । इति । आदित्याः । एव ।
एनम् । बद्धवीरा इति बद्ध—वीराः । विशम् ।
अवेति । गमयन्ति । यदि । न । अवगच्छेदित्यव—
गच्छेत् । एतम् । एव । आदित्यम् । चरुम् ।

( मृत्युभीतादीनां शतकृष्णलादीष्टिविधि )

निरिति। वपेत्। इध्मे। अपीति। मयूखान्। समिति। नह्येत्। अनपरुध्यमित्यनप–रुध्यम्। एव। अवेति। गच्छति। आश्वत्थाः। भवन्ति। मरुताम्। वै। एतत्। ओजः। यत्। अश्वत्थः। ओजसा। एव। विशम्। अवेति। गच्छति। सप्त। भवन्ति। सप्तगणा इति सप्त–गणाः। वै। मरुतः। गणश इति गण–शः। एव। विशम्। अवेति। गच्छति ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ द्वितीयाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः । )

देवा वै मृत्योर्बिभयुस्ते प्रजापतिमुपाधावन्तेभ्य एतां प्राजापत्याꣳ शतकृष्णलां निरवपत्तयैवैष्वमृतमदधाद्यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्याꣳ शतकृष्णलां निर्वपेत्प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मिन्नायुर्दधाति सर्वमायुरेति शतकृष्णला भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये ( १ ) प्रति तिष्ठति घृते भवत्यायुर्वै

घृतममृतꣳ हिरण्यमायुश्चैवास्मा अमृतं च समीचीं दधाति चत्वारिचत्वारि कृष्णलान्यवं द्यति चतुरवत्तस्याऽऽप्त्या एकधा ब्रह्मण उपं हरत्येकधैव यजमान आयुर्दधात्यसावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन्त-स्मा एतꣳ सौर्यं चरुं निरवपन्तेनैवास्मिन् ( २ ) रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात्तस्मा एतꣳ सौर्यं चरु निर्वपेदमुमेवाऽऽदित्यꣳ स्वेनं भागधेयेनोप धावति स एवास्मिन्ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवत्युभयतो रुक्मौ भवत उभयत एवास्मिन्रुचं दधाति प्रयाजे-प्रयाजे कृष्णलं जुहोति दिग्भ्य एवास्मै ब्रह्म-वर्चसमव रुन्ध आग्नेयमष्टाकपालं निर्वपेत्सा-वित्रं द्वादशकपालं भूम्यै ( ३ ) चरुं यः कामयेत हिरण्यं विन्देय हिरण्यं मोप नमे-दिति यदाग्नेयो भवत्याग्नेयं वै हिरण्यं यस्यैव हिरण्यं तेनैवैनद्विन्दते सावित्रो भवति सवि-तृप्रसूत एवैनद्विन्दते भूम्यै चरुर्भवत्यस्यामेवै-नद्विन्दत उपैनꣳ हिरण्यं नमति वि वा एष इन्द्रियेण वीर्येणर्ध्यते यो हिरण्यं विन्दते

एताम् ( ४ ) एव निर्वपेद्धिरण्यं वित्त्वा नेन्द्रियेण वीर्येण व्यृध्यत एतामेव निर्वपेद्यस्य हिरण्यं नश्येद्यदाग्नेयो भवत्याग्नेयं वै हिरण्यं यस्यैव हिरण्यं तेनैवैनद्विन्दति सावित्रो भवति सवितृप्रसूत एवैनद्विन्दति भूम्यै चरुर्भवत्यस्यां वा एतन्नश्यति यन्नश्यत्यस्यामेवैनद्विन्दतीन्द्रः ( ५ ) त्वष्टुः सोममभीषहाऽपिबत्स विष्वङ्व्यार्च्छत्स इन्द्रियेण सोमपीथेन व्यार्ध्यत स यदूर्ध्वमुदवमीत्ते श्यामाका अभवन्त्स प्रजापतिमुपाधावत्तस्मा एतꣳ सोमेन्द्रꣳ श्यामाकं चरुं निरवपत्तेनैवास्मिन्निन्द्रियꣳ सोमपीथमदधाद्वि वा एष इन्द्रियेण सोमपीथेनर्ध्यते यः सोमं वमिति यः सोमवामी स्यात्तस्मै ( ६ ) एतꣳ सोमेन्द्रꣳ श्यामाकं चरुं निर्वपेत्सोमं चैवेन्द्रं च स्वेन भागधेयेनोप धावति तावेवास्मिन्निन्द्रियꣳ सोमपीथं धत्तो नेन्द्रियेण सोमपीथेन व्यृध्यते यत्सौम्यो भवति सोमपीथमेवाव रुन्धे यदैन्द्रो भवतीन्द्रियं वै सोमपीथ इन्द्रियमेव सोमपीथमव रुन्धे श्यामाको भवत्येष वाव स सोमः ( ७ ) साक्षादेव

सोमपीथमव रुन्धेऽग्नये दात्रे पुरोडाशमष्टाक-
पालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादश-
कपालं पशुकामोऽग्निरेवास्मै पशून्प्रजनयति
वृद्धानिन्द्रः प्र यच्छति दधि मधु घृतमापो
धाना भवन्त्येतद्वै पशूनाꣳ रूपꣳ रूपेणैव
पशूनव रुन्धे पञ्चगृहीतं भवति पाङ्क्ता हि
पशवो बहुरूपं भवति बहुरूपा हि पशवः
( ८ ) समृद्ध्यै प्राजापत्यं भवति प्राजापत्या
वै पशवः प्रजापतिरेवास्मै पशून्प्र जनयत्या-
त्मा वै पुरुषस्य मधु यन्मध्वग्नौ जुहोत्यात्मा-
नमेव तद्यजमानोऽग्नौ प्र ददाति पङ्क्त्यौ
याज्यानुवाक्ये भवतः पाङ्क्तः पुरुषः पाङ्क्ताः
पशव आत्मानमेव मृत्योर्निष्क्रीय पशूनव
रुन्धे ( ९ ) ॥

( इन्द्रियेऽस्मिन्भूम्यां एतामिन्द्रः स्यात्तस्मै सोमो बहुरूपा हि
पशव एकचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ द्वितीयाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः । )

देवाः । वै । मृत्योः । अबिभयुः । ते । प्रजा-

पतिमिति प्रजा—पतिम् । उपेति । अधावन् । तेभ्यः । एताम् । प्राजापत्यामिति प्राजा—पत्याम् । शतकृष्णलामिति शत—कृष्णलाम् । निरिति । अवपत् । तया । एव । एषु । अमृतम् । अदधात् । यः । मृत्योः । बिभीयात् । तस्मै । एताम् । प्राजापत्यामिति प्राजा—पत्याम् । शतकृष्णलामिति शत—कृष्णलाम् । निरिति । वपेत् । प्रजापतिमिति प्रजा—पतिम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मिन् । आयुः । दधाति । सर्वम् । आयुः । एति । शतकृष्णलेति शत—कृष्णला । भवति । शतायुरिति शत—आयुः । पुरुषः । शतेन्द्रिय इति शत—इन्द्रियः । आयुषि । एव । इन्द्रिये (१)। प्रतीति । तिष्ठति । घृते । भवति । आयुः । वै । घृतम् । अमृतम् । हिरण्यम् । आयुः । च । एव । अस्मै । अमृतम् । च । समीची इति । दधाति । चत्वारिचत्वारीति चत्वारि—चत्वारि । कृष्णलानि । अवेति । द्यति । चतुरवत्तस्येति चतुः—अवत्तस्य । आप्त्यै । एकधेत्येक—धा । ब्रह्मणे । उपेति । हरति । एकधेत्येक—धा । एव । यजमाने । आयुः । दधाति ।

असौ । आदित्यः । न । वीति । अरोचत । तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन् । तस्मै । एतम् । सौर्यम् । चरुम् । निरिति । अवपन् । तेन । एव । अस्मिन् ( २ ) । रुचम् । अदधुः । यः । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस—कामः । स्यात् । तस्मै । एतम् । सौर्यम् । चरुम् । निरिति । वपेत् । अमुम् । एव । आदित्यम् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । दधाति । ब्रह्मवर्चसीति ब्रह्म—वर्चसी । एव । भवति । उभयतः । रुक्मौ । भवतः । उभयतः । एव । अस्मिन् । रुचम् । दधाति । प्रयाजेप्रयाज इति प्रयाजे—प्रयाजे । कृष्णलम् । जुहोति । दिग्भ्य इति दिक्—भ्यः । एव । अस्मै । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । अवेति । रुन्धे । आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपेत् । सावित्रम् । द्वादशकपालमिति द्वादश—कपालम् । भूम्यै ( ३ ) । चरुम् । यः । कामयेत । हिरण्यम् । विन्देय । हिरण्यम् । मा । उपेति । नमेत् । इति । यत् । आग्नेयः । भवति । आग्नेयम् । वै । हिरण्यम् । यस्य । एव । हिरण्यम् ।

तेन । एव । एनत् । विन्दते । सावित्रः । भवति । सवितृप्रसूत इति सवितृ—प्रसूतः । एव । एनत् । विन्दते । भूम्यै । चरुः । भवति । अस्याम् । एव । एनत् । विन्दते । उपैति । एनम् । हिरण्यम् । नमति । वीति । वै । एषः । इन्द्रियेण । वीर्येण । ऋध्यते । यः । हिरण्यम् । विन्दते । एता-म् (४) । एव । निरिति । वपेत् । हिरण्यम् । वित्त्वा । न । इन्द्रियेण । वीर्येण । वीति । ऋध्यते । एताम् । एव । निरिति । वपेत् । यस्य । हिरण्यम् । नश्येत् । यत् । आग्नेयः । भवति । आग्नेयम् । वै । हिरण्यम् । यस्य । एव । हिरण्यम् । तेन । एव । एनत् । विन्दति । सावित्रः । भवति । सवितृप्रसूत इति सवितृ—प्रसूतः । एव । एनत् । विन्दति । भूम्यै । चरुः । भवति । अस्याम् । वै । एतत् । नश्यति । यत् । नश्यति । अस्याम् । एव । एनत् । विन्द-ति । इन्द्रः (५) । त्वष्टुः । सोमम् । अभीषहेत्यभि—सहा । अपिबत् । सः । विष्वङ् । वीति । आर्छत् । सः । इन्द्रियेण । सोमपीथेनेति सोम—पीथेन । वीति । आर्ध्यत । सः । यत् । ऊर्ध्वम् । उदवमीदि-त्युत्—अवमीत् । ते । श्यामाकाः । अभवन् । सः ।

प्रजापतिमिति प्रजा—पतिम् । उपेति । अधावत् । तस्मै । एतम् । सोमेन्द्रम् । श्यामाकम् । चरुम् । निरिति । अवपत् । तेन । एव । अस्मिन् । इन्द्रियम् । सोमपीथमिति सोम—पीथम् । अदधात् । वीति । वै । एषः । इन्द्रियेण । सोमपीथेनेति सोम—पीथेन । ऋध्यते । यः । सोमम् । वमिति । यः । सोमवामीति सोम—वामी । स्यात् । तस्मै ( ६ ) । एतम् । सोमेन्द्रम् । श्यामाकम् । चरुम् । निरिति । वपेत् । सोमम् । च । एव । इन्द्रम् । च । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । तौ । एव । अस्मिन् । इन्द्रियम् । सोमपीथमिति सोम—पीथम् । धत्तः । न । इन्द्रियेण । सोमपीथेनेति सोम—पीथेन । वीति । ऋध्यते । यत् । सौम्यः । भवति । सोमपीथमिति सोम—पीथम् । एव । अवेति । रुन्धे । यत् । ऐन्द्रः । भवति । इन्द्रियम् । वै । सोमपीथ इति सोम—पीथः । इन्द्रियम् । एव । सोमपीथमिति सोम—पीथम् । अवेति । रुन्धे । श्यामाकः । भवति । एषः । वाव । सः । सोमः । ( ७ ) । साक्षादिति स—अक्षात् । एव । सोमपीथमिति सोम—पीथम् । अवेति । रुन्धे । अग्नये ।

दात्रे। पुरोडाशम्। अष्टाकपालमित्यष्टा—कपालम्। निरिति। वपेत्। इन्द्राय। प्रदात्र इति प्र—दात्रे। पुरोडाशम्। एकादशकपालमित्येकादश—कपालम्। पशुकाम इति पशु—कामः। अग्निः। एव। अस्मै। पशून्। प्रजनयतीति प्र—जनयति। वृद्धान्। इन्द्रः। प्रेति। यच्छति। दधि। मधु। घृतम्। आपः। धानाः। भवन्ति। एतत्। वै। पशूनाम्। रूपम्। रूपेण। एव। पशून्। अवेति। रुन्धे। पञ्चगृहीतमिति पञ्च—गृहीतम्। भवति। पाङ्क्ताः। हि। पशवः। बहुरूपमिति बहु—रूपम्। भवति। बहुरूपा इति बहु—रूपाः। हि। पशवः (८)। समृद्ध्या इति सम्—ऋद्ध्यै। प्राजापत्यमिति प्राजा—पत्यम्। भवति। प्राजापत्या इति प्राजा—पत्याः। वै। पशवः। प्रजापतिरिति प्रजा—पतिः। एव। अस्मै। पशून्। प्रेति। जनयति। आत्मा। वै। पुरुषस्य। मधु। यत्। मधु। अग्नौ। जुहोति। आत्मानम्। एव। तत्। यजमानः। अग्नौ। प्रेति। दधाति। पङ्क्त्यौ। याज्यानुवाक्ये इति याज्या—अनुवाक्ये। भवतः। पाङ्क्तः। पुरुषः। पाङ्क्ताः। पशवः। आत्मानम्। एव।

मृत्योः । निष्क्रीयेति निः—क्रीय । पशून् । अवेति । रुन्धे ( ९ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

( अथ द्वितीयाष्टके तृतीयप्रपाठके तृतीयोऽनुवाक । )

देवा वै मत्रमासतर्द्धिंपरिमितं यशस्कामा-स्तेषाꣳ सोमꣳ राजानं यश आर्छत्स गिरिमुदै-त्तमग्निरनूदैत्तावग्नीषोमौ समभवतां ताविन्द्रो यज्ञविभ्रष्टोऽनु परैत्तावब्रवीद्याजयतं मेति तस्मा एतामिष्टिं निरवपतामाग्नेयमष्टाकपालमैन्द्रमे-कादशकपालꣳ सौम्यं चरुं तयैवास्मिन्तेजः ( १ ) इन्द्रियं ब्रह्मवर्चसमधत्तां यो यज्ञविभ्रष्टः स्यात्तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपाल-मैन्द्रमेकादशकपालꣳ सौम्यं चरुं यदाग्नेयो भवति तेज एवास्मिन्तेन दधाति यदैन्द्रो भवतीन्द्रियमेवास्मिन्तेन दधाति यत्सौम्यो ब्रह्मवर्चसं तेनाऽऽग्नेयस्य च सौम्यस्य चैन्द्रे समाश्लेषयेत्तेज श्चैवास्मिन्ब्रह्मवर्चसं च समीची ( २ ) दधात्यग्नीषोमीयमेकादशकपालं निर्व-

यं कामो नोपनमेदाग्नेयो वै ब्राह्मणः स सोमं पिबति स्वामेव देवताꣳ स्वेन भागधेये-नोप धावति सैवैनं कामेन समर्धयत्युपैनं कामो नमत्यग्नीषोमीयमष्टाकपालं निर्वपेद्ब्रह्म-वर्चसकामोऽग्नीषोमावेव स्वेन भागधेयेनोप धावति तावेवास्मिन्ब्रह्मवर्चसं धत्तो ब्रह्मवर्च-स्येव ( ३ ) भवति यदष्टाकपालस्तेनाऽऽग्नेयो यच्छ्यामाकस्तेन सौम्यः समृद्ध्यै सोमाय वाजिने श्यामाकं चरुं निर्वपेद्यः क्लैब्याद्बिभी-याद्रेतो हि वा एतस्माद्वाजिनमपक्रामत्यथैष क्लैब्याद्बिभाय सोममेव वाजिनꣳ स्वेन भागधे-येनोप धावति स एवास्मिन्रेतो वाजिनं दधाति न क्लीबो भवति ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद्ग्रामकामः ( ४ ) ब्रह्मणस्पतिमेव स्वेन भागधेयेनोप धावति स एवास्मै सजातान्प्र यच्छति ग्राम्येव भवति गणवती याज्यानु-वाक्ये भवतः सजातैरेवैनं गणवन्तं करोत्ये-तामेव निर्वपेद्यः कामयेत ब्रह्मन्विशं वि नाश-येयमिति मारुती याज्यानुवाक्ये कुर्याद्ब्रह्मन्नेव विशं वि नाशयति ( ५ ) ॥

( तेजः समीची ब्रह्मवर्चस्येव ग्रामकामस्त्रिचत्वारि२शच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अथ द्वितीयाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः । )

---

देवाः । वै । सत्रम् । आसत । ऋद्धिपरिमितमित्यृद्धि—परिमितम् । यशस्कामा इति यशः—कामाः । तेषाम् । सोमम् । राजानम् । यशः । आर्छत् । सः । गिरिम् । उदिति । ऐत् । तम् । अग्निः । अनु । उदिति । ऐत् । तौ । अग्नीषोमावित्यग्नी—सोमौ । समिति । अभवताम् । तौ । इन्द्रः । यज्ञविभ्रष्ट इति यज्ञ—विभ्रष्टः । अनु । परेति । ऐत् । तौ । अब्रवीत् । याजयतम् । मा । इति । तस्मै । एताम् । इष्टिम् । निरिति । अवपताम् । आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । ऐन्द्रम् । एकादशकपालमित्येकादश—कपालम् । सौम्यम् । चरुम् । तया । एव । अस्मिन् । तेजः ( १ ) । इन्द्रियम् । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । अधत्ताम् । यः । यज्ञविभ्रष्ट इति यज्ञ—विभ्रष्टः । स्यात् । तस्मै । एताम् । इष्टिम् । निरिति । वपेत् । आग्नेयम् । अष्टाकपाल-

मित्यष्टा—कपालम् । ऐन्द्रम् । एकादशकपालमित्ये-
कादश—कपालम् । सौम्यम् । चरुम् । यत् ।
आग्नेयः । भवति । तेजः । एव । अस्मिन् । तेन ।
दधाति । यत् । ऐन्द्रः । भवति । इन्द्रियम् । एव ।
अस्मिन् । तेन । दधाति । यत् । सौम्यः । ब्रह्म-
वर्चसमिति ब्रह्म—वर्चसम् । तेन । आग्नेयस्य । च ।
सौम्यस्य । च । ऐन्द्रे । समाश्लेषयेदिति सम्—
आश्लेषयेत् । तेजः । च । एव । अस्मिन् । ब्रह्म-
वर्चसमिति ब्रह्म—वर्चसम् । च । समीची इति ।
( २ ) । दधाति । अग्नीषोमीयमित्यग्नी—सोमीयम् ।
एकादशकपालमित्येकादश—कपालम् । निरिति ।
वपेत् । यम् । कामः । न । उपनमेदित्युप—नमेत् ।
आग्नेयः । वै । ब्राह्मणः । सः । सोमम् । पिबति ।
स्वाम् । एव । देवताम् । स्वेन । भागधेयेनेति भाग—
धेयेन । उपेति । धावति । सा । एव । एनम् ।
कामेन । समिति । अर्धयति । उपेति । एनम् ।
कामः । नमति । अग्नीषोमीयमित्यग्नी—सोमीयम् ।
अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपेत् ।
ब्रह्मवर्चसकाम इति ब्रह्मवर्चस—कामः । अग्नीषोमा-
वित्यग्नी—सोमौ । एव । स्वेन । भागधेयेनेति भाग—

धेयेन । उपेति । धावति । तौ । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । धत्तः । ब्रह्मवर्चसीति ब्रह्म–वर्चसी । एव (३) । भवति । यत् । अष्टाकपाल इत्यष्टा–कपालः । तेन । आग्नेयः । यत् । श्यामाकः । तेन । सौम्यः । समृद्ध्या इति सम्–ऋद्ध्यै । सोमाय । वाजिने । श्यामाकम् । चरुम् । निरिति । वपेत् । यः । क्लैब्यात् । बिभीयात् । रेतः । हि । वै । एतस्मात् । वाजिनम् । अपक्रामतीत्यप–क्रामति । अथ । एषः । क्लैब्यात् । बिभाय । सोमम् । एव । वाजिनम् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । अस्मिन् । रेतः । वाजिनम् । दधाति । न । क्लीबः । भवति । ब्राह्मणस्पत्यमिति ब्राह्मणः–पत्यन् । एकादशकपालमित्येकादश–कपालम् । निरिति । वपेत् । ग्रामकाम इति ग्राम–कामः (४) । ब्रह्मणः । पतिम् । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । अस्मै । सजातानिति स–जातान् । प्रेति । यच्छति । ग्रामी । एव । भवति । गणवती इति गण–वती । याज्यानुवाक्ये इति याज्या–अनुवाक्ये । भवतः । सजातैरिति स–जातैः ।

( यज्ञविभ्रष्टादीनामिष्टिविधि )

एव । एनम् । गणवन्तमिति गण—वन्तम् । करोति । एताम् । एव । निरिति । वपेत् । यः । कामयेत । ब्रह्मन् । विशम् । वीति । नाशयेयम् । इति । मारुती इति । याज्यानुवाक्ये इति याज्या—अनुवाक्ये । कुर्यात् । ब्रह्मन् । एव । विशम् । वीति । नाशयति ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अथ द्वितीयकाण्डे तृतीयः प्रपाठकः । )

( तत्र प्रथमादितृतीयान्ता अनुवाकाः । )

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
काम्येष्टयः श्रुताः काश्चिद्द्वितीये तु प्रपाठके ।
तृतीये तु विधास्यन्ते तत्तत्फलमभीप्सितः ॥ २ ॥
काम्येष्टिष्वत्र समानेऽपि संप्रदायकृता भिदा ।
प्रपाठकद्वयस्यैवं चतुर्थस्यापि गम्यताम् ॥ ३ ॥
चतुर्दशानुवाकाः स्युस्तृतीयेऽस्मिन्प्रपाठके ।
तदर्थास्तु क्रमेणेह वक्ष्यन्तेऽवसरे सति ॥ ४ ॥
भूतिकामो भुवद्ब्रह्म आदित्येभ्यश्चरुं चरेत् ।
रुद्धोऽवरुध्यमानो वा धारयद्ब्रह्म आचरेत् ॥ ५ ॥
शुक्लैर्व्रीहिभिरादित्यं चरुं कृष्णैस्तु वारुणम् ।
रुध्यमानः प्रकुर्वीत मयूखानां च कीर्तनम् ॥ ६ ॥
तद्बन्धनं तथाऽऽदित्यं चरुमेव समाचरेत् ।

१ क. ग. ङ. च. °नाऽसभा ।

आद्यानुवाके कथितमेतत्सर्वं विशेषतः ॥ ७ ॥
इन्द्रं वो विश्व इत्यत्राक्षरार्थस्तु प्रवर्णितः ।
मृत्योर्भीतो ह्यायुरर्थे निर्वपेच्छतकृष्णलाम् ॥ ८ ॥
ब्रह्मवर्चसकामो यः स सौर्यं चरुमाचरेत् ।
हिरण्यकामः कुर्वीत ह्याग्नेयादिहविस्त्रयम् ॥ ९ ॥
हिरण्यलाभे तन्नाशेऽप्येतदेव समाचरेत् ।
सोमवामी तु सोमेन्द्रं चरु श्यामाकतश्चरेत् ॥ १० ॥
पश्वर्थं ह्यग्नये दात्र इत्यादित्रयमाचरेत् ।
अनुवाके द्वितीयेऽर्था एतावन्त उदीरिताः ॥
हिरण्यगर्भ इत्यत्राक्षरार्थः स्पष्टमीरितः ॥ ११ ॥

अथ तृतीयेऽनुवाके यज्ञविभ्रष्टादीनामिष्टयो विधातव्याः । तत्राऽऽदौ यज्ञविभ्रष्टेष्टिविधानाय प्रस्तौति—

देवा वै सत्रमासतर्द्धिपरिमितं यशस्कामास्तेषाꣳ सोमꣳ राजानं यश आर्छत्स गिरिमुदैत्तमग्निरनूदैत्तावग्नीषोमौ समभवतां ताविन्द्रो यज्ञविभ्रष्टोऽनु परैत्तावब्रवीद्याजयतं मेति तस्मा एतामिष्टिं निरवपतामाग्नेयमष्टाकपालमैन्द्रमेकादशकपालꣳ सौम्यं चरुं तयैवास्मिन्तेज इन्द्रियं ब्रह्मवर्चसमधत्ताम् , इति ।

ऋद्ध्या काम्यमानेन यशोलक्षणेन फलेन परिमितं सत्रमनुष्ठितवन्तः । सन्ति सहस्रं सत्राणि तेषु येन यशः सिध्यति तदन्वतिष्ठन् । तेषां देवानां मध्ये फलीभूतं यशः सोमं प्राप्नोत् । स च सोमोऽन्येषां यशो मा भूदिति मन्वानस्तेन यशसा सह गिरिं कंचिद्दुर्गं पर्वतमारोहत् । अग्निश्च सहसा तस्य पृष्ठत एवाऽऽरोहत् । तौ द्वावग्नीषोमौ परस्परमैकमत्यं गतौ । ततस्तावुभावनु फलरहित इन्द्रश्चिरकालेन गत्वा मां फलाय याजयतमिति अवोचत् । तौ च तस्मै त्रिहविष्कामिष्टिं निरवपताम् । तैस्त्रिभिर्हविर्भिस्तेजआदिकं त्रयं लब्धम् ॥

अथ विधत्ते—

यो यज्ञविभ्रष्टः स्यात्तस्मा एतामिष्टिं निर्वपेदा-

१ ख. ग. हृत्स॑ । २ ख. प्रार्थयामास ।

ग्नेयमष्टाकपालमैन्द्रमेकादशकपालꣳ सौम्यं चरुं यदाग्नेयो भवति तेज एवास्मिन्तेन दधाति यदैन्द्रो भवतीन्द्रियमेवास्मिन्तेन दधाति यत्सौम्यो ब्रह्मवर्चसं तेन, इति।

इष्टिपशुसोमानां स्वस्वकालेऽननुष्ठानं भ्रेषस्त भ्रेषं प्राप्तस्येयमिष्टिः॥
अत्रैव कंचिद्विशेषं विधत्ते—

आग्नेयस्य च सौम्यस्य चैन्द्रे समाश्लेषयेत्तेजश्चै-वास्मिन्ब्रह्मवर्चसं च समीची दधाति, इति।

तेन समाश्लेषणेनास्मिन्यजमाने आज्ञाशक्तिः श्रुताध्ययनसंपत्तिश्चेत्येते संपूर्णे स्थापयति॥
कामितार्थसिद्ध्यर्थमिष्ट्यन्तरं विधत्ते—

अग्नीषोमीयमेकादशकपालं निर्वपेद्यं कामो नोपनमेदाग्नेयो वै ब्राह्मणः स सोमं पिबति स्वामेव देवताꣳ स्वेन भागधेयेनोप धावति सैवैनं कामेन समर्धयत्युपैनं कामो नमति, इति।

अग्निना सह मुखे जातत्वात्सोमपानत्वाच्च तदुभयं ब्राह्मणस्य देवता॥
ब्रह्मवर्चसार्थं श्यामाकपुरोडाशं विधत्ते—

अग्नीषोमीयमष्टाकपालं निर्वपेद्ब्रह्मवर्चसकामोऽग्नीषोमावेव स्वेन भागधेयेनोप धावति तावेवास्मिन्ब्रह्मवर्चसं धत्तो ब्रह्मवर्चस्येव भवति यदष्टाकपालस्तेनाऽऽग्नेयो यच्छ्यामाकस्तेन सौम्यः समृद्ध्यै, इति।

कपालगतयाऽष्टसंख्यया गायत्रीस्मरणात्तद्द्वारेण हविष आग्नेयत्वम्, "अष्टाक्षरा गायत्री गायत्रोऽग्निः" इति श्रुत्यन्तरात्। तथा "सोमो वा अकृष्टपच्यस्य राजा" इत्यादिश्रुतेः श्यामाकवत्त्वेन हविषः सौम्यत्वम्। अनेनैवार्थवादेन विधिवाक्ये पुरोडाशस्य श्यामाकमयत्वमवगन्तव्यम्॥

---

१ क. घ. ङ. च. हविषा।

क्लीवत्वपरिहारायेष्टिं विधत्ते—

सोमाय वाजिने श्यामाकं चरुं निर्वपेद्यः क्लैब्याद्विभीयाद्रेतो हि वा एतस्माद्वाजिनमपक्रामत्यथैष क्लैब्याद्बिभाय सोममेव वाजिनꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्रेतो वाजिनं दधाति न क्लीबो भवति, इति।

प्रजननसमर्थोऽन्नरसो वाजस्तद्वते वाजिने। यदा वाजिनं प्रजननसमर्थान्नरसरूपं रेतोऽस्मात्पुरुषादपक्रामति रोगेणादृष्टविशेषेण वा तत्सामर्थ्यं प्रतिबध्यते तदानीमस्य क्लीवत्वं संपद्यते तस्मात्क्लीवत्वाद्बिभाय बिभेति॥

इष्ट्यन्तरं विधत्ते—

ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद्ग्रामकामो ब्रह्मणस्पतिमेव स्वेन भागधेयेनोप धावति स एवास्मै सजातान्प्र यच्छति ग्राम्येव भवति, इति॥

अत्र गणानां त्वा, स इज्जनेनेत्येते ऋचावन्त्यानुवाके समाम्नास्यमाने विधत्ते—

गणवती याज्यानुवाक्ये भवतः सजातैरेवैनं गणवन्तं करोति, इति।

गणशब्दो ययोर्ऋचोरस्ति ते गणवत्यौ॥

यदा वैश्यजातिर्धनिकत्वगर्वेण ब्राह्मणमतिक्रामति तदा तस्मिन्ब्राह्मणे तां जातिं वश्यां कर्तुं तामेवेष्टिं विधत्ते—

एतामेव निर्वपेद्यः कामयेत ब्रह्मन्विशं वि नाशयेयमिति, इति।

ब्रह्मन्ब्राह्मणे विनाशयेयं गर्वविनाशनेनाऽऽत्मसात्कुर्याम्। मरुतो यद्ध वो दिवो या वः शर्मेत्येते ऋचौ वैश्वानरो न ऊत्येत्यस्मिन्ननुवाके समाम्नाते अत्रापि प्रतीकेन ग्रहीष्येते॥

तदुभयमत्र विधत्ते—

मारुती याज्यानुवाक्ये कुर्याद्ब्रह्म-
न्नेव विशं वि नाशयति ॥, इति ॥

मरुतां संबन्धिन्यौ मारुत्यौ। मरुतो वै देवानां विश इति श्रुतेस्तदनुग्रहेण मानुषीं विशमधीनां करोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके प्रथमादितृतीयान्ता अनुवाकाः ॥ ३ ॥

( अथ द्वितीयाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः । )

---

अर्यम्णे चरुं निर्वपेत्सुवर्गकामोऽसौ वा आदित्योऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवैनꣳ सुवर्गं लोकं गमयत्यर्यम्णे चरुं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युरित्यसौ वा आदित्योऽर्यमा यः खलु वै ददाति सोऽर्यमाऽर्यमणमेव स्वेन भागधेये-नोप धावति स एव ( १ ) अस्मै दानकामाः प्रजाः करोति दानकामा अस्मै प्रजा भवन्त्य-र्यम्णे चरुं निर्वपेद्यः कामयेत स्वस्ति जनतां-मियामित्यसौ वा आदित्योऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवैनं तद्गम-यति यत्र जिगमिषतीन्द्रो वै देवानामानुजा-

वर आसीत्स प्रजापतिमुपाधावत्तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निः ( २ ) अवपत्तेनैवैनमग्रं देवतानां पर्यणयद्बुध्नवती अग्रवती याज्यानुवाक्ये अकरोद्बुध्नादेवैनमग्रं पर्यणयद्यो राजन्य आनुजावरः स्यात्तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेदिन्द्रमेव स्वेन भागधेयेनोप धावति स एवैनमग्रꣳ समानानां परि णयति बुध्नवती अग्रवती याज्यानुवाक्ये भवतो बुध्नादेवैनमग्रम् ( ३ ) परि णयत्यानुषूको भवत्येषा ह्येतस्य देवता य आनुजावरः समृद्ध्यै यो ब्राह्मण आनुजावरः स्यात्तस्मा एतं बार्हस्पत्यमानुषूकं चरुं निर्वपेद्बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवैनमग्रꣳ समानानां परि णयति बुध्नवती अग्रवती याज्यानुवाक्ये भवतो बुध्नादेवैनमग्रं परि णयत्यानुषूको भवत्येषा ह्येतस्य देवता य आनुजावरः समृद्ध्यै ( ४ ) ॥

( एव निरग्रमेतस्य चत्वारि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( अथ द्वितीयाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः । )

अर्यम्णे । चरुम् । निरिति । वपेत् । सुवर्गकाम इति सुवर्ग—कामः । असौ । वै । आदित्यः । अर्यमा । अर्यमणम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । एनम् । सुवर्गमिति सुवः—गम् । लोकम् । गमयति । अर्यम्णे । चरुम् । निरिति । वपेत् । यः । कामयेत । दानकामा इति दान—कामाः । मे । प्रजा इति प्र—जाः । स्युः । इति । असौ । वै । आदित्यः । अर्यमा । यः । खलु । वै । ददाति । सः । अर्यमा । अर्यमणम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव (१) । अस्मै । दानकामा इति दान—कामाः । प्रजा इति प्र—जाः । करोति । दानकामा इति दान—कामाः । अस्मै । प्रजा इति प्र—जाः । भवन्ति । अर्यम्णे । चरुम् । निरिति । वपेत् । यः । कामयेत । स्वस्ति । जनताम् । इयाम् । इति । असौ । वै । आदित्यः । अर्यमा । अर्यमणम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । एनम् । तत् । गमयति । यत्र । जिगमिषति । इन्द्रः । वै ।

देवानाम् । आनुजावर इत्यानु—जावरः । आसीत् । सः । प्रजापतिमिति प्रजा—पतिम् । उपेति । अधावत् । तस्मै । एतम् । ऐन्द्रम् । आनुषूकमित्यानु—सूकम् । एकादशकपालमित्येकादश—कपालम् । निरिति (२) । अवपत् । तेन । एव । एनम् । अग्रम् । देवतानाम् । परीति । अनयत् । बुध्नवती इति बुध्न—वती । अग्रवती इत्यग्र—वती । याज्यानुवाक्ये इति याज्या—अनुवाक्ये । अकरोत् । बुध्नात् । एव । एनम् । अग्रम् । परीति । अनयत् । यः । राजन्यः । आनुजावर इत्यानु—जावरः । स्यात् । तस्मै । एतम् । ऐन्द्रम् । आनुषूकमित्यानु—सूकम् । एकादशकपालमित्येकादश—कपालम् । निरिति । वपेत् । इन्द्रम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । एनम् । अग्रम् । समानानाम् । परीति । नयति । बुध्नवती इति बुध्न—वती । अग्रवती इत्यग्र—वती । याज्यानुवाक्ये इति याज्या—अनुवाक्ये । भवतः । बुध्नात् । एव । एनम् । अग्रम् (३) । परीति । नयति । आनुषूक इत्यानु—सूकः । भवति । एषा । हि । एतस्य । देवता । यः । आनुजावर इत्यानु—जावरः । समृद्-

ध्या इति सम्—ऋद्ध्यै। यः। ब्राह्मणः। आनुजावर इत्यानु—जावरः। स्यात्। तस्मै। एतम्। बार्हस्पत्यम्। आनुषूकमित्यानु—षूकम्। चरुम्। निरिति। वपेत्। बृहस्पतिम्। एव। स्वेन। भागधेयेनेति भाग—धेयेन। उपेति। धावति। सः। एव। एनम्। अग्रम्। समानानाम्। परीति। नयति। बुध्नवती इति बुध्न—वती। अग्रवती इत्यग्र—वती। याज्यानुवाक्ये इति याज्या—अनुवाक्ये। भवतः। बुध्नात्। एव। एनम्। अग्रम्। परीति। नयति। आनुषूक इत्यानु—षूकः। भवति। एषा। हि। एतस्य। देवता। यः। आनुजावर इत्यानु—जावरः। समृद्ध्या इति सम्—ऋद्ध्यै (४)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

--

( अथ द्वितीयकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः । )

---

तृतीये यज्ञविभ्रष्टो यः कामं प्राप्तुमिच्छति ।
ब्रह्मवर्चसकामो यः क्लीबत्वाद्यो बिभेति च ॥ १ ॥
ग्रामकामो ब्राह्मणो यो विशः स्थापनमिच्छति ।
एतेषामिष्टयः प्रोक्तास्तत्तत्फलसमाप्तये ॥ २ ॥

अथ चतुर्थे स्वर्गकामादीनामिष्टयो विधातव्याः ।

तत्र स्वर्गार्थिन इष्टिं विधत्ते—

अर्यम्णे चरुं निर्वपेत्सुवर्गकामोऽसौ वा आदि-
त्योऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति
स एवैनꣳ सुवर्गं लोकं गमयति, इति ॥

प्रतिग्रहार्थिनस्तामेवेष्टिं विधत्ते—

अर्यम्णे चरुं निर्वपेद्यः कामयेत दानकामा
मे प्रजाः स्युरित्यसौ वा आदित्योऽर्यमा यः
खलु वै ददाति सोऽर्यमाऽर्यमणमेव स्वेन भाग-
धेयेनोप धावति स एवास्मै दानकामाः प्रजाः
करोति दानकामा अस्मै प्रजा भवन्ति, इति।

लोके यः कोऽपि द्रव्यं ददाति सोऽयं लोकैस्त्कीर्त्या भासमानत्वादर्यमेत्यु-
च्यते। तं तोषयितुं मुक्तादिकं चरुर्युक्तः ॥

सभां जिगमिषोरिष्टिं विधत्ते—

अर्यम्णे चरुं निर्वपेद्यः कामयेत स्वस्ति
जनतामियामित्यसौ वा आदित्योऽर्यमाऽ-
र्यमणमेव स्वेन भागधेयेनोप धावति स
एवैनं तद्गमयति यत्र जिगमिषति, इति।

स्वस्ति निर्विघ्नेन, जनतां जनसमूहम् ॥

यः समानानां मध्ये श्रैष्ठ्यमलभमानस्तदीयानुजादवरो निकृष्टो वर्तते तस्य
श्रैष्ठ्यमाप्त्यर्थमिष्टिं विधातुं प्रस्तौति—

इन्द्रो वै देवानामानुजावर आसीत्स प्रजा-
पतिमुपाधावत्तस्मा एतमैन्द्रमानुषूकमेकाद-
शकपालं निरवपत्तेनैवैनमग्रं देवतानां
पर्यणयद्बुध्नवती अग्रवती याज्यानुवाक्ये
अकरोद्बुध्नादेवैनमग्रं पर्यणयत्, इति।

अनु पश्चाज्जातो भ्राताऽनुजस्तस्मादप्यवरोऽनुजावरस्तद्वद्वर्तमान आनुजा-
वरः, अत्यन्तनिकृष्ट इत्यर्थः । व्रीहिस्तम्बेषु लूनेष्ववशिष्टमूलेभ्योऽनुसूयन्ते

पश्चादुत्पद्यन्त इति द्वितीयफलरूपा व्रीहयोऽनुपूकाः, तेभ्यो निष्पन्नमानुपूकम्। तेन हविषा प्रजापतिर्देवतानां मध्य इन्द्रं श्रैष्ठ्यं प्रापितवान्। बुध्नशब्दोऽस्ति ययोर्ऋचोस्ते बुध्नवत्यौ। अग्रशब्दोऽस्ति ययोर्ऋचोस्ते अग्रवत्यौ। बुध्नादग्रं बुध्नादग्रेणत्येते अन्त्यानुवाके समाम्नास्यमाने। बुध्नान्मूलादारभ्याग्रमवसानं प्रापयत्। कर्मानुष्ठानकालमारभ्य यावज्जीवं श्रैष्ठ्यं प्रापितवानित्यर्थः॥

अथ विधत्ते—

**यो राजन्य आनुजावरः स्यात्तस्मा एतमैन्द्रमानुपूकमेकादशकपालं निर्वपेदिन्द्रमेव स्वेन भागधेयेनोप धावति स एवैनमग्रꣳ समानानां परि णयति बुध्नवती अग्रवती याज्यानुवाक्ये भवतो बुध्नादेवैनमग्रं परि णयत्यानुपूको भवत्येषा ह्येतस्य देवता य आनुजावरः समृद्ध्यै**, इति।

य आनुपूक आनुजावर एतस्येयमानुपूकधान्यभागिन्येव देवता युक्ता, सदृशत्वात्। तस्मादानुपूकपुरोडाशः समृद्ध्यै संपद्यते॥

आनुजावरब्राह्मणस्येष्टिं विधत्ते—

**यो ब्राह्मण आनुजावरः स्यात्तस्मा एतं बार्हस्पत्यमानुपूकं चरुं निर्वपेद्बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवैनमग्रꣳ समानानां परि णयति बुध्नवती अग्रवती याज्यानुवाक्ये भवतो बुध्नादेवैनमग्रं परि णयत्यानुपूको भवत्येषा ह्येतस्य देवता य आनुजावरः समृद्ध्यै**॥, इति॥

अत्र प्र यो जज्ञे, महान्मही, इति द्वे याज्यानुवाक्ये। स बुध्नादाष्ट जनुषाऽभ्यग्रमिति बुध्नाग्रशब्दयोस्तत्र विद्यमानत्वात्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

---

प्रजापतेस्त्रयंस्त्रिꣳशद्दुहितर आसन्ताः सोमाय राज्ञेऽददात्तासाꣳ रोहिणीमुपैत्ता ईर्ष्यन्तीः पुनरगच्छन्ता अन्वैत्ताः पुनरयाचत ता अस्मै न पुनरददात्सोऽब्रवीदृतममीष्व यथा समावच्छ उपैष्याम्यथ ते पुनर्दास्यामीति स ऋतमामीत्ता अस्मै पुनरददात्तासाꣳ रोहिणीमेवोपै (१) त्तं यक्ष्म आर्छद्राजानं यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म यत्पापीयानभवत्तत्पापयक्ष्मस्य यज्जायाभ्योऽविन्दत्तज्जायेन्यस्य य एवमेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा विन्दन्ति स एता एव नमस्यन्नुपाधावत्ता अब्रुवन्वरं वृणामहै समावच्छ एव न उपाय इति तस्मा एतम् (२) आदित्यं चरुं निरवपन्तेनैवैनं पापात्स्रामादमुञ्चन्यः पापयक्ष्मगृहीतः स्यात्तस्मा एतमादित्यं चरुं निर्वपेदादित्यानेव स्वेन भागधेयेनोप धावति त एवैनं पापात्स्रामान्मुञ्चन्त्यमावास्यायां निर्वपेदमुमेवैनमाप्यायमानमन्वा प्यायते नवोनवो भवति जायमान इति पुरोनुवाक्या

( राजयक्ष्मगृहीतस्येष्टिविधिः )

भवत्यायुरेवास्मिन्तया दधाति यमादित्या अꣳशुमाप्याययन्तीति याज्यैवैनमेतया प्या- ययति ( ३ ) ॥

( एवोपैनमस्मिन्त्रयोदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ द्वितीयाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

प्रजापतेरिति प्रजा—पतेः । त्रयस्त्रिꣳशदिति त्रयः—त्रिꣳशत् । दुहितरः । आसन् । ताः । सोमाय । राज्ञे । अददात् । तासाम् । रोहिणीम् । उपेति । ऐत् । ताः । ईर्ष्यन्तीः । पुनः । अगच्छन् । ताः । अन्विति । ऐत् । ताः । पुनः । अयाचत । ताः । अस्मै । न । पुनः । अददात् । सः । अब्रवीत् । ऋतम् । अमीष्व । यथा । समावच्छ इति समाव—शः । उपैष्यामीत्युप—एष्यामि । अथ । ते । पुनः । दास्यामि । इति । सः । ऋतम् । आमीत् । ताः । अस्मै । पुनः । अददात् । तासाम् । रोहिणीम् । एव । उपेति ( १ ) । ऐत् । तम् । यक्ष्मः । आर्छत् । राजानम् । यक्ष्मः । आरत् । इति । तत् ।

राजयक्ष्मस्येति राज—यक्ष्मस्य । जन्म । यत् । पापीयान् । अभवत् । तत् । पापयक्ष्मस्येति पाप—यक्ष्मस्य । यत् । जायाभ्यः । अविन्दत् । तत् । जायेन्यस्य । यः । एवम् । एतेषाम् । यक्ष्माणाम् । जन्म । वेद । न । एनम् । एते । यक्ष्माः । विन्दन्ति । सः । एताः । एव । नमस्यन् । उपेति । अधावत् । ताः । अब्रुवन् । वरम् । वृणामहै । समावच्छ इति समावत्—शः । एव । नः । उपेति । अयः । इति । तस्मै । एतम् ( २ ) । आदित्यम् । चरुम् । निरिति । अवपन् । तेन । एव । एनम् । पापात् । स्रामात् । अमुञ्चन् । यः । पापयक्ष्मगृहीत इति पापयक्ष्म—गृहीतः । स्यात् । तस्मै । एतम् । आदित्यम् । चरुम् । निरिति । वपेत् । आदित्यान् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । ते । एव । एनम् । पापात् । स्रामात् । मुञ्चन्ति । अमावास्यायामित्यमा—वास्यायाम् । निरिति । वपेत् । अमुम् । एव । एनम् । आप्यायमानमित्या—प्यायमानम् । अनु । एति । प्याययति । नवोनव इति नवः—नवः । भवति । जायमानः । इति । पुरोनुवाक्येति पुरः—अनुवाक्या । भवति । आयुः ।

एव । अस्मिन् । तया । दधाति । यम् । आदित्याः ।
अंशुम् । आप्याययन्तीत्या—प्याययन्ति । इति ।
याज्या । एति । एव । एनम् । एतया । प्याय-
यति । ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके
तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ द्वितीयकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

स्वर्गकामो दानकामः सभां गन्तुं य इच्छति ।
राजन्यो ब्राह्मणश्च द्वौ यौ स्यातामानुजावरौ ॥
तुर्येऽनुवाक एतेषामाम्नाता इष्टयः क्रमात् ॥ १ ॥

पञ्चमे राजयक्ष्मगृहीतस्येष्टिं विधातुं प्रस्तौति—

प्रजापतेस्त्रयस्त्रिंशद्दुहितर आसन्ताः सोमाय
राज्ञेऽददात्तासाꣳ रोहिणीमुपैत्ता ईर्ष्यन्तीः पुन-
रगच्छन्ता अन्वैत्ताः पुनरयाचत ता अस्मै न
पुनरददात्सोऽब्रवीदृतममीष्व यथा समावच्छ
उपैष्याम्यथ ते पुनर्दास्यामीति स ऋतमा-
मीत्ता अस्मै पुनरददात्तासाꣳ रोहिणीमेवोपैत्तं
यक्ष्म आर्छद्राजानं यक्ष्म आरदिति तद्रा-
जयक्ष्मस्य जन्म यत्पापीयानभवत्तत्पापय-
क्ष्मस्य यज्जायाभ्योऽविन्दत्तज्जायेन्यस्य य एव-
मेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा
विन्दन्ति स एता एव नमस्यन्नुपाधावत्ता

---

१ क. घ ङ. तृतीयेऽनुवाक । ख च. चतुर्थानुवाक ।

अब्रुवन्वरं वृणामहै समावच्छ एव न उपाय इति तस्मा एतमादित्यं चरुं निरवपन्तेनैवैनं पापात्स्रामादमुञ्चन् , इति।

" अम्बा दुला नितत्निरभ्रयन्ती मेघयन्ती वर्षयन्ती चुपुणीका " इत्येवमाम्नाताः सप्त कृत्तिकाः। अवशिष्टा अश्विन्यादयः षड्विंशतिता(स्ता)रकाः। ता एतास्त्रयस्त्रिंशत्। तत्र रोहिणीव्यतिरिक्ता ईर्ष्यन्तीस्तदीयं सुखमसहमानाः पुनः प्रजापतिमगच्छन्। सोमस्ता अनुगम्य प्रजापतिं याचितवान्। स प्रजापतिरेवमब्रवीच्छपथं प्रतिपद्यस्व तद्यथा समावच्छः साम्येन ता उपैष्यामीति, ततस्ताः पुनर्दास्यामीति। स च सोमः शपथं कृत्वा ताः स्वीकृत्य शपथमुल्लङ्घ्य पूर्ववद्रोहिणीमेवोपैत्। ततः स यक्ष्मव्याधिगृहीतोऽभूत्। ततो राजानं यक्ष्मः प्राप्तवानिति व्युत्पत्त्या राजयक्ष्मनाम्नो व्याधेर्जन्म संपन्नम्। यस्मादयं सोमः पापीयांस्तस्मादेतत्प्राप्त्या पापयक्ष्मस्य जन्म संपन्नम्। यस्माज्जायाभ्यो निमित्तभूताभ्यो व्याधिमलभत तस्माज्जायेन्यनामकस्य व्याधेर्जन्म संपन्नम्। त एते त्रयो यक्ष्मव्याधेरवान्तरविशेषाः। तज्जन्मवेदिनो व्याधेरलाभः फलम्। ततः सोमेन नमस्कृताः सोवेताश्चैताः सर्वाः साम्येनोपगमनं वरं वृत्वा व्याधिपरिहाराय चरुं निरुप्य सोमं तस्मात्पापात्स्रामात्प्रबलाद्रोगादमोचयन्॥

इदानीं विधत्ते—

यः पापयक्ष्मगृहीतः स्यात्तस्मा एतमादित्यं चरुं निर्वपेदादित्यानेव स्वेन भागधेयेनोप धावति त एवैनं पापात्स्रामान्मुञ्चन्ति, इति।

आदित्यानित्यर्थवादे श्रवणादस्य चरोरदितिर्देवता न भवति॥

पौर्णमासीं वारयितुं विधत्ते—

अमावास्यायां निर्वपेदमुमेवैनमाप्यायमानमन्वा प्याययति , इति।

अमावास्यायामतीतायां शुक्लप्रतिपदमारभ्य सोमस्य कलावृद्ध्याऽऽप्यायनं भवति॥

१ ख. 'विमस्तो बभूव। त'। २ ख. ग. ङ च. ञय क्षयव्या'।

( अन्नादनशक्तिकामस्येष्टिविधिः )

चतुर्थप्रपाठकस्यान्त्यानुवाके समाम्नास्यमाने ऋचौ विधत्ते—

नवोनवो भवति जायमान इति पुरो-
नुवाक्यया भवत्यायुरेवास्मिन्तया दधा-
ति यमादित्या अꣳशुमाप्याययन्तीति
याज्यैवैनमेतया प्याययति ॥, इति ॥

ते एते ऋचौ तत्रैव व्याख्यास्येते । प्रथमायां पुनानो दीर्घमायुस्तिरतीत्यु-क्तत्वात्तत्पाठेनाऽऽयुष्प्राप्तिः । अमावास्यायामादित्ये प्रविष्टानां चन्द्रकलानां पुनरादित्यादेव चन्द्रेण लब्धत्वाच्चन्द्रोत्कर्ष आदित्यस्य चोत्कर्ष इति कृत्वा तस्या ऋच आदित्यचन्द्रविषयविकरणम् । द्वितीयस्यामृच्याप्याययन्तीति श्रव-णात्तयर्चा यजमानस्याऽऽप्यायनं युक्तम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-
दीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके
पञ्चमोऽनुवाकः ॥ ५ ॥

( अथ द्वितीयकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः । )

प्रजापतिर्देवेभ्योऽन्नाद्यं व्यादिशत्सोऽब्रवी-
द्यदिमाँल्लोकानभ्यतिरिच्यातै तन्ममासदिति
तदिमाँल्लोकानभ्यत्यरिच्यतेन्द्रꣳ राजानमिन्द्रम-
धिराजमिन्द्रꣳ स्वराजानं ततो वै स इमाँल्लो-
काꣳस्त्रेधाऽदुहत्तत्त्रिधातोस्त्रिधातुत्वं यं कामये-
तान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपे-
दिन्द्राय राज्ञे पुरोडाशम् ( १ ) एकादशक-
पालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञेऽयं वा
इन्द्रो राजाऽयमिन्द्रोऽधिराजोऽसाविन्द्रः स्वरा-

डिमानेव लोकान्त्स्वेनं भागधेयेनोपं धावति त एवास्मा अन्नं प्र यंच्छन्त्यन्नाद एव भंवति यथां वत्सेन प्रत्तां गां दुह एवमेवेमाँल्लोका- न्प्रत्तान्काममन्नाद्यं दुह उत्तानेषु कपालेष्वधि श्रयत्ययांतयामत्वाय त्रयंः पुरोडाशां भवन्ति त्रयं इमे लोका एषां लोकानामाप्त्या उत्तं- रउत्तरो ज्यायान्भवत्येवमिव हीमे लोकाः समृद्ध्यै सर्वेषामभिगमयन्नवं द्यत्यच्छम्बट्कारं व्यत्यासमन्वाहानिर्दाहाय ( २ ) ॥

( पुरोडाश त्रय. पङ्क्तिः शनिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( अथ द्वितीयाष्टके तृतीयप्रपाठके षष्ठोऽनुवाक । )

प्रजापतिरिति प्रजा—पतिः । देवेभ्यः । अन्नाद्य- मित्यंन्न—अद्यम् । व्यादिशदिति वि—आदिशत् । सः । अब्रवीत् । यत् । इमान् । लोकान् । अभीति । अतिरिच्यांता इत्यंति—रिच्यांतै । तत् । मम । असत् । इति । तत् । इमान् । लोकान् । अभि । अतीति । अरिच्यत । इन्द्रम् । राजानम् । इन्द्रम् ।

अधिराजमित्यधि–राजम् । इन्द्रम् । स्वराजानमिति स्व–राजानम् । ततः । वै । सः । इमान् । लोकान् । त्रेधा । अदुहत् । तत् । त्रिधातोरिति त्रि–धातोः । त्रिधातुत्वमिति त्रिधातु–त्वम् । यम् । कामयेत । अन्नाद इत्यन्न–अदः । स्यात् । इति । तस्मै । एतम् । त्रिधातुमिति त्रि–धातुम् । निरिति । वपेत् । इन्द्राय । राज्ञे । पुरोडाशम् ( १ ) । एकादशकपालमित्येकादश–कपालम् । इन्द्राय । अधिराजायेत्यधि–राजाय । इन्द्राय । स्वराज्ञ इति स्व–राज्ञे । अयम् । वै । इन्द्रः । राजा । अयम् । इन्द्रः । अधिराज इत्यधि–राजः । असौ । इन्द्रः । स्वराडिति स्व–राट् । इमान् । एव । लोकान् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । ते । एव । अस्मै । अन्नम् । प्रेति । यच्छन्ति । अन्नाद इत्यन्न–अदः । एव । भवति । यथा । वत्सेन । प्रत्ताम् । गाम् । दुहे । एवम् । एव । इमान् । लोकान् । प्रत्तान् । कामम् । अन्नाद्यमित्यन्न–अद्यम् । दुहे । उत्तानेष्वित्युत्–तानेषु । कपालेषु । अधीति । श्रयति । अयातयामत्वायेत्ययातयाम–त्वाय । त्रयः । पुरोडाशाः । भवन्ति । त्रयः । इमे ।

लोकाः । एषाम् । लोकानाम् । आप्त्यै । उत्तरउत्तर इत्युत्तरः–उत्तरः । ज्यायान् । भवति । एवम् । इव । हि । इमे । लोकाः । समृद्ध्या इति सम्–ऋद्ध्यै । सर्वेषाम् । अभिगमयन्नित्यभि–गमयन् । अवेति । द्यति । अछम्बट्कारमित्यछम्बट्–कारम् । व्यत्यासमिति वि–अत्यासम् । अन्विति । आह । अनिर्दाहायेत्य-निः–दाहाय ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( अथ द्वितीयकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः । )

इष्टिर्यक्ष्मगृहीतस्य पञ्चमे समुदीरिता ॥
षष्ठे त्वन्नादनशक्तिकामस्येष्टिं विधातुं प्रस्तौति—

प्रजापतिर्देवेभ्योऽन्नाद्यं व्यादिशत्सोऽब्रवीद्यदि-माँल्लोकानभ्यतिरिच्यातै तन्ममासदिति तदि-माँल्लोकानभ्यत्यरिच्यतेन्द्रꣳ राजानमिन्द्रमधि-राजमिन्द्रꣳ स्वराजानं ततो वै स इमा-ꣳल्लोकाꣳस्त्रेधाऽदुहत्तत्त्रिधातोस्त्रिधातुत्वम्, इति ।

प्रजापतिरत्तुं योग्यमन्नं देवेभ्यो विभज्य तवेदं तवेदमित्यादिशत् । तस्मादन्नं स्वीकर्तुं प्रवृत्तान्देवान्प्रत्येवमब्रवीद्यदन्नमिमाँल्लोकानभिव्याप्यातिरिक्तं भवति तन्ममास्त्विति । तद्रक्ष्यमाणमन्नमिमाँल्लोकानभिव्याप्यातिरिक्तमासीत् । क इमे लोका इत्युच्यन्ते—इन्द्रराजादिशब्दाभिधेया एवेमे लोका इन्द्रराजा-

(अन्नादनशक्तिकामस्येष्टिविधिः)

दीनां पृथिव्यादिलोकत्रयपालकत्वात्। एवमुक्त्वा स प्रजापतिरिन्द्रराजादीँल्लोकांस्त्रेधाऽदुहत्। तेभ्यो लोकेभ्यस्त्रिविधं सारं गृहीतवानित्यर्थः। तदिदं सारं प्रजापतिः स्वप्रियत्वेन स्वीकृतवाँल्लोकातिरिक्तमभवत्। यस्मात्त्रेधा दोहनमकरोत्तस्मात्त्रिधातुनाम्नो यागस्य त्रिधातुत्वं संपन्नम्। लोकेभ्यो दुग्धास्त्रयो धातवो भागा यस्मिन्यागे स यागस्त्रिधातुः॥

अथ विधत्ते—

य कामयेतान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञेऽयं वा इन्द्रो राजाऽयमिन्द्रोऽधिराजोऽसाविन्द्रः स्वराडिमानेव लोकान्त्स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति यथा वत्सेन प्रत्तां गां दुह एवमेवेमाँल्लोकान्प्रत्तान्काममन्नाद्यं दुहे, इति।

यं यजमानमुद्दिश्याध्वर्युः कामयेतायं यजमानोऽन्नादः स्यादिति तस्मै यजमानायेयमिष्टिः। अयं भूलोकाधिपतिरिन्द्रो राजा। अयमन्तरिक्षाधिपतिरिन्द्रोऽधिराजः। असौ स्वर्गलोकाधिपतिरिन्द्रः स्वराट्। इमानेव लोकाँल्लोकाधिपतीनिन्द्रराजादीन्स्वेन भागधेयेन सेवते। यथा लोके वत्सेन वत्ससमर्पणेन प्रत्तां प्रस्नवनं प्रापितां गां जनो दोग्धि, एवमेवेमाँल्लोकान्प्रत्तान्देवैरभिवर्धितान्प्राप्य स्वाभीष्टमन्नाद्यं लभते॥

अत्र यदुक्तं सूत्रकारेण—"अथैनं त्रिधातुमेकादशसूत्तानेषु कपालेष्वधिश्रयति प्रथमं पुरोडाशमधिश्रित्य परितपनान्तं कृत्वा तस्मिन्नुपरि द्वितीयं ज्यायांसमधिश्रित्य तावदन्तमेव कृत्वा तस्मिन्नुत्तरं ज्यायांसमधिश्रयति प्रचरणकाले दक्षिणार्धात्प्रथमां देवतां यजेन्मध्याद्द्वितीयामुत्तरार्धात्तृतीयां सर्वेषामभिगमयन्नवद्यति" इत्युक्तम् (ति)। "प्राच्यां दिशि त्वमिन्द्रासि तिस्र ऋचो व्यत्यासमन्वाह प्रथमामनूच्य मध्यमया यजेन्मध्यमामनूच्योत्तमया यजेदुत्तमामनूच्य प्रथमया यजेदेवं सर्वा याज्याः पुरोनुवाक्याश्च भवन्ति" इति [च]। तत्राधिश्रयणं विधत्ते—

उत्तानेषु कपालेष्वधि श्रयत्ययातयामत्वाय, इति।

प्रकृतावधोमुखानां कपालानामुपरि पुरोडाशावधिश्रयति। अत्रापि तथात्वे यातयामत्वं गतसारत्वं, तत्परिहारायोत्तानत्वम् ॥

पुरोडाशसंख्यां प्रशंसति—

त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्यै, इति ॥

ज्यायस्त्वं विधत्ते—

उत्तरउत्तरो ज्यायान्भवत्येवमिव हीमे लोकाः समृद्ध्यै, इति।

भूलोकादन्तरिक्षं ज्यायस्तस्मादपि स्वर्गो ज्यायान् ॥

ऊर्ध्वाधोभावेन स्थितानां सर्वेषां पुरोडाशानामंशमभिलक्ष्य यथा युगपदेव हस्तप्राप्तिर्भवति तथाऽवदानं विधत्ते—

सर्वेषामभिगमयन्नव द्यत्यच्छम्बट्कारम्, इति।

छम्बट्कारो वैयर्थ्यम्। एकस्यापि पुरोडाशस्य यथा वैयर्थ्यं न भवति तथेत्यर्थः ॥

याज्यानुवाक्यासु विपर्यासं विधत्ते—

व्यत्यासमन्वाहानिर्दाहाय ॥, इति ॥

अविनाशायेत्यर्थः। व्यत्यासाभावे हृचां त्रित्वाद्वयोरपि विनश्येरन्नेकै-कस्य हविषः पृथग्याज्यानुवाक्ययोः संपादयितुमशक्यत्वात्। सूत्रोक्तप्रकारेण तु व्यत्यासेन षड्चः संपद्यन्त इति नास्ति हविर्नाशः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( अथ द्वितीयाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः । )

देवासुराः संयत्ता आसन्तान्देवानसुरा अजयन्ते देवाः पराजिग्याना असुराणां वैश्यमु-

१ ख. °त्व स्यात्, त°। २ ख च. स्थापितानां। ३ ख °ति। हविरवि°।

पाऽऽयन्तेभ्य इन्द्रियं वीर्यमपाक्रामत्तदिन्द्रोऽ-
चायत्तदन्वपाक्रामत्तदवरुधं नाशक्नोत्तदस्माद-
भ्यर्धोऽचरत्स प्रजापतिमुपाधावत्तमेतया सर्व-
पृष्ठयाऽयाजयत्तयैवास्मिन्निन्द्रियं वीर्यमदधाद्य
इन्द्रियकामः ( १ ) वीर्यकामः स्यात्तमेतया
सर्वपृष्ठया याजयेदेता एव देवताः स्वेन भाग-
धेयेनोप धावति ता एवास्मिन्निन्द्रियं वीर्यं
दधति यदिन्द्राय राथंतराय निर्वपति यदे-
वाग्नेस्तेजस्तदेवाव रुन्धे यदिन्द्राय बार्हताय
यदेवेन्द्रस्य तेजस्तदेवाव रुन्धे यदिन्द्राय वैरू-
पाय यदेव सवितुस्तेजस्तत् ( २ ) एवाव
रुन्धे यदिन्द्राय वैराजाय यदेव धातुस्तेजस्तदे-
वाव रुन्धे यदिन्द्राय शाक्वराय यदेव मरुतां
तेजस्तदेवाव रुन्धे यदिन्द्राय रैवताय यदेव
बृहस्पतेस्तेजस्तदेवाव रुन्ध एतावन्ति वै तेजा-
ꣳसि तान्येवाव रुन्ध उत्तानेषु कपालेष्वधि
श्रयत्ययातयामत्वाय द्वादशकपालः पुरोडाशः
( ३ ) भवति वैश्वदेवत्वाय समन्तं पर्यवद्यति
समन्तमेवेन्द्रियं वीर्यं यजमाने दधाति व्यस्या-
समन्वाहानिर्दाहायाश्वं ऋषभो वृष्णिर्बस्तः सा

दक्षिणा वृषत्वायैतयैव यंजेताभिशस्यमान एताश्चेद्वा अस्य देवता अन्नमदन्त्यदन्त्युवेवास्य मनुष्याः ( ४ ) ॥

( इन्द्रियकामः सवितुस्तेजस्नत्पुरोडाशोऽष्टात्रिंश शच्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

( अथ द्वितीयाष्टके तृतीयप्रपाठके सप्तमोऽनुवाक । )

देवासुरा इति देव—असुराः । संयत्ता इति सं—यत्ताः । आसन् । तान् । देवान् । असुराः । अजयन् । ते । देवाः । पराजिग्याना इति परा—जिग्यानाः । असुराणाम् । वैश्यम् । उपेति । आयन् । तेभ्यः । इन्द्रियम् । वीर्यम् । अपेति । अक्रामत् । तत् । इन्द्रः । अचायत् । तत् । अनु । अपेति । अक्रामत् । तत् । अवरुधमित्यव—रुधम् । न । अशक्नोत् । तत् । अस्मात् । अभ्यर्ध इत्यभि—अर्धः । अचरत् । सः । प्रजापतिमिति प्रजा—पतिम् । उपेति । अधावत् । तम् । एतया । सर्वपृष्ठयेति सर्व—पृष्ठया । अयाजयत् । तया । एव । अस्मिन् । इन्द्रियम् । वीर्यम् । अदधात् । यः । इन्द्रियकाम इतीन्द्रिय—कामः ( १ ) । वीर्यकाम इति वीर्य—

कामः। स्यात्। तम्। एतया। सर्वपृष्ठयेति सर्व—पृष्ठया। याजयेत्। एताः। एव। देवताः। स्वेन। भागधेयेनेति भाग—धेयेन। उपेति। धावति। ताः। एव। अस्मिन्। इन्द्रियम्। वीर्यम्। दधति। यत्। इन्द्राय। राथंतरायेति राथं—तराय। निर्वपतीति निः—वपति। यत्। एव। अग्नेः। तेजः। तत्। एव। अवेति। रुन्धे। यत्। इन्द्राय। बार्हताय। यत्। एव। इन्द्रस्य। तेजः। तत्। एव। अवेति। रुन्धे। यत्। इन्द्राय। वैरूपाय। यत्। एव। सवितुः। तेजः। तत् ( २ )। एव। अवेति। रुन्धे। यत्। इन्द्राय। वैराजाय। यत्। एव। धातुः। तेजः। तत्। एव। अवेति। रुन्धे। यत्। इन्द्राय। शाक्कराय। यत्। एव। मरुताम्। तेजः। तत्। एव। अवेति। रुन्धे। यत्। इन्द्राय। रैवताय। यत्। एव। बृहस्पतेः। तेजः। तत्। एव। अवेति। रुन्धे। एतावन्ति। वै। तेजांसि। तानि। एव। अवेति। रुन्धे। उत्तानेष्विन्युत्—तानेषु। कपालेषु। अधीति। श्रयति। अयातयामत्वायेत्ययातयाम—त्वाय। द्वादशकपाल इति द्वादश—कपालः। पुरोडाशः ( ३ )। भवति। वैश्वदेवत्वायेति

वैश्वदेव—त्वाय । समन्तमिति सम्—अन्तम् । पर्य॑-वद्यतीति परि—अवद्यति । समन्तमिति सम्—अ-न्तम् । एव । इन्द्रियम् । वीर्यम् । यजमाने । दधा-ति । व्यत्यासमिति वि—अत्यासम् । अन्विति । आह । अनिर्दाहायेत्यनिः—दाहाय । अश्वः । ऋष-भः । वृष्णिः । बस्तः । सा । दक्षिणा । वृषत्वा-येति वृष—त्वाय । एतया । एव । यजेत । अभिश-स्यमान इत्यभि—शस्यमानः । एताः । च । इत् । वै । अस्य । देवताः । अन्नम् । अदन्ति । अदन्ति । उ । एव । अस्य । मनुष्याः ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ द्वितीयकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः । )

षष्ठेऽन्नादनकामस्य त्रिधातुर्याग ईरितः ॥
अथेन्द्रियसामर्थ्यं शरीरसामर्थ्यं च कामयमानस्येष्टिं विधातुं प्रस्तौति—

देवासुराः संयत्ता आसन्तान्देवानसुरा अजयन्ते देवाः पराजिग्याना असुराणां वैश्यमुपाऽऽ-यन्तेभ्य इन्द्रियं वीर्यमपाक्रामत्तदिन्द्रोऽचाय-त्तदन्वपाक्रामत्तदवरुधं नाशक्नोत्तदस्मादभ्यर्धोऽ-चरत्स प्रजापतिमुपाधावत्तमेतया सर्वपृष्ठयाऽ-याजयत्तयैवास्मिन्निन्द्रियं वीर्यमदधात् , इति ।

( इन्द्रियसामर्थ्यशरीरसामर्थ्यकामस्येष्टिविधिः )

पराजिग्यानाः पराजयं प्राप्नुवन्तो देवा असुराणां संबन्धि वैश्यं प्राप्ताः, विशो भावो वैश्यम्, असुरसेवकप्रजारूपत्वमित्यर्थः। तदानीं तेषां यदिन्द्रियसामर्थ्यं यच्छरीरसामर्थ्यं तदुभयं तेभ्यो देवेभ्योऽपाक्रामत्। इन्द्रस्तद्द्विदित्वा तत्सामर्थ्यद्वयमनु स्वयमप्यवरोद्धुमपाक्रामत्। गत्वा च तदवरोद्धुं नाशक्नोत्। तदानीमिन्द्रोऽस्मात्सामर्थ्यद्वयादभिमाप्तार्थः सञ्चरत्। तत इतरार्थप्राप्त्यर्थं प्रजापतिमुपसेव्य सर्वपृष्ठयेष्ट्या संपूर्णं प्राप्तवान्। रथंतरबृहद्वैरूपवैराजशाक्वररैवतसामसमाख्यानि सर्वाणि पृष्ठस्तोत्राणि नैर्युक्त इन्द्रोऽत्र देवता। तस्मादियमिष्टिः सर्वपृष्ठा। नात्र स्तोत्रपाठः प्रयोक्तव्यः, किं तु स्तोत्राभिज्ञत्वं देवताया विशेषणम्॥

इदानीं विधत्ते—

य इन्द्रियकामो वीर्यकामः स्यात्तमेतया सर्वपृष्ठया याजयेदेता एव देवताः स्वेन भागधेयेनोप धावति ता एवास्मिन्निन्द्रियं वीर्यं दधति, इति।

राथंतरादिगुणविशिष्टाः षडिन्द्रविशेषा एता एव देवता इत्युच्यन्ते॥

तान्देवताविशेषान्विधत्ते—

यदिन्द्राय राथंतराय निर्वपति यदेवाग्नेस्तेजस्तदेवाव रुन्धे यदिन्द्राय बार्हताय यदेवेन्द्रस्य तेजस्तदेवाव रुन्धे यदिन्द्राय वैरूपाय यदेव सवितुस्तेजस्तदेवाव रुन्धे यदिन्द्राय वैराजाय यदेव धातुस्तेजस्तदेवाव रुन्धे यदिन्द्राय शाक्वराय यदेव मरुतां तेजस्तदेवाव रुन्धे यदिन्द्राय रैवताय यदेव बृहस्पतेस्तेजस्तदेवाव रुन्ध एतावन्ति वै तेजांसि तान्येवाव रुन्धे, इति।

पृष्ठस्तोत्रनिष्पादकं रथंतरं साम वेत्तीति राथंतरः। एवं बार्हतादिषु

१ ख. °मवरुधमव°।

योज्यम् । अग्नीन्द्रादीनां रथंतरादिसामाभिमानित्वाद्राथंतरत्वादिविशेषणैस्त-दीयतेजःप्राप्तिर्भवति ॥

पूर्वोक्तत्रिधातावेव विशेषं विधत्ते—

उत्तानेषु कपालेष्वधि श्रयत्ययातयामत्वाय, इति ॥

अत्र निर्वापविधिभेदात्पुरोडाशपट्कप्राप्तेस्तदपवादायैकत्वं विधत्ते—

द्वादशकपालः पुरोडाशो भवति वैश्वदेवत्वाय, इति ।

अन्यत्र वैश्वदेवं द्वादशकपालं ग्रामकाम इत्यादिविधानात्कपालगतद्वादश-संख्या विश्वेषां देवानां प्रिया । अतोऽत्रापि यथोक्तगुणविशिष्टानां विश्वेषा-मिन्द्रादिदेवानां प्रीतिर्भवति ॥

यदुक्तं सूत्रकारेण–" सर्वपृष्ठां निर्वपति यदिन्द्राय राथंतरायेति यथासमा-म्नातं द्वादशसूत्तानेषु कपालेष्वधिश्रयति प्रचरणकाले पूर्वार्धात्प्रथमां देवतां यजत्येवमितराः प्रदक्षिणमुत्तरापवर्गं समन्तं पर्यवद्यति " इत्युक्तम्(ति) । " अभि त्वा शूर नोनुम इति षड्ऋचो व्यत्यासमन्वाहेति( ह ) कदा चन स्तरीरसीति चतुर्थं दधाति " इति च । तत्र पूर्वार्धादित्यादिनोक्तं सर्वतोऽव-दानं विधत्ते—

समन्तं पर्यवद्यति समन्तमेवेन्द्रियं
वीर्यं यजमाने दधाति , इति ।

चतुर्थप्रपाठकस्यान्त्यानुवाके समाम्नास्यमानानामभि त्वा शूर नोनुम इत्यादीनां पञ्चानामृचां चतुर्थीत्वेन प्रक्षेप्यमाणायाः कदा चन स्तरीरसीत्य-स्याश्च पूर्वोक्तत्रिधातुन्यायेनैकैकस्याः पुरोनुवाक्यात्वं याज्यात्वं च विधत्ते—

व्यत्यासमन्वाहानिर्दाहाय , इति ॥

चोदकप्राप्तमन्वाहार्यदक्षिणां बाधितुं विधत्ते—

अश्व ऋषभो वृष्णिर्बस्तः सा
दक्षिणा वृषत्वाय, इति ।

अविजातौ पुमान्वृष्णिः । अजजातौ पुमान्बस्तः । वृषत्वाय पुंस्त्वा-धिक्याय ॥

---

१ क. घ ङ च. °त्वाद्रथं° । २ ख. च °तुर्थत्वे° । ३ ख. प्रक्षिप्य° । ४ ख °जात पु° । ५ ख. जात. पु° ।

( इन्द्रियसाम(र्थ्य)शरीरसाम(र्थ्य)कामस्येष्टिविधि )

मिथ्यापवादपरिहारार्थं तामेवेष्टिं विधत्ते—

एतयैव यजेताभिशस्यमान एताश्चेद्धा अस्य देवता अन्नमदन्त्यदन्त्युवेवास्य मनुष्याः॥, इति॥

एता राथंतरेन्द्रादयो देवता अस्यान्नं पुरोडाशरूपं यद्यदन्ति तदानीं मनुष्याः सर्वथाऽप्यदन्त्येव । वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्तीत्यादौ शिष्यानुशासने शिष्यस्य मिथ्यापवादयुक्तेषु व्यवहारसंदेहे सति शिष्टाचारेण निर्णय आम्नातः—" यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः " इति । यदा मनुष्येष्वपि शिष्टानामाचारो नियामकस्तदा देवतानामाचारो नियामक इति किमु वक्तव्यमित्यभिप्रेत्यादन्त्येवेत्यवस्थापितम् ॥

अथ मीमांसा ।

तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्—

" रथंतरादिभिर्भिन्ना इन्द्रास्तेषां न भिद्यते ।
पुरोडाशस्तत्र शेषकार्यं किं भिद्यते न वा ॥
भिद्येत कर्मणां भेदाच्चोदकैः पृथगुक्तितः ।
शेषस्य सर्वतुल्यत्वात्तत्कार्यं सकृदिष्यताम् ॥ "

[य] इन्द्रियकामो वीर्यकामः स्यात्तमेतया सर्वपृष्ठया याजयेदिति विहितायामिष्टौ षडिन्द्रा एवं श्रूयन्ते—" इन्द्राय राथंतरायेन्द्राय बार्हतायेन्द्राय वैरूपायेन्द्राय वैराजायेन्द्राय शाक्वरायेन्द्राय रैवताय " इति । तत्र स्वरूपेणैकोऽपीन्द्रः पृष्ठस्तोत्रेषु षट्सु विहितानां षण्णां रथंतरादिसाम्नां संबन्धेन विशेष्यमाणः षोढा भिद्यते । तासां सर्वासामिन्द्रदेवतानामेक एव पुरोडाशो विधीयते—" द्वादशकपालः पुरोडाशो भवति वैश्वदेवत्वाय " इति । तस्मिन्पुरोडाश उक्तदेवताभ्यः पृथक्प्रदानाय बहुभ्यः प्रदेशेभ्योऽवदानं श्रूयते— " समन्तं पर्यवद्यति " इति । तत्र देवताभेदेन प्रदानभेदेन च कर्मणां भेदे सति चोदकैः पृथगतिदेशात्स्विष्टकृदिडादि शेषकार्यं षट्कृत्वः पृथक्कर्तव्यमिति चेन्मैवम् । शेषस्यैकत्वेन तत्प्रतिपत्तेः पृथक्त्वासंभवात् । तस्मात्सकृदेव कार्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

१ ख. यथा । २ ख. 'स्तथा दे' । ३ ख. च. 'दन्त्युवेवे' । ४ क घ. ङ. च. प्रधान' ।

रजनो वै कौणेयः क्रतुजितं जानकिं चक्षुर्वन्यमयात्तस्मा एतामिष्टिं निरवपदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालं तयैवास्मिञ्चक्षुरदधाद्यश्चक्षुष्कामः स्यात्तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालमग्नेर्वै चक्षुषा मनुष्या वि ( १ ) पश्यन्ति सूर्यस्य देवा अग्निं चैव सूर्यं च स्वेन भागधेयेनोप धावति तावेवास्मिञ्चक्षुर्धत्तश्चक्षुष्मानेव भवति यदाग्नेयौ भवतश्चक्षुषी एवास्मिन्तत्प्रति दधाति यत्सौर्यो नासिकां तेनाभितः सौर्यमाग्नेयौ भवतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते समानी याज्यानुवाक्ये भवतः समानꣳ हि चक्षुः समृद्ध्या उदु त्यं जातवेदसꣳ सप्त त्वा हरितो रथे चित्रं देवानामुदगादनीकमिति पिण्डान्प्र यच्छति चक्षुरेवास्मै प्र यच्छति यदेव तस्य तत् ( २ ) ॥

( वि ह्यष्टाविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

( अथ द्वितीयाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः । )

रजनः । वै । कौणेयः । क्रतुजितमिति क्रतु—जितम् । जानकिम् । चक्षुर्वन्यमिति चक्षुः—वन्यम् । अयात् । तस्मै । एताम् । इष्टिम् । निरिति । अवपत् । अग्नये । भ्राजस्वते । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । सौर्यम् । चरुम् । अग्नये । भ्राजस्वते । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । तया । एव । अस्मिन् । चक्षुः । अदधात् । यः । चक्षुष्काम इति चक्षुः—कामः । स्यात् । तस्मै । एताम् । इष्टिम् । निरिति । वपेत् । अग्नये । भ्राजस्वते । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । सौर्यम् । चरुम् । अग्नये । भ्राजस्वते । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । अग्नेः । वै । चक्षुषा । मनुष्याः । वीति (१) । पश्यन्ति । सूर्यस्य । देवाः । अग्निम् । च । एव । सूर्यम् । च । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । तौ । एव । अस्मिन् । चक्षुः । धत्तः । चक्षुष्मान् । एव । अव-

ति । यत् । आग्नेयौ । भवतः । चक्षुषी इति । एव । अस्मिन् । तत् । प्रतीति । दधाति । यत् । सौर्यः । नासिकाम् । तेन । अभितः । सौर्यम् । आग्नेयौ । भवतः । तस्मात् । अभितः । नासिकाम् । चक्षुषी इति । तस्मात् । नासिकया । चक्षुषी इति । विधृते इति वि—धृते । समानी इति । याज्यानुवाक्ये इति याज्या—अनुवाक्ये । भवतः । समानम् । हि । चक्षुः । समृद्ध्या इति सम्—ऋद्ध्यै । उदिति । उ । त्यम् । जातवेदसमिति जात—वेदसम् । सप्त । त्वा । हरितः । रथे । चित्रम् । देवानाम् । उदिति । अगात् । अनीकम् । इति । पिण्डान् । प्रेति । यच्छति । चक्षुः । एव । अस्मै । प्रेति । यच्छति । यत् । एव । तस्य । तत् ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

( अथ द्वितीयकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः । )

सप्तमे सर्वपृष्ठोक्ता वीर्यकामाभिशस्तयोः ॥
अथाष्टमे चक्षुष्कामस्य त्रिहविष्कामिष्टिं विधातुं प्रस्तौति—

रजनो वै कौणेयः क्रतुजितं जानकिं चक्षुर्वन्यमयात्तस्मा एतामिष्टिं निरवपदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं

(चक्षुष्कामस्येष्टिविधिः)

चरुमग्नये भ्राजस्वते पुरोडाशमष्टाक-
पालं तयैवास्मिञ्चक्षुरदधात्, इति।

रजननामकः कश्चित्पुरुषः क्रतुजिन्नामकं पुरुषमयान्प्राप्नोत्। रजनः कुणेरपत्यं, क्रतुजिज्जनकस्यापत्यं, स तु चक्षुर्वन्यश्चक्षुषो दृष्टेर्वननं संभजनं तदर्हतीति चक्षुर्वन्यः, रोगोपहतां दृष्टिं समाधातुं शक्त इत्यर्थः। अतो दृष्टिपाटवाय क्रतुजितं प्राप्य निर्दोषेष्टिकयेष्ट्वा तत्पाटवं प्राप्तवान्॥

विधत्ते—

यश्चक्षुष्कामः स्यात्तस्मा एतामिष्टिं निर्व-
पेदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ
सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टा-
कपालमग्नेर्वै चक्षुषा मनुष्या वि प-
श्यन्ति सूर्यस्य देवा अग्निं चैव सूर्यं
च स्वेन भागधेयेनोप धावति तावेवा-
स्मिञ्चक्षुर्धत्तश्चक्षुष्मानेव भवति, इति।

भ्राजस्वते दीप्त्याधिक्ययुक्ताय। उन्मेषनिमेषसद्भावान्मनुष्यदृष्टिरनित्या। अग्निश्च कदाचिज्ज्वलति कदाचिदुपशाम्यति[1]। तस्मादनित्यत्वसाम्यलक्षणेन मनुष्यदृष्टेरग्नेश्च संबन्धः। देवानां त्वनिमिषत्वात्सूर्यप्रकाशवन्नित्या तदीया दृष्टिरित्यस्ति तस्याः सौर्यसंबन्धः॥

आग्नेयद्वयमध्यवर्ति सौर्यं चक्षुर्द्वयमध्यवर्तिनासिकासाम्येन प्रशंसति—

यदाग्नेयौ भवतश्चक्षुषी एवास्मिन्तत्प्रति
दधाति यत्सौर्यो नासिकां तेनाभितः
सौर्यमाग्नेयौ भवतस्तस्मादभितो नासिकां
चक्षुषी तस्मान्नासिकया चक्षुषी विधृते, इति।

तेनाऽऽग्नेयद्वयेनास्मिन्यजमाने चक्षुषोः प्रतिष्ठा। तेन सौर्येण नासिकायाः प्रतिष्ठा। नासिकया चक्षुषी विधृते परस्पराभिश्रणाभावाय विविधत्वेन स्थापिते। अत्राऽऽग्नेयस्य प्रथमस्योद्देशे शुचयस्तव शुक्रा इति पुरोनुवाक्या, त्रि ज्योतिषा बृहता भात्यग्निरिति याज्या॥

---

1 क. ख. घ. ङ. च. °म्यतीति।

चरमस्य मन्त्रान्तरशङ्कां वारयितुं विधत्ते—

समानी याज्यानुवाक्ये भवतः समा-
न॑ꣳ हि चक्षुः समृद्ध्यै , इति।

समानी एकविधे ॥

यदुक्तं सूत्रकारेण—" चतुर्धाकरणकाले सौर्यात्रीन्पिण्डानुद्धृत्योदु त्यं जातवेदस॰ सप्त त्वा हरितो रथे चित्रं देवानामुदगादनीकमिति पिण्डान्यजमानाय प्रयच्छति तान्यजमानः प्राश्नाति " इति, तत्र त्रिभिर्मन्त्रैः पिण्डदानं विधत्ते—

उदु त्यं जातवेदस॑ꣳ सप्त त्वा हरितो
रथे चित्रं देवानामुदगादनीकमिति
पिण्डान्प्र यच्छति चक्षुरेवास्मै प्र
यच्छति यदेव तस्य तत् ॥, इति ॥

उदु त्यं चित्रं देवानामित्येतदुभयं प्रथमकाण्डस्य चतुर्थप्रपाठके व्याख्यातम्। सप्त त्वा हरित इत्येषा तूपरितनस्य प्रपाठकस्यान्त्यानुवाके समाम्नास्यमानत्वात्तत्रैव व्याख्यास्यते। तस्य यजमानस्य रोगोत्पत्तेः पुरा यदेव चक्षुः पाटवोपेतमासीत्तत्पिण्डदानेन दत्तमेव भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठकेऽ-
ष्टमोऽनुवाकः ॥ ८ ॥

( अथ द्वितीयाष्टके तृतीयप्रपाठके नवमोऽनुवाकः । )

---

ध्रुवोऽसि ध्रुवोऽह॑ꣳ संजातेषु भूयासं धीर-
श्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽह॑ꣳ संजातेषु भूया-
समुग्रश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽह॑ꣳ संजातेषु
भूयासमभिभूश्चेत्ता वसुविदामनमस्यामनस्य
देवा ये संजाताः कुमाराः समनसस्तानहं

कामये हृदा ते मां कामयन्ताꣳ हृदा तान्म
आमनसः कृधि स्वाहाऽऽमनमसि ( १ )
आमनस्य देवा याः स्त्रियः समनसस्ता अहं
कामये हृदा ता मां कामयन्ताꣳ हृदा ता म
आमनसः कृधि स्वाहा वैश्वदेवीꣳ सांग्रहणीं
निर्वपेद्ग्रामकामो वैश्वदेवा वै सजाता विश्वा-
नेव देवान्त्स्वेन भागधेयेनोप धावति त
एवास्मै सजातान्प्र यच्छन्ति ग्राम्येव भवति
सांग्रहणी भवति मनोग्रहणं वै संग्रहणं मनं
एव सजातानाम् ( २ ) गृह्णाति ध्रुवोऽसि
ध्रुवोऽहꣳ सजातेषु भूयासमिति परिधीन्परि
दधात्याशिषमेवैतामा शास्तेऽथो एतदेव
सर्वꣳ सजातेष्वधि भवति यस्यैवं विदुष एते
परिधयः परिधीयन्त आमनमस्यामनस्य देवा
इति तिस्र आहुतीर्जुहोत्येतावन्तो वै सजाता
ये महान्तो ये क्षुल्लका याः स्त्रियस्तानेवाव
रुन्धे त एनमवरुद्धा उप तिष्ठन्ते ( ३ ) ॥

( स्वाहाऽऽमनमसि सजातानाꣳ रुन्धे पञ्च च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति स—जातेषु । भूयासम् । धीरः । चेत्ता । वसुविदिति वसु—वित् । ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति स—जातेषु । भूयासम् । उग्रः । चेत्ता । वसुविदिति वसु—वित् । ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति स—जातेषु । भूयासम् । अभिभूरित्यभि—भूः । चेत्ता । वसुविदिति वसु—वित् । आमनमित्या—मनम् । असि । आमनस्येत्या—मनस्य । देवाः । ये । सजाता इति स—जाताः । कुमाराः । समनस इति स—मनसः । तान् । अहम् । कामये । हृदा । ते । माम् । कामयन्ताम् । हृदा । तान् । मे । आमनस इत्या—मनसः । कृधि । स्वाहा । आमनमित्या—मनम् । असि ( १ ) । आमनस्येत्या—मनस्य । देवाः । याः । स्त्रियः । समनस इति स—मनसः । ताः । अहम् । कामये । हृदा । ताः । माम् । कामयन्ताम् । हृदा । ताः । मे । आमनस इत्या—मनसः । कृधि । स्वाहा । वैश्वदेवीमिति वैश्व—देवीम् । सांग्रहणीमिति सां—ग्रहणीम् । निरिति ।

वपेत् । ग्रामकाम इति ग्राम—कामः । वैश्वदेवा इति वैश्व—देवाः । वै । सजाता इति स—जाताः । विश्वान् । एव । देवान् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । ते । एव । अस्मै । सजातानिति स—जातान् । प्रेति । यच्छन्ति । ग्रामी । एव । भवति । सांग्रहणीति सां—ग्रहणी । भवति । मनोग्रहणमिति मनः—ग्रहणम् । वै । संग्रहणमिति सं—ग्रहणम् । मनः । एव । सजातानामिति स—जातानाम् (२) । गृह्णाति । ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति स—जातेषु । भूयासम् । इति । परिधीनिति परि—धीन् । परीति । दधाति । आशिषमित्या—शिषम् । एव । एताम् । एति । शास्ते । अथो इति । एतत् । एव । सर्वम् । सजातेष्विति स—जातेषु । अधीति । भवति । यस्य । एवम् । विदुषः । एते । परिधय इति परि—धयः । परिधीयन्त इति परि—धीयन्ते । आमनमित्या—मनम् । असि । आमनस्येत्या—मनस्य । देवाः । इति । तिस्रः । आहुतीरित्या—हुतीः । जुहोति । एतावन्तः । वै । सजाता इति स—जाताः । ये । महान्तः । ये । क्षुल्लकाः । याः । स्त्रियः । तान् ।

एव । अवेति । रुन्धे । ते । एनम् । अवरुद्धा इत्यव—रुद्धाः । उपेति । तिष्ठन्ते ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( अथ द्वितीयकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः । )

अष्टमे दृष्टिकामस्य त्रिहविष्केष्टिरीरिता ॥
अथ नवमे सांग्रहणीष्टि विधास्यन्नादौ चोदकप्राप्तान्गन्धर्वोऽसि विश्वावसुरित्यादिकान्परिधिमन्त्रानपवदितुं मन्त्रान्तराणि दर्शयति—

ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासं धीरश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमभिभूश्चेत्ता वसुवित् , इति ।

हे मध्यमपरिधे त्वं स्थिरोऽसि त्वदीयस्थापनेनाहमपि ज्ञातिषु मध्ये स्थिरो भूयासम् । किंच, धैर्यवानभिज्ञो धनवांश्च भूयासम् । एवं दक्षिणोत्तरपरिधिमन्त्रयोर्व्याख्या । ज्ञातीनां प्रतिवादित्वराहित्यायाऽऽज्ञाधारित्वमुग्रत्वम् । आज्ञामुल्लङ्घ्य प्रतिवादिनस्तिरस्कृत्त्वमभिभूत्वम् ॥
परिधिमन्त्रानाम्नायोपहोममन्त्रान्पठति—

आमनमस्यामनस्य देवा ये सजाताः कुमाराः समनसस्तानहं कामये हृदा ते मां कामयन्ताꣳ हृदा तान्म आमनसः कृधि स्वाहाऽऽमनमस्यामनस्य देवा याः स्त्रियः समनसस्ता अहं कामये हृदा, ता मां कामयन्ताꣳ हृदा ता म आमनसः कृधि स्वाहा , इति ।

१ क. घ ङ. °धारत्व° । २ ख. °रस्कर्तृत्वम° ।

अत्र सजाताः कुमारा इति पदभेदमवलम्ब्यावशिष्टानुषङ्गेण मन्त्रद्वयं द्रष्टव्यम्। सजातानाकामयितुं मनुत इत्यामनम्। हे हूयमानाज्य त्वं तादृशमसि। अत आमनस्य सजातानाकामयितुं मन्वानस्य यजमानस्य ये सजाता ज्ञातिप्रभृतयः समनसः समनस्का अनुकूलाः सन्ति हे देवास्तान्सजातानहं हृदा चित्तेन कामये। ते च मां हृदा कामयन्ताम्। तान्सजातान्मे मदर्थमामनसो मामाकामयितुं मन्वानान्कुरु। इदमाज्यं स्वाहुतम्। एवं कुमारमन्त्रस्त्रीमन्त्रौ व्याख्येयौ॥

इदानीमिष्टिं विधत्ते—

वैश्वदेवीः सांग्रहणीं निर्वपेद्ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै सजातान्प्र यच्छन्ति ग्राम्येव भवति, इति।

मनसा परस्परमेकमत्येन सम्यक्स्वीकारः संग्रहणम्। तद्यस्यामिष्टावस्ति सा सांग्रहणी॥

तदेतदभिप्रेत्येष्टिविशेषणं प्रशंसति—

सांग्रहणी भवति मनोग्रहणं वै संग्रहणं मन एव सजातानां गृह्णाति, इति।

ज्ञातिमनसः स्वाधीनत्वेन ग्रहणं मनोग्रहणं, तदेव सम्यग्ग्रहणमित्युच्यते। ततः सांग्रहण्येष्ट्या सजातानां मनः स्वाधीनं करोति॥

आदावाम्नातान्मन्त्रान्विनियुङ्क्ते—

ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमिति परिधीन्परि दधात्याशिषमेवैतामा शास्तेऽथो एतदेव सर्वꣳ सजातेष्वधि भवति यस्यैवं विदुष एते परिधयः परिधीयन्ते, इति।

त्रिष्वपि मन्त्रेषु भूयासमित्यभिधानादाशासनं गम्यते। किं चैवं विदुषस्तैर्मन्त्रैः परिधाने सति सजातेषु मध्ये मन्त्रैः प्रार्थितं सर्वमधिकं संपद्यते॥

मन्त्रान्तराणि विनियुङ्क्ते—

आमनमस्यामनस्य देवा इति तिस्र आहु-

१ क घ ङ च 'कारयि'। २ ख. च. हे आमन हू'। ३ क. घ. ङ. च 'कारयि'।
१ च 'सो मत्कार्यार्थं कारयि'।

तीर्जुहोत्येतावन्तो वै सजाता ये महान्तो ये क्षुल्लका याः स्त्रियस्तानेवाव रुन्धे त एनमवरुद्धा उप तिष्ठन्ते ॥, इति ॥

अत्र सजाता ईत्यन्ते मन्त्रभागे समनस इत्याद्युक्तभागोऽनुषञ्जनीयः। कुमारा इत्यादिके मन्त्रभाग आमनमसीत्यादिमन्त्रेपूर्वभागोऽनुषञ्जनीयः। तथा सति त्रिभिर्मन्त्रैराहुतित्रयं संपद्यते। स्वकुले स्वजातिषु मध्ये स्वग्रामे च ये महान्तः पुरुषाः प्रौढा ये च क्षुल्लका बाला याश्च पत्नीभगिनीमात्रादयः स्त्रिय एतावन्त एवापेक्षिताः सजातास्ताननयेष्ट्या स्वाधीनान्करोति। ते च जनाः स्वाधीना एव सन्त एनं सेवन्ते ॥

अत्र विनियोगसंग्रहः—

" सांग्रहण्यां तु परिधीन्परिधत्ते ध्रुवस्त्रयात्।
आमनेति त्रिभिस्तत्र उपहोमास्त्रयो मताः॥
मन्त्रभेदः सजातेति कुमारेति पदद्वयात्" ॥ १ ॥

अत्र मीमांसा।

दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

" आमनाहुतिभिर्बाध्या अनूयाजा न वाऽग्रिमः।
त्रित्वलिङ्गादिशिष्टोक्तेर्भेदो मध्योक्तितोऽन्तिमः" इति ॥

सांग्रहणीष्टौ श्रूयते—आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति" इति। एताभिस्तिसृभिराहुतिभिः प्राकृतास्त्रयोऽनूयाजा बाध्याः। कुतः, त्रित्वलिङ्गात्। पूर्वाधिकरणे सप्तदशसंख्याविशिष्टप्राकृतपश्वभावेन मा भूद्बाध्यत्वम्। इह तु त्रित्वविशिष्टत्वादनूयाजा बाध्यन्ताम्। यद्वा तदनुवादेन मन्त्रगुणविधानात्प्राकृतमन्त्रबाध इति पूर्वः पक्षः। किं त्रित्वमात्रमनूद्य मन्त्रसहिता आहुतयो विधीयन्ते, आहोस्वित्रित्वविशिष्टा आहुतीरनूद्य मन्त्रविधिः। आद्ये त्रित्वमग्न्यादिष्वपि सत्त्वेन नानूयाजलिङ्गम्। द्वितीये विशेषणविशेष्ययोरुद्देश्ययोर्भेदेन वाक्यं भिद्येत। तस्मात्कर्मान्तरविधानान्न बाधः, किं तु समुच्चयः। तत्र मध्योक्तिर्लिङ्गम्। तथाचाऽऽम्नायते—" यत्प्रयाजानूयाजानां पुरस्ताद्वोपरिष्टाद्वा जुहुयाद्बहिरात्मन्सजातानादधीताथ यन्मध्यतो जुहोति

१ क घ ङ. च. इत्यादिके। २ क. घ. ङ. °न्त्रभा°। ३ ख °त्वस्य गार्हपत्यादि°।

(आयुष्कामेष्टिमन्त्रा)

मध्यत एव सजातानात्मन्धत्ते" इति । तस्मादामनहोमानामनूयाजैः सह समुच्चयः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके नवमोऽनुवाक. ॥ ९ ॥

(अथ द्वितीयाष्टके तृतीयप्रपाठके दशमोऽनुवाक

यन्नवमैत्तन्नवनीतमभवद्यदसर्पत्तत्सर्पिरभव-
द्यदध्रियत तद्घृतमभवदश्विनोः प्राणोऽसि
तस्य ते दत्तां ययोः प्राणोऽसि स्वाहेन्द्रस्य
प्राणोऽसि तस्य ते ददातु यस्य प्राणोऽसि
स्वाहा मित्रावरुणयोः प्राणोऽसि तस्य ते दत्तां
ययोः प्राणोऽसि स्वाहा विश्वेषां देवानां
प्राणोऽसि (१) तस्य ते ददतु येषां प्राणोऽ-
सि स्वाहा घृतस्य धाराममृतस्य पन्थामि-
न्द्रेण दत्तां प्रयतां मरुद्भिः । तत्त्वा विष्णुः
पर्यपश्यत्तत्त्वेडा गव्यैरयत् । पावमानेन त्वा
स्तोमेन गायत्रस्य वर्तन्योपांशोर्वीर्येण देव-
स्त्वा सवितोत्सृजतु जीवातवे जीवनस्यायै
बृहद्रथंतरयोस्त्वा स्तोमेन त्रिष्टुभो वर्तन्या
शुक्रस्य वीर्येण देवस्त्वा सवितोत् (२) सृजतु
जीवातवे जीवनस्यायां अग्नेस्त्वा मात्रया जग-

त्यै वर्तन्याऽऽग्रयणस्य वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्याया इममग्न आयुषे वर्चसे कृधि प्रियꣳ रेतो वरुण सोम राजन् । मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथाऽसत् । अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि सोम आयुष्मान्त्स ओषधीभिर्यज्ञ आयुष्मान्त्स दक्षिणाभिर्ब्रह्माऽऽयुष्मत्तद्ब्राह्मणैरायुष्मद्देवा आयुष्मन्तस्तेऽमृतेन पितर आयुष्मन्तस्ते स्वधयाऽऽयुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ( ३ ) ॥

( विश्वेषां देवानां प्राणोऽसि त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितोत्सोम आयुष्मान्पञ्चविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ द्वितीयाष्टके तृतीयप्रपाठके दशमोऽनुवाकः । )

यत् । नवम् । ऐत् । तत् । नवनीतमिति नव—नीतम् । अभवत् । यत् । असर्पत् । तत् । सर्पिः । अभवत् । यत् । अध्रियत । तत् । घृतम् । अभवत् । अश्विनोः । प्राण इति प्र—अनः । असि ।

तस्यं। ते। दत्ताम्। ययोः। प्राण इति प्र—अनः। असि। स्वाहा। इन्द्रस्य। प्राण इति प्र—अनः। असि। तस्यं। ते। ददातु। यस्यं। प्राण इति प्र—अनः। असि। स्वाहा। मित्रावरुणयोरिति मित्रा—वरुणयोः। प्राण इति प्र—अनः। असि। तस्यं। ते। दत्ताम्। ययोः। प्राण इति प्र—अनः। असि। स्वाहा। विश्वेषाम्। देवानाम्। प्राण इति प्र—अनः। असि (१)। तस्यं। ते। ददतु। येषाम्। प्राण इति प्र—अनः। असि। स्वाहा। घृतस्यं। धाराम्। अमृतस्य। पन्थाम्। इन्द्रेण। दत्ताम्। प्रयतामिति प्र—यताम्। मरुद्भिरिति मरुत्—भिः। तत्। त्वा। विष्णुः। परीति। अपश्यत्। तत्। त्वा। इडा। गवि। ऐरयत्। पावमानेन। त्वा। स्तोमेन। गायत्रस्य। वर्तन्या। उपांशोरित्युप—अंशोः। वीर्येण। देवः। त्वा। सविता। उदिति। सृजतु। जीवातवे। जीवनस्यायै। बृहद्रथंतरयोरिति बृहत्—रथंतरयोः। त्वा। स्तोमेन। त्रिष्टुभः। वर्तन्या। शुक्रस्यं। वीर्येण। देवः। त्वा। सविता। उदिति (२)। सृजतु। जीवातवे। जीवनस्यायै। अग्नेः। त्वा। मात्रया। जगत्यै। वर्तन्या। आग्रय-

णस्यं । वीर्येण । देवः । त्वा । सविता । उदिति । सृजतु । जीवातंवे । जीवनस्याये । इमम् । अग्ने । आयुंषे । वर्चसे । कृधि । प्रियम् । रेतः । वरुण । सोम । राजन् । माता । इव । अस्मै । अदिते । शर्मं । यच्छ । विश्वें । देवाः । जरंदष्टिरिति जरंत्–अष्टिः । यथा । असंत् । अग्निः । आयुंष्मान् । सः । वनस्पतिभिरिति वनस्पति–भिः । आयुंष्मान् । तेनं । त्वा । आयुंषा । आयुंष्मन्तम् । करोमि । सोमः । आयुंष्मान् । सः । ओषधीभिरित्योषंधि–भिः । यज्ञः । आयुंष्मान् । सः । दक्षिणाभिः । ब्रह्म । आयुंष्मत् । तत् । ब्राह्मणैः । आयुंष्मत् । देवाः । आयुंष्मन्तः । ते । अमृतेन । पितरः । आयुंष्मन्तः । ते । स्वधयेति स्व–धया । आयुं-ष्मन्तः । तेनं । त्वा । आयुंषा । आयुंष्मन्तम् । करोमि ( ३ )॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ द्वितीयकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः । )

इष्टिः सांग्रहणी प्रोक्ता नवमे ग्रामकामिनः(णः) ॥

( आयुष्कामेष्टिमन्त्राः )

अथ व्यवहितेनैकादशानुवाकेनाऽऽयुष्कामेष्टिं विधित्सुर्दशमे तन्मन्त्रान्पठति ।

कल्पः—" यन्नवमैत्तन्नवनीतमभवदित्याज्यमवेक्ष्य " इति ।

अनेन प्राकृत आज्यमसीत्यवेक्षणमन्त्रो बाधितः ।

पाठस्तु—

यन्नवमैत्तन्नवनीतमभवद्यदसर्पत्तत्सर्पिरभवद्यदध्रियत तद्घृतमभवत्, इति ।

यद्यस्मात्कारणादत्र उद्ध्रियमाणं सन्नवमन्नवं नूतनं रूपमभवत्तस्मान्नवं च तन्नीतं चेत्युद्धृतस्य सारपिण्डस्य नवनीतमिति नाम संपन्नम् । यद्यस्मात्कारणादग्निसंपर्के सति पिण्डो विलीयमानोऽसर्पत्प्रसृतोऽभवत्तस्मात्सर्पिरिति नाम । यस्मात्प्रसृतस्य शीतलपात्रस्थापनेन तत्पुनरध्रियत तद्घनीभूतमभवत्तस्माद्घृतमिति नाम । धृ क्षरणदीप्त्योरिति धातोर्निष्पन्नं किं तु घृतमित्यत्र धकारस्य घकारादेशः ॥

कल्पः—" उपहोमकालेऽश्विनोः प्राणोऽसीत्येतैः प्रतिमन्त्रं चतुर उपहोमाञ्जुहोति " इति ।

पाठस्तु—

अश्विनोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि स्वाहेन्द्रस्य प्राणोऽसि तस्य ते ददातु यस्य प्राणोऽसि स्वाहा मित्रावरुणयोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि स्वाहा विश्वेषां देवानां प्राणोऽसि तस्य ते ददतु येषां प्राणोऽसि स्वाहा, इति ।

हे यजमान त्वमश्विनोः प्राणोऽसि प्राणवत्प्रियोऽसि, तस्माद्ययोः प्राणोऽसि तावश्विनौ तस्य ते प्रियस्य तवाऽऽयुर्हेतुभूतं प्राणं दत्ताम् । प्राणमित्येतत्सामर्थ्याल्लभ्यते । तयोरश्विनोरिदमाज्यं स्वाहुतमस्तु । एवमुत्तरेषु योज्यम् ॥

कल्पः—" यत्खादिर आज्यं तदग्रेणाऽऽहवनीयं पर्याहृत्य[3] तेन दक्षि-

---

१ ख. च. °त च नवनीत तेन चोद्धृ° । २ ख °तोऽभवत्त° । ३ ख. घ. °त्य द° ।

णस्यां वेदिश्रोण्यामासादयति तद्यजमानोऽवेक्षते घृतस्य धाराममृतस्य पन्थामिति " इति ।

पाठस्तु—

घृतस्य धाराममृतस्य पन्थामिन्द्रेण
दत्तां प्रयतां मरुद्भिः । तत्त्वा विष्णुः
पर्यपश्यत्तत्त्वेडा गव्यैरयत् ।, इति ।

घृतस्य धारामवेक्षेतेत्यध्याहारः । कीदृशीं धाराम् । अमृतस्य पन्थां कर्मफलस्य साधनत्वेन मार्गभूताम्, इन्द्रेण वृष्टितृणोत्पन्न्यादिपरम्परया दत्तां संपादिताम्, मरुद्भिर्वैश्याधिपैः प्रयतां *क्रयणभाण्डेषु प्रयत्नेन धृताम् । हे घृत तत्त्वा तथाविधं त्वां विष्णुसदृशो यजमानः पर्यपश्यत्परिपश्यति । इडा पश्वभिमानिनी देवता तादृशं त्वां गव्यैरयत्प्रेरयति गोषु स्थापयति ॥

कल्पः—" अथास्य ब्रह्मा दक्षिणं हस्तं गृह्णाति ब्रह्मणे इतरे ऋत्विजो हस्तमन्वारभ्य यजमानं पर्याहुः पावमानेन त्वा स्तोमेनेति " इति ।

पाठस्तु—

पावमानेन त्वा स्तोमेन गायत्रस्य वर्तन्यो-
पाꣳशोर्वीर्येण देवस्त्वा सवितोत्सृजतु जीवा-
तवे जीवनस्यायै बृहद्रथंतरयोस्त्वा स्तोमेन
त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवि-
तोत्सृजतु जीवातवे जीवनस्याया अग्नेस्त्वा
मात्रया जगत्यै वर्तन्याऽऽग्रयणस्य वीर्येण देव-
स्त्वा सवितोत्सृजतु जीवातवे जीवनस्यायै, इति ।

हे यजमान त्वां सविता देव उत्सृजतु दीर्घरोगान्मोचयतु । केन साधनेन । बहिष्पवमानादीनां संबन्धिना त्रिवृदादिस्तोमसाध्येन स्तोत्रेण, गायत्रस्य वर्तन्या गायत्रच्छन्दसो यो मार्गस्तेन सोमाहरणरूपेण यज्ञाङ्गसंपादनेन, उपांशोर्वीर्येणोपांशुग्रहहोमसाध्यसामर्थ्येन । अत्र प्रतिसाधनं वाक्यभेदेनान्वेतुं

* विक्रयाय भाण्डेषु सचितामिति ख पुस्तकस्थ पाठान्तरम् ।

१ क घ च. 'श्रोण्या सा' । २ ङ. 'ण क्' । ३ च 'तर महर्त्विजो । ४ क. घ. 'रमहर्त्विजो ।

त्वेतिशब्दस्य पुनरुक्तिः। किमर्थमुत्सृजत्विति तदुच्यते। जीवातवे जीवनहेत्वौषधादिसंपादनाय। तदपि किमर्थमिति तदुच्यते। जीवनस्यायै चिरं जीवितुमिच्छा जीवनस्या तदर्थम्। एवं द्वितीयतृतीयमन्त्रौ योजनीयौ। अग्नेर्मात्रया मीयतेऽग्निर्यया गीत्या सा गीतिर्मात्रा यज्ञायज्ञियस्य गानमित्यर्थः॥

कल्पः—"अथ यजमानो हिरण्याद्घृतं निष्पिबतीममग्न आयुषे वर्चसे कृधीति प्राश्नन्तमभिमन्त्रयते" इति।

पाठस्तु—

इममग्न आयुषे वर्चसे कृधि प्रियꣳ रेतो वरुण सोम राजन्। मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथाऽसत्।, इति।

हेऽग्न इमं यजमानं दीर्घायुषे बलाय च कृधि समर्थं कुरु। हे वरुण हे सोम राजन्नस्य यजमानस्य प्रियं रेतः पुत्रोत्पादकं संपादय। हेऽदिते पृथिवि मातृवदस्मै सुखं प्रयच्छ। विश्वे देवा अयं यजमानो यथा जरदष्टिरसत्तथा कुर्वन्तु। जराया अष्टिर्व्याप्तिर्यस्यासौ जरदष्टिः। बाल्ये यौवने च मरणरहितो जरामायुःसंपूर्तिपर्यन्तां यथा व्याप्नोति तथा कुर्वन्त्वित्यर्थः॥

कल्पः—"अग्निरायुष्मानित्यनुवाकशेषेणास्याध्वर्युर्दक्षिणं हस्तं गृह्णाति" इति।

पाठस्तु—

अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि सोम आयुष्मान्त्स ओषधीभिर्यज्ञ आयुष्मान्त्स दक्षिणाभिर्ब्रह्माऽऽयुष्मत्तद्ब्राह्मणैरायुष्मद्देवा आयुष्मन्तस्तेऽमृतेन पितर आयुष्मन्तस्ते स्वधयाऽऽयुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥, इति॥

अग्निरायुष्मान्भवति। तत्कथमिति तदुच्यते, सोऽग्निर्वनस्पतिभिरायुष्मान्काष्ठेषु प्रक्षिप्यमाणेषु ज्वालापरम्परया वर्धते न तूपशाम्यति। तेनाग्नेरायुषाऽभिवर्धमानेन त्वामायुष्मन्तं करोमि। एवमुत्तरत्र योज्यम्। सोमः सोमरस ओषधीष्वभिपूयमाणासु वर्धते। यज्ञो दक्षिणाभिर्वशीकृतेष्वृत्विक्षु वर्धते। वेदश्च ब्राह्मणेष्वध्यापकेषु अविच्छेदेन वर्धते। देवाश्च हवीरूपेणामृतेन जीव-

न्ति । पितरश्च स्वधाकारपूर्वकेण पिण्डादिना जीवन्ति । प्रतिवाक्यमनुषङ्गद्योतनाय तेन त्वाऽऽयुषेति पुनः पठ्यते ॥

अत्र विनियोगसंग्रहः—

" ज्योगामयाविनस्त्विष्टौ यन्नवेत्याज्यमीक्षते ।
अश्विनोरुपहोमाः स्युर्वैल स्वाम्याज्यमीक्षते ॥ १ ॥
स्पृष्ट्वर्त्विजो ब्रह्महस्तं पानेति स्वामिनं जगुः ।
इमं घृतं पिबन्तं तु स्वामिनं मन्त्रयेत हि ॥ २ ॥
अग्निः सोमश्च यज्ञश्च ब्रह्म देवाः पितेति षट् ।
यथोचितानुपङ्क्तैर्गृह्णीते स्वामिहस्तकम् ।
दशमे त्वनुवाकेऽस्मिन्मन्त्राः षोडश वर्णिताः ॥ ३ ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ द्वितीयकाण्डे तृतीयप्रपाठक एकादशोऽनुवाकः । )

अग्निं वा एतस्य शरीरं गच्छति सोमꣳ रसो वरुण एनं वरुणपाशेन गृह्णाति सरस्वतीं वागग्नाविष्णू आत्मा यस्य ज्योगामयति यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालꣳ सौम्यं चरुं वारुणं दशकपालꣳ सारस्वतं चरुमाग्नावैष्णवमेकादशकपालमग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसम् ( १ ) वारुणेनैवैनं वरुणपाशान्मुञ्चति सारस्वतेन

पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठ-त्यथो खलु यावतीः समा एष्यन्मन्येत ताव-न्मानꣳ स्यात्समृद्धचा इममग्न आयुषे वर्चसे कृधीत्याहाऽऽयुरेवास्मिन्वर्चो दधाति विश्वे देवा जरदष्टिर्यथाऽसदित्याह जरदष्टिमेवैनं करो-त्यग्निरायुष्मानिति हस्तं गृह्णात्येते वै देवा आयुष्मन्तस्त एवास्मिन्नायुर्दधति सर्वमायु-रेति ( ५ ) ॥

( रसं देवानाꣳ स्तोमेनेति हिरण्यादसदिति द्वाविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

( अथ द्वितीयाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः । )

अग्निम् । वै । एतस्य । शरीरम् । गच्छति । सोमम् । रसः । वरुणः । एनम् । वरुणपाशेनेति वरुण—पाशेन । गृह्णाति । सरस्वतीम् । वाक् । अग्नाविष्णू इत्यग्ना—विष्णू । आत्मा । यस्य । ज्योक् । आमयति । यः । ज्योगामयावीति ज्योक्— आमयावी । स्यात् । यः । वा । कामयेत । सर्वम् । आयुः । इयाम् । इति । तस्मै । एताम् । इष्टिम् ।

निरिति। वपेत्। आग्नेयम्। अष्टाकपालमित्यष्टा—कपालम्। सौम्यम्। चरुम्। वारुणम्। दशकपालमिति दश—कपालम्। सारस्वतम्। चरुम्। आग्नावैष्णवमित्याग्ना—वैष्णवम्। एकादशकपालमित्येकादश—कपालम्। अग्नेः। एव। अस्य। शरीरम्। निष्क्रीणातीति निः—क्रीणाति। सोमात्। रसम् (१)। वारुणेन। एव। एनम्। वरुणपाशादिति वरुण—पाशात्। मुञ्चति। सारस्वतेन। वाचम्। दधाति। अग्निः। सर्वाः। देवताः। विष्णुः। यज्ञः। देवताभिः। च। एव। एनम्। यज्ञेन। च। भिषज्यति। उत। यदि। इतासुरितीत—असुः। भवति। जीवति। एव। यत्। नवम्। एत्। तत्। नवनीतमिति नव—नीतम्। अभवत्। इति। आज्यम्। अवेति। ईक्षते। रूपम्। एव। अस्य। एतत्। महिमानम्। व्याचष्ट इति वि—आचष्टे। अश्विनोः। प्राण इति प्र—अनः। असि। इति। आह। अश्विनौ। वै। देवानाम् (२)। भिषजौ। ताभ्याम्। एव। अस्मै। भेषजम्। करोति। इन्द्रस्य। प्राण इति प्र—अनः। असि। इति। आह। इन्द्रियम्। एव। अस्मिन्। एतेन। दधाति। मित्रा-

वरुणयोरिति मित्रा—वरुणयोः । प्राण इति प्र—अनः । असि । इति । आह । प्राणापानाविति प्राण—अपानौ । एव । अस्मिन् । एतेन । दधाति । विश्वेषाम् । देवानाम् । प्राण इति प्र—अनः । असि । इति । आह । वीर्यम् । एव । अस्मिन् । एतेन । दधाति । घृतस्य । धाराम् । अमृतस्य । पन्थाम् । इति । आह । यथायजुरिति यथा—यजुः । एव । एतत् । पावमानेन । त्वा । स्तोमेन । इति ( ३ ) । आह । प्राणमिति प्र—अनम् । एव । अस्मिन् । एतेन । दधाति । बृहद्रथंतरयोरिति बृहत्—रथंतरयोः । त्वा । स्तोमेन । इति । आह । ओजः । एव । अस्मिन् । एतेन । दधाति । अग्नेः । त्वा । मात्रया । इति । आह । आत्मानम् । एव । अस्मिन् । एतेन । दधाति । ऋत्विजः । परीति । आहुः । यावन्तः । एव । ऋत्विजः । ते । एनम् । भिषज्यन्ति । ब्रह्मणः । हस्तम् । अन्वारभ्येत्यनु—आरभ्य । परीति । आहुः । एकधेत्येक—धा । एव । यजमाने । आयुः । दधाति । यत् । एव । तस्य । तत् । हिरण्यात् (४) । घृतम् । निरिति । पिबति । आयुः । वै । घृतम् । अमृतम् ।

हिरण्यम्। अमृतात्। एव। आयुः। निरिति। पिबति। शतमानमिति शत—मानम्। भवति। शतायुरिति शत—आयुः। पुरुषः। शतेन्द्रिय इति शत—इन्द्रियः। आयुषि। एव। इन्द्रिये। प्रतीति। तिष्ठति। अथो इति। खलु। यावतीः। समाः। एष्यन्। मन्येत। तावन्मानमिति तावत्—मानम्। स्यात्। समृद्ध्या इति सम्—ऋद्ध्यै। इमम्। अग्ने। आयुषे। वर्चसे। कृधि। इति। आह। आयुः। एव। अस्मिन्। वर्चः। दधाति। विश्वे। देवाः। जरदष्टिरिति जरत्—अष्टिः। यथा। असत्। इति। आह। जरदष्टिमिति जरत्—अष्टिम्। एव। एनम्। करोति। अग्निः। आयुष्मान्। इति। हस्तम्। गृह्णाति। एते। वै। देवाः। आयुष्मन्तः। ते। एव। अस्मिन्। आयुः। दधति। सर्वम्। आयुः। एति (९)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः॥ ११॥

( अथ द्वितीयकाण्डे तृतीयप्रपाठक एकादशोऽनुवाकः। )

---

इष्टेर्विधास्यमानाया दशमे मन्त्र ईरितः॥

अथैकादशे तामिष्टिं विधातुं प्रस्तौति—

आग्निं वा एतस्य शरीरं गच्छति सोमꣳ रसो वरुण एनं वरुणपाशेन गृह्णाति सरस्वतीं वागग्नाविष्णू आत्मा यस्य ज्योगामयति , इति ।

यं दीर्घव्याधिः पीडयति एतस्य शरीरमग्निं प्रविशति, मांसभक्षणेन कृशत्वात् । सोमेन रसस्वीकाराद्बलक्षयः । वरुणपाशेन ग्रहणादुदरादिव्यथा । सरस्वतीमेतदीया वाग्भाषा गच्छति, तेनायं भाषितुं न शक्नोति । जीवात्मा त्वग्नाविष्णू प्राप्नोति, तेन मुमूर्षति ॥

इदानीं विधत्ते—

यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालꣳ सौम्यं चरुं वारुणं दशकपालꣳ सारस्वतं चरुमाग्नावैष्णवमेकादशकपालमग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसं वारुणेनैवैनं वरुणपाशान्मुञ्चति सारस्वतेन वाचं दधात्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन च भिषज्यत्युत यदीतासुर्भवति जीवत्येव,इति ।

ज्योगामयाविनो रोगपरिहारार्थमरोगस्य चापमृत्युपरिहारार्थमियं पञ्चहविष्केष्टिः ॥

मन्त्रं विनियुङ्क्ते—

यन्नवमैत्तन्नवनीतमभवदित्याज्यमवेक्षते रूपमेवास्यैतन्महिमानं व्याचष्टे , इति ।

मन्त्रोक्तैर्नवनीतसर्पिर्घृतनिर्वचनैरस्याऽऽज्यस्यैतद्विद्यमानरूपं महिमानं ख्यापनाय मन्त्रो व्याचष्टे । यद्वा मन्त्रस्यैतत्स्वरूपमेव घृतस्य महिमानं व्याचष्टे । मन्त्राक्षरैरेव स्पष्टं प्रतीयते नात्र पृथग्वक्तव्यमस्तीत्यर्थः ॥

उपहोममन्त्रान्व्याचष्टे—

अश्विनोः प्राणोऽसीत्याहाश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोतीन्द्रस्य प्राणोऽसीत्याहेन्द्रियमेवास्मिन्नेतेन दधाति मित्रावरुणयोः प्राणोऽसीत्याह प्राणापानावेवास्मिन्नेतेन दधाति विश्वेषां देवानां प्राणोऽसीत्याह वीर्यमेवास्मिन्नेतेन दधाति, इति ॥

यजमानस्याऽऽज्यावेक्षणमन्त्रे स्पष्टार्थतां दर्शयति—

घृतस्य धाराममृतस्य पन्थामित्याह यथायजुरेवैतत्, इति ॥

ऋत्विग्भिः पठ्यमानानां मन्त्राणां तात्पर्यं दर्शयति—

पावमानेन त्वा स्तोमेनेत्याह प्राणमेवास्मिन्नेतेन दधाति बृहद्रथंतरयोस्त्वा स्तोमेनेत्याहौज एवास्मिन्नेतेन दधात्यग्नेस्त्वा मात्रयेत्याहाऽऽत्मानमेवास्मिन्नेतेन दधाति, इति ।

पवमानस्य वायोः प्राणरूपत्वात्तेन प्राणस्थापनं, बृहद्रथंतरयोः पृष्ठस्तोत्रप्रकृतित्वेन सारत्वात्तेनौजोधारणम् । अग्नेरात्मा मीयतेऽनयेत्युक्तत्वात्तेनाऽऽत्मस्थापनम् ॥

एतेषां त्रयाणां पाठं विधत्ते—

ऋत्विजः पर्याहुर्यावन्त एवर्त्विजस्त एनं भिषज्यन्ति, इति ॥

पाठकाले हस्तग्रहणं विधत्ते—

ब्रह्मणो हस्तमन्वारभ्य पर्याहुरेकधैव यजमान आयुर्दधति यदेव तस्य तत्, इति ।

एकधैव सर्वेषामृत्विजामैकमत्येनैव तस्य यजमानस्य यदेवाऽऽयुः संपादनीयमस्ति तत्सर्वं तस्मिन्यजमाने स्थापयन्ति ॥

यदुक्तं सूत्रकारेण—" पात्रसंपादनकाले खादिरं पात्रं चतुस्त्रक्ति प्रयुङ्क्ते[1] सौवर्णस्य प्रवर्तं शतमानस्य कृतम्, अथो खलु यावतीः समा एष्यन्मन्येत तावन्मानः स्यात्" इति। "आज्यग्रहणकाले तूष्णीं खादिरे चतुर्गृहीतं गृहीत्वा सादनकाल उत्तरेण ध्रुवां खादिरं सादयित्वा तस्मिन्प्रवर्तमवदधाति" इति च। प्रवर्तः कर्णाभरणं कुण्डलम्। [ तत्र ] घृते स्थापितात्प्रवर्तान्निष्पीडितस्य घृतस्य पानं विधत्ते—

हिरण्याद्घृतं निष्पिबत्यायुर्वै घृतममृतꣳ हिरण्यममृतादेवाऽऽयुर्निष्पिबति, इति ॥

तस्य परिमाणं द्वेधा विधत्ते—

शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठत्यथो खलु यावतीः समा एष्यन्मन्येत तावन्मानꣳ स्यात्समृद्ध्यै, इति।

शतमान पञ्चपर्णपरिमितमित्यसकृदुक्तम्। अथवा रुग्णो यजमानो यावतो भाविनः संवत्सरान्प्राप्नोतीत्यध्वर्युर्मन्येत तावद्भिर्मानैः परिमितं कर्तव्यम्। मानशब्दो गुञ्जाबीजं ब्रूते। रुग्णस्यातीतमायुः परित्यज्याऽऽगामिन आयुषो यावन्तः संवत्सरा एतस्य मनसि निश्चितास्तावद्भिर्गुञ्जाबीजैः परिमितमित्यर्थः ॥

प्राश्नतो यजमानस्याभिमन्त्रणमन्त्रे प्रथमचरमभागयोरभिप्रायं दर्शयति—

इममग्न आयुषे वर्चसे कृधीत्याहाऽऽयुरेवास्मिन्वर्चो दधाति विश्वे देवा जरदष्टिर्यथाऽसदित्याह जरदष्टिमेवैनं करोति, इति।

आयुषश्चरमभागस्थाया जराया अष्टिर्व्याप्तिर्यस्य। अथवा जीर्यत्यष्टिरशनं[2] यस्यासौ जरदष्टिः, नीरोग इत्यर्थः ॥

अध्वर्योर्यजमानदक्षिणहस्तग्रहणं विधत्ते—

अग्निरायुष्मानिति हस्तं गृह्णात्येते[3]

---

१ ख. च. प्रयुनक्ति। २ ख. च. °हीत्वा। ३ ख. °पल°।

वै देवा आयुष्मन्तस्त एवास्मि-
न्नायुर्दधति सर्वमायुरेति ॥, इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-
दीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके
एकादशोऽनुवाकः ॥ ११ ॥

---

(अथ द्वितीयाष्टके तृतीयप्रपाठके द्वादशोऽनुवाक ।)

प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवता-
मार्छत्स पर्यदीर्यत स एतं वारुणं चतुष्कपा-
लमपश्यत्तं निरवपत्ततो वै स वरुणपाशाद-
मुच्यत वरुणो वा एतं गृह्णाति योऽश्वं प्रति-
गृह्णाति यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारु-
णाञ्चतुष्कपालान्निर्वपेद्वरुणमेव स्वेन भागधे-
येनोप धावति स एवैनं वरुणपाशान्मुञ्चति
(१) चतुष्कपाला भवन्ति चतुष्पाद्ध्यश्वः
समृद्ध्या एकमतिरिक्तं निर्वपेद्यमेव प्रतिग्राही
भवति यं वा नाध्येति तस्मादेव वरुणपाशा-
न्मुच्यते यद्यपरं प्रतिग्राही स्यात्सौर्यमेकक-
पालमनु निर्वपेदमुमेवाऽऽदित्यमुच्चारं कुरुतेऽ-
पोऽवभृथमवैत्यप्सु वै वरुणः साक्षादेव वरुण-
मव यजतेऽपोनप्त्रीयं चरुं पुनरेत्य निर्वपेद-

( अश्वदानवत इष्टिविधि. )

प्मुयोनिर्वा अश्वः स्वामेवैनं योनिं गमयति स एनः शान्त उपतिष्ठते ( २ )

( मुञ्चति चरुः सप्तदंश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ द्वितीयाष्टके तृतीयप्रपाठके द्वादशोऽनुवाक । )

---

प्रजापतिरिति प्रजा—पतिः । वरुणाय । अश्वम् । अनयत् । सः । स्वाम् । देवताम् । आर्छत् । सः । परीति । अदीर्यत । सः । एतम् । वारुणम् । चतुंष्कपालमिति चतुः—कपालम् । अपश्यत् । तम् । निरिति । अवपत् । ततः । वै । सः । वरुणपाशादिति वरुण—पाशात् । अमुच्यत । वरुणः । वै । एतम् । गृह्णाति । यः । अश्वम् । प्रतिगृह्णातीति प्रति—गृह्णाति । यावतः । अश्वान् । प्रतिगृह्णीयादिति प्रति—गृह्णीयात् । तावतः । वारुणान् । चतुंष्कपालानिति चतुः—कपालान् । निरिति । वपेत् । वरुणम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । एनम् । वरुणपाशादिति वरुण—पाशात् । मुञ्चति ( १ )। चतुंष्कपाला

इति चतुः—कपालाः । भवन्ति । चतुष्पादिति चतुः—पात् । हि । अश्वः । समृद्ध्या इति सम्—ऋद्ध्यै । एकम् । अतिरिक्तमित्यति—रिक्तम् । निरिति । वपेत् । यम् । एव । प्रतिग्राहीति प्रति—ग्राही । भवति । यम् । वा । न । अध्येतीत्यधि—एति । तस्मात् । एव । वरुणपाशादिति वरुण—पा-शात् । मुच्यते । यदि । अपरम् । प्रतिग्राहीति प्रति—ग्राही । स्यात् । सौर्यम् । एककपालमित्ये-क—कपालम् । अनु । निरिति । वपेत् । अमुम् । एव । आदित्यम् । उद्वारमित्युत्—चारम् । कुरुते । अपः । अवभृथमित्यव—भृथम् । अवेति । एति । अप्स्वित्यप्—सु । वै । वरुणः । साक्षादिति स—अ-क्षात् । एव । वरुणम् । अवेति । यजते । अपोन-प्त्रीयमित्यपः—नप्त्रीयम् । चरुम् । पुनः । एत्ये-त्या—इत्य । निरिति । वपेत् । अप्सुयोनिरित्य-प्सु—योनिः । वै । अश्वः । स्वाम् । एव । एनम् । योनिम् । गमयति । सः । एनम् । शान्तः । उपेति । तिष्ठते ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

( अथ द्वितीयकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः । )

एकादशे त्विष्टिरुक्ता दीर्घरोग्यायुरर्थिनोः ॥
अथ द्वादशेऽश्वदानवत इष्टिं विधास्यन्प्रस्तौति—

प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्छत्स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तं निरवपत्ततो वै स वरुणपाशादमुच्यत, इति।

अनयद्दत्तवान्। देवस्य भावो देवता। स प्रजापतिः स्वकीयं देवत्वमार्छदार्तिमकरोत्। प्राजापत्यो वा अश्व इति श्रुतेः प्रजापतिरेव पूर्वमश्वस्य देवता। तस्मिन्नश्वे वरुणाय दत्ते सति स्वकीयमश्वस्वामित्वमपगतं, तन्निमित्तेन दुःखेन स प्रजापतिः पर्यदीर्यत तदीयं शरीरं परितो दीर्णं दीर्घरोगग्रस्तमभूत्। स च रोगो वरुणपाशरूपत्वाद्वारुणेष्ट्या निवृत्तः ॥

इदानीमिष्टिं विधत्ते—

वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाञ्चतुष्कपालान्निर्वपेद्वरुणमेव स्वेन भागधेयेनोप धावति स एवैनं वरुणपाशान्मुञ्चति, इति।

प्रतिगृह्णातीत्यस्यान्तर्भावितण्यर्थत्वात्प्रतिग्राहयति ददातीत्ययमर्थः संपद्यते ॥

कपालसंख्यां प्रशंसति—

चतुष्कपाला भवन्ति चतुष्पाद्ध्यश्वः समृद्ध्यै, इति ॥

अश्वसंख्यातोऽधिकं पुरोडाशं विधत्ते—

एकमतिरिक्तं निर्वपेद्यमेव प्रतिग्राही भवति यं वा नाध्येति तस्मादेव वरुणपाशान्मुच्यते,इति।

यमेवाश्वमित ऊर्ध्वं यदा कदाचित्कालान्तरे प्रतिग्रहीष्यति दास्यति, अथवा यं कंचिदश्वं प्रतिगृहीतं नाध्येति विस्मरति तदर्थोऽयमतिरिक्तः पुरोडाशः ॥

निमित्तविशेषेणाङ्गाधिक्यं विधत्ते—

यद्यपरं प्रतिग्राही स्यात्सौर्यमेककपालमनु
निर्वपेदमुमेवाऽऽदित्यमुच्चारं कुरुते, इति ।

कांश्चिदश्वान्दत्त्वा तदानीमेवेष्ट्यनुष्ठाने सत्येकेनातिरिक्तेन सहितास्तावन्तः पुरोडाशाः पर्याप्ताः । यदा तु दानानन्तरमेवेष्टिर्नानुष्ठिता किं तु कंचित्काल-मतिलङ्घ्य पुनरप्यपरोऽश्वो दत्तस्तदा सातिरिक्तान्दत्ताश्वसंख्याकान्पुरोडा-शान्निरुप्य सौर्यमनुनिर्वपेत् । तेनाऽऽदित्यमेवोर्ध्वचारिणं कुरुते । स चाऽऽदि-त्यो विलम्बदोषं परिहरन्परिष्टाद्वर्तत इत्यभिप्रायः ॥

इष्ट्यङ्गत्वेनावभृथं विधत्ते—

अपोऽवभृथमवैत्यप्सु वै वरुणः
साक्षादेव वरुणमव यजते, इति ।

अपः प्राप्य तत्रावभृथं कर्म कुर्यात् । तेन वरुणो निराकृतो भवति ॥

अङ्गान्तरं विधत्ते—

अपोनप्त्रीयं चरुं पुनरेत्य निर्वपेदप्सुयो-
निर्वा अश्वः स्वामेवैनं योनिं गमयति
स एनः शान्त उप तिष्ठते॥, इति ॥

अपोनप्ता देवता यस्य सोऽयमपोनप्त्रीयस्तं चरुमवभृथदेशाद्यज्ञभूमौ समा-गत्य निर्वपेत् । अप्सु योनिरुत्पत्तिर्यस्याश्वस्य सोऽयमप्सुयोनिः । उच्चैःश्रव-सोऽश्वस्य समुद्रादुत्पत्तिः पुराणेषु प्रसिद्धा । तस्मादपोनप्त्रीयचरुणा तमश्वं स्वकीययोनिगामिनं करोति । स चाश्वः शान्तः सन्त्रोगमनुत्पाद्यैनं यजमानं सेवते ॥

अत्र मीमांसा ।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

“ अश्वप्रतिग्रहेष्टिस्तु दातुरित्यभिधास्यते ।
दानद्वये लौकिके वा वैदिके वा भवेदियम् ॥
अविशेषाद्द्वयोर्यद्वा न देयः केसरीत्यतः ।
निषेधाल्लौकिकात्तत्र प्रायश्चित्तिरियं भवेत् ॥
न जलोदरहेतुत्वं प्रमितं लौकिके क्वचित् ।
वैदिके तु श्रुतं तस्मात्तत्प्रायश्चित्तयेऽत्र सा ॥ ”

१ ञ. 'डाशा दत्ताश्वप' ।

इदमाम्नायते—" यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाश्चतुष्कपालान्नि-र्वपेत् " इति। तत्र प्रतिग्रहशब्दो दानपर इत्यनन्तरमेव वक्ष्यते। तत्र विशेषाश्रवणाल्लौकिकवैदिकदानयोरुभयोरप्यसाविष्टिरित्येकः पक्षः। न केसरिणो ददातीति स्मृत्या मित्रदायादादिभ्यः प्रीत्या क्रियमाणमश्वदानं लौकिकं निषिद्धं, तदनुष्ठाने प्रायश्चित्तरूपेयमिष्टिरिति द्वितीयः पक्षः। "वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति " इत्यश्वदाने जलोदरव्याधिरूपो दृष्टदोषो वरुणग्रहवाक्येनोच्यते। न च लौकिकस्याश्वदानस्य तद्धेतुत्वं प्रमितम्। वैदिकस्य तु जन्मान्तरविषयं दोषश्रवणम्। अतो वैदिकदाने सेष्टिः प्रायश्चित्तम्। अस्ति हि वैदिकमश्वदानं " वडवा दक्षिणा " इत्यादिश्रवणात्।

अत्रैवान्यच्चिन्तितम्—

" यावतः प्रतिगृह्णीयादश्वांस्तावत्य इष्टयः।
प्रतिग्रहीतुर्दातुर्वा स्यादाद्योऽस्तु यथाविधि॥
असंजातविरोध्यर्थवादाद्दातुः प्रजापतेः।
इष्टिः श्रुता ततो दातुर्णिजर्थेऽपि विधिं नयेत्॥ "

पूर्वोदाहृते वाक्ये प्रतिगृह्णीयादिति विधिपदश्रवणात्प्रतिग्रहीतुरिष्टिरिति चेन्न। उपक्रमरूपेणार्थवादेन दातुस्तदिष्टिप्रतीतेः। उपक्रमश्चैवं श्रूयते—" प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्छत्स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तं निरवपत्ततो वै स वरुणपाशादमुच्यत "इति। अनयद्दत्तवान्। स च दाता प्रजापतिः स्वकीयां वरुणदेवतां जलोदररोगप्रदां प्राप्तवान्। तेन च रोगेण ग्रस्तः प्रजापतिर्विदीर्णो भूत्वा रोगपरिहारायेष्टिं कृत्वा रोगादमुच्यतेत्यत्र दातुरिष्टिरित्यवगम्यते। असंजातविरोध्युपक्रमानुसारेण विधायकपदमपि प्रतिग्राहयेदित्येवमन्तर्भावितणिजर्थपरतया व्याख्येयम्।

पञ्चमाध्यायस्य द्वितीयपादे चिन्तितम्—

" प्रतिग्रहे तु बह्वश्वे पूर्वन्यायोऽस्ति वा न वा।
अस्ति तत्साम्यतो मैवं पुरोडाशस्य शोषतः "॥

" यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाश्चतुष्कपालान्निर्वपेत् " इति। अत्र शतसंख्यादियुक्तबह्वश्वप्रतिग्रहे बहुपुरोडाशपूदाहृतवाक्यवचनेन साहित्यं प्राप्तम्। तत्र पूर्वन्यायेन सर्वेषु पुरोडाशेष्वेकैकोऽधिश्रयणादिधर्मोऽनुष्ठेय इति चेन्मैवम्। तप्तेषु चतुर्षु कपालेषु क्रमेण पुरोडाशानाधिश्रित्य यावता कालेन प्रथमपुरोडाशे द्वितीयसंस्कारं कर्तुमागच्छति तावता कालेनासौ शुष्को भस्मी

१ ख. घ. च. 'ग्रहीतुर्बह'। २ ख. 'षु क'।

भवति । तस्मादेकैकस्मिन्पुरोडाशे कृत्स्नधर्मसमापनमित्येवं काण्डानुसमयोऽभ्युपेतव्यः ।

एकादशाध्यायस्य चतुर्थपादे चिन्तितम्—

" तन्त्रं चतुष्कपालानां भेदो वा तन्महत्त्वतः ।
कुम्भीवत्तन्त्रता मैवं भेदः स्यात्प्रकृताविव ॥ "

इदं श्रूयते—" यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाञ्चतुष्कपालान्निर्वपेत् " इति । यथा प्राजापत्येषु कुम्भ्या महत्त्वेन तन्त्रं तथाऽत्रापि कपालमहत्त्वेन तन्त्रमिति चेत् । मैवम् । प्रकृतौ प्रतिपुरोडाशं कपालभेदेन तद्भेदस्यैव चोदकप्राप्तेः । किं चात्यन्तविशालेषु कपालेषु चतुर्षु पुरोडाशानां शतेष्ववस्थापितेष्वेकस्यैव कपालस्यैकदेशे पुरोडाशस्यैकस्य समाप्तेर्न कोऽपि पुरोडाशश्चतुष्कपालः सिध्येत् । तस्मात्प्रतिपुरोडाशं कपालचतुष्टयभेदः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

( अथ द्वितीयाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः । )

या वा॑मिन्द्रावरुणा य॒तव्या॑ त॒नूस्तये॒मम॑ꣳह॑सो मुञ्चतं॒ या वा॑मिन्द्रावरुणा सह॒स्या॑ रक्ष॒स्या॑ तेज॒स्या॑ त॒नूस्तये॒मम॑ꣳह॑सो मुञ्चतं॒ यो वा॑मिन्द्रावरुणाव॒ग्नौ स्राम॒स्तं वा॑मे॒तेनाव॑ यजे॒ यो वा॑मिन्द्रावरुणा द्वि॒पात्सु॑ प॒शुषु॒ चतु॑ष्पात्सु गो॒ष्ठे गृ॒हेष्व॒प्स्वोष॑धीषु॒ वन॒स्पति॑षु॒ स्राम॒स्तं वा॑मे॒तेनाव॑ यज॒ इन्द्रो॒ वा ए॒तस्य॑ ( १ ) इन्द्रि॒येणाप॑ क्रामति॒ वरु॑ण एनं वरुणपा॒शेन॑ गृह्णाति॒ यः पा॒प्मना॑ गृही॒तो भव॑ति॒ यः पा॒प्मना॑

गृहीतः स्यात्तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेदिन्द्र एवास्मिन्निन्द्रियं दधाति वरुण एनं वरुणपाशान्मुञ्चति पयस्या भवति पयो हि वा एतस्मादपक्रामत्यथैष पाप्मना गृहीतो यत्पयस्या भवति पय एवास्मिन्तया दधाति पयस्यायाम् ( २ ) पुरोडाशमव दधात्यात्मन्वन्तमेवैनं करोत्यथो आयतनवन्तमेव चतुर्धा व्यूहति दिक्ष्वेव प्रति तिष्ठति पुनः समूहति दिग्भ्य एवास्मै भेषजं करोति समूह्याव द्यति यथाऽऽविद्धं निष्कृन्तति तादृगेव तद्यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनाव यज इत्याह दुरिष्ट्या एवैनं पाति यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्तं वामेतेनाव यज इत्याहैतावतीर्वा आप ओषधयो वनस्पतयः प्रजाः पशव उपजीवनीयास्ता एवास्मै वरुणपाशान्मुञ्चति ( ३ ) ॥

( एतस्य पयस्यायां पाति षड्विंशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ द्वितीयाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः। )

या। वाम्। इन्द्रावरुणेतीन्द्रा—वरुणा। यतव्यां। तनूः। तयां। इमम्। अंहसः। मुञ्चतम्। या। वाम्। इन्द्रावरुणेतीन्द्रा—वरुणा। सहस्यां। रक्षस्यां। तेजस्यां। तनूः। तयां। इमम्। अंहसः। मुञ्च-तम्। यः। वाम्। इन्द्रावरुणावितीन्द्रा—वरुणौ। अग्नौ। स्रामः। तम्। वाम्। एतेनं। अवेति। यजे। यः। वाम्। इन्द्रावरुणेतीन्द्रा—वरुणा। द्वि-पास्त्विति द्विपात्—सु। पशुषु। चतुंष्पास्त्विति चतुंष्पात्—सु। गोष्ठ इति गो—स्थे। गृहेषु। अ-प्स्वित्यप्—सु। ओषधीषु। वनस्पतिषु। स्रामः। तम्। वाम्। एतेनं। अवेति। यजे। इन्द्रः। वै। एतस्य ( १ )। इन्द्रियेणं। अपेति। क्रामति। व-रुणः। एनम्। वरुणपाशेनेति वरुण—पाशेनं। गृह्णा-ति। यः। पाप्मनां। गृहीतः। भवति। यः। पाप्मनां। गृहीतः। स्यात्। तस्मैं। एताम्। ऐन्द्रावरुणीमि-त्यैन्द्रा—वरुणीम्। पयस्यांम्। निरिति। वपेत्। इन्द्रः। एव। अस्मिन्। इन्द्रियम्। दधाति। वरुणः। एनम्। वरुणपाशादिति वरुण—पाशात्। मुञ्चति। पयस्यां। भवति। पयः। हि। वै। एतस्मात्।

अपक्रामतीत्यप–क्रामति । अथ । एषः । पाप्मना ।
गृहीतः । यत् । पयस्या । भवति । पयः । एव ।
अस्मिन् । तया । दधाति । पयस्यायाम् (२) । पुरो-
डाशम् । अवेति । दधाति । आत्मन्वन्तमित्यात्म-
न्–वन्तम् । एव । एनम् । करोति । अथो इति ।
आयतनवन्तमित्यायतन–वन्तम् । एव । चतुर्धेति
चतुः–धा । वीति । ऊहति । दिक्षु । एव । प्रतीति ।
तिष्ठति । पुनः । समिति । ऊहति । दिग्भ्य इति
दिक्–भ्यः । एव । अस्मै । भेषजम् । करोति ।
समूह्येति सम्–ऊह्य । अवेति । द्यति । यथा ।
आविद्धमित्या–विद्धम् । निष्कृन्ततीति निः–कृ-
न्तति । तादृक् । एव । तत् । यः । वाम् । इन्द्राव-
रुणावितीन्द्रा–वरुणौ । अग्नौ । स्रामः । तम् ।
वाम् । एतेन । अवेति । यजे । इति । आह । दुरि-
ष्ट्या इति दुः–इष्ट्याः । एव । एनम् । पाति ।
यः । वाम् । इन्द्रावरुणेतीन्द्रा–वरुणा । द्विपास्स्वि-
ति द्विपात्–सु । पशुषु । स्रामः । तम् । वाम् ।
एतेन । अवेति । यजे । इति । आह । एतावतीः ।
वै । आपः । ओषधयः । वनस्पतयः । प्रजा इति
प्र–जाः । पशवः । उपजीवनीया इत्युप–जीव-

नीयाः। ताः। एव। अस्मै। वरुणपाशादिति वरु-ण—पाशात्। मुञ्चति ( ३ )॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयप्रपाठके त्रयोदशोऽनुवाकः॥ १३॥

---

( अथ द्वितीयकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाक। )

---

चतुष्कपाला विहिता द्वादशे त्वश्वदानिनः॥
अथ त्रयोदशे पाप्मना गृहीतस्येष्टि विधित्सुरादौ मन्त्रान्पठति।

कल्पः—"ऐन्द्रावरुणं पुरोडाशं निरुप्यैन्द्रावरुणीं पयस्यां निर्वपेदुद्वास्यालंकृत्य पयस्यायां पुरोडाशमवदधात्येतयैव प्रच्छाद्याऽऽसादयत्यथास्मा-न्प्रतिदिशं पयस्यां व्यूहति या वामिन्द्रावरुणा यतव्या तनूरित्येतैरेव पुनः समूहति मुञ्चतमित्यस्य स्थानेऽमुक्तमिति मन्त्रान्तान्संनमति सहैव पयस्यायाः पुरोडाशस्यावद्यति यो वामिन्द्रावरुणावग्नौ स्राम इत्युपहोमाः" इति।

तत्र प्रथमस्य व्यूहनमन्त्रस्य पाठस्तु—

या वामिन्द्रावरुणा यतव्या तनूस्तयेममꣳहसो मुञ्चतम्, इति।

हे इन्द्रावरुणौ वां युवयोर्या तनूर्यतव्या पापान्मोचने प्रयत्नवती तया तन्वा यजमानं पापान्मोचयतम्॥

द्वितीयतृतीयचतुर्थमन्त्राणां पाठस्तु—

या वामिन्द्रावरुणा सहस्या रक्षस्या तेजस्या तनूस्तयेममꣳहसो मुञ्चतम्, इति।

सहस्येत्यत्र तनूरित्यस्यान्त्यभागस्यानुषङ्गः। तेजस्येत्यत्र यावामित्याद्य-भागस्यानुषङ्गः। रक्षस्येत्यत्रोभयोर्भागयोरनुषङ्गः। सहो बलं तदर्हतीति सहस्या। रक्षो रक्षणं तदर्हतीति रक्षस्या। तेजो रोचनशक्तिस्तदर्हतीति तेजस्या॥

उपहोमे प्रथममन्त्रस्य पाठस्तु—

---

१ घ 'हृ.यमुक्त'। २ ख 'मिति मन्त्रान्स'। ३ ङ. 'यस्यया पु'।

यो वामिन्द्रावरुणावग्नौ स्राम-
स्तं वामेतेनाव यजे , इति।

हे इन्द्रावरुणावग्नौ वां युवयोर्यः स्रामः पापविशेषो युवयोर्होमार्थे वह्नौ यजमानेन योऽपराधः कृतस्तमपराधं युवयोः संबन्धिनैतेन होमेनावयजे विनाशयामि ॥

द्वितीयादीनां सप्तानां मन्त्राणां पाठस्तु—

यो वामिन्द्रावरुणा द्विपात्सु पशुषु
चतुष्पात्सु गोष्ठे गृहेष्वप्स्वोषधीषु वन-
स्पतिषु स्रामस्तं वामेतेनाव यजे, इति।

द्विपात्सु पशुष्वित्यत्र स्रामस्तं वामित्याद्युत्तरभागस्यानुषङ्गः। वनस्पतिषु स्राम इत्यत्र यो वामित्यादेः प्रथमभागस्यानुषङ्गः। + चतुष्पात्स्वित्यादिषु पञ्चसु पूर्वोत्तरभागयोरनुषङ्गः। हे इन्द्रावरुणौ युवयोः संबन्धी यो यजमानस्तस्य द्विपात्सु पशुषु मनुष्यादिरूपेषु यः स्रामः पापविशेषस्तं पापविशेषं युवयोः संबन्धिनैतेन कर्मणा विनाशयामि। एवं सर्वत्र योज्यम् ॥

अथेष्टिं विधत्ते—

इन्द्रो वा एतस्येन्द्रियेणाप क्रामति वरुण
एनं वरुणपाशेन गृह्णाति यः पाप्मना गृहीतो
भवति यः पाप्मना गृहीतः स्यात्तस्मा एतामै-
न्द्रावरुणीं पयस्यां निर्वपेदिन्द्र एवास्मिन्निन्द्रियं
दधाति वरुण एनं वरुणपाशान्मुञ्चति, इति।

यः पापगृहीत एतदीयेनेन्द्रियेण सहेन्द्रोऽपगच्छति, वरुणो रोगेणैनं बाधते, अतः पाप्मना गृहीतस्य तदुभयविषयेष्टिः। पयसि प्रभवाऽऽमिक्षा पयस्या ॥

तां प्रशंसति—

पयस्या भवति पयो हि वा एतस्माद-
पक्रामत्यथैष पाप्मना गृहीतो यत्पयस्या
भवति पय एवास्मिन्तया दधाति, इति।

---

+ चतुष्पात्स्विति मन्त्रे तु चतुष्पात्स्वित्यनन्तर पशुष्विति पदस्याप्यनुषङ्गो ज्ञेय ।

पयःशब्देन क्षीरादिसात्त्विकाहारजनितश्रद्धया कृतं पुण्यमुपलक्ष्यते । तत्पुण्यानुष्ठानमेवैतस्माद्यजमानाद्यपक्रामति तदानीमेष पाप्मना गृहीतो भवति । यद्यत्र हविः पयस्या भवेत्तर्ह्यस्मिन्यजमाने तया पयस्ययाऽऽहारोपलक्षितं पुण्यमाहितं भवति ॥

अथाप्राप्तं कंचिदंशविशेषं विधत्ते—

**पयस्यायां पुरोडाशमव दधात्यात्मन्वन्तमेवैनं करोत्यथो आयतनवन्तमेव,** इति ।

शरीरसदृशस्य कठिनस्य पुरोडाशस्य प्रक्षेपेणैनं यजमानमात्मन्वन्तं दृढशरीरोपेतं करोति । सति हि पापे तज्जन्यरोगेण शरीरस्याद्यार्ढ्यम् । किं च [4]पयस्याधारत्वेन यजमानमप्यायतनवन्तं गृहग्रामादिरूपाधारवन्तं[करोति] ॥

या वामिन्द्रावरुणेत्यादिमन्त्रैर्हविषो विभागं विधत्ते—

**चतुर्धा व्यूहति दिक्ष्वेव प्रति तिष्ठति,** इति ॥

विभक्तस्यैकीभावं विधत्ते—

**पुनः समूहति दिग्भ्य एवास्मै भेषजं करोति ,** इति ॥

मिश्रितयोः पुरोडाशामिक्षयोः सहावदानं विधत्ते—

**समूह्याव द्यति यथाऽऽविद्धं निष्कृन्तति तादृगेव तत्,** इति ।

यथा लोके वैरिणा मुक्तमाविद्धं स्वशरीरे बाणादिकं संदंशादिना निष्कृष्य छिनत्ति तादृगेव तत्समूह्यावदानं संपद्यते ॥

उपहोमे प्रथममन्त्रं व्याचष्टे—

**यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनाव यज इत्याह दुरिष्ट्या एवैनं पाति ,** इति ।

होमाधारेऽग्नौ कृतेन स्रामेणापराधेन दुरिष्टिर्भवति तमपराधमवयज इत्युक्त्वा तस्या दुरिष्टेः सकाशादेनं यजमानं रक्षति ॥

१ क. ख घ च °स्याया आधा° । २ ङ च °मानोऽप्यायतनवान्गृहग्रामादिरूपाधारवान्भवति । या । ३ क. घ. च. °रीरादि° । ४ क. ख. घ. च. घृतेन ।

अवशिष्टानां मन्त्राणां तात्पर्यं दर्शयति—

यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्तं वामेतेनाव यज इत्याहैतावतीर्वा आप ओषधयो वनस्पतयः प्रजाः पशव उपजीवनीयास्ता एवास्मै वरुणपाशान्मुञ्चति॥, इति ॥

पशुषु स्रामस्तं वामित्येवमनुषङ्गो योजयित्वा प्रदर्शितः । प्राण्युपजीवनयोग्या अबादयः पञ्च पदार्थाः । तत्र पशुशब्देन द्विपादश्चतुष्पादश्च गृह्यन्ते । गृहा *अप्यत्रोपलक्ष्यन्ते । या एतावत्य उपजीवनीयास्ताः सर्वा अपि यजमानार्थं वरुणपाशादुपद्रवान्मोचयति ॥

अत्र विनियोगसंग्रहः—

" यावामिति चतुर्मन्त्रैश्चतुर्धा व्यूहते हविः ।
यो वामित्यष्टभिर्मन्त्रैरुपहोमा उदीरिताः ॥ १ ॥
द्विपात्स्वित्यादिना मन्त्रभेदः सप्तविधो भवेत् ।
त्रयोदशोऽनुवाकेऽस्मिन्मन्त्रा द्वादश कीर्तिताः ॥ २ ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके
त्रयोदशोऽनुवाकः ॥ १३ ॥

( अथ द्वितीयाष्टके तृतीयप्रपाठके चतुर्दशोऽनुवाकः । )

स प्रत्नवन्नि काव्येन्द्रं वो विश्वतस्परीन्द्रं नरः । त्वं नः सोम विश्वतो रक्षा राजन्नघायतः । न रिष्येत्त्वावतः सखा । या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु । तेभिर्नो विश्वैः सुमना अहेडन्राजं-

* अपिना गोष्ठोपलक्षणमभिप्रेतम् ।

१ इ. °न्ते । या । २ क. ख. घ. च. °मा इतीरि° । ३ ङ. व

न्त्सोम प्रति हव्या गृभाय। अग्नीषोमा सवेदसा सहूती वनतं गिरः। संदेवत्रा बभूवथुः। युवम् (१) एतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्। युवꣳ सिन्धूꣳरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान्। अग्नीषोमाविमꣳ सु मे शृणुतं वृषणा हवम्। प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः। आऽन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः। अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम्। अग्नीषोमा हविषः प्रस्थितस्य वीतम् (२) हर्यतं वृषणा जुषेथाम्। सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः। आ प्यायस्व सं ते। गणानां त्वा गणपतिꣳ हवामहे कविं कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम्। स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः। देवानां यः पितरमाविवासति (३) श्रद्धामना हविषा ब्रह्मणस्पतिम्। स सुष्टुभा स ऋक्वता गणेन वलꣳ रुरोज फलिगꣳ रवेण।

बृहस्पतिरुस्रियां हव्यसूदः कनिक्रदद्वावशतीरुदाजत् । मरुतो यद्ध वो दिवो या वः शर्म । अर्यमाऽऽयाति वृषभस्तुविष्मान्दाता वसूनां पुरुहूतो अर्हन् । सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं दधातु । ये तेऽर्यमन्बहवो देवयानाः पन्थानः ( ४ ) राजन्दिव आचरन्ति । तेभिर्नो देव महि शर्म यच्छ शं न एधि द्विपदे शं चतुष्पदे । बुध्नादग्रमङ्गिरोभिर्गृणानो वि पर्वतस्य दृꣳहितान्यैरत् । रुजद्रोधाꣳसि कृत्रिमाण्येषाꣳ सोमस्य ता मद इन्द्रश्चकार । बुध्नादग्रेण वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम् । वृथाऽसृजत्पथिभिर्दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार ( ५ ) प्र यो जज्ञे विद्वाꣳ अस्य बन्धुं विश्वानि देवो जनिमा विवक्ति । ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा स्वधयाऽभि प्र तस्थौ । महान्मही अस्तभायद्वि जातो द्याꣳ सद्म पार्थिवं च रजः । स बुध्नादाष्ट जनुषाऽभ्यग्रं बृहस्पतिर्देवता यस्य सम्राट् । बुध्नाद्यो अग्रमभ्यर्त्योजसा बृहस्पतिमा विवासन्ति देवाः ।

( काम्ययाज्यानुपुरोनुवाक्याभिधानम् )

भिनद्वलं वि पुरो दर्दरीति कनिक्रदत्सुवर्पो जिगाय ( ६ ) ॥

( यत्र वीतमाविवांसनि पन्थानो दीर्घयाथैः सोमस्य ता मद इन्द्रं-श्चकार देवा नवं च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

आदित्येभ्यो देवा वै मृत्योर्देवा वै सत्रमासतार्यम्णे प्रजापतेस्त्रयस्त्रिंशत्प्रजापतिर्देवेभ्योऽन्नाद्यं देवासुरास्तात्रजनो ध्रुवोऽसि यन्नवमैदग्नि वै प्रजापतिर्वरुणाय या वामिन्द्रावरुणा स प्रत्नवच्चतुर्दश ॥ १४ ॥

आदित्येभ्यस्त्वष्टुरस्मै दानकामा एतावं रुन्धेऽग्नि वै स प्रत्नवत्षट्पञ्चाशत् ॥ ५६ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयः प्रपाठकः ॥ ३ ॥

( अत्र द्वितीयाष्टके तृतीयप्रपाठके चतुर्दशोऽनुवाकाः । )

---

मः । प्रत्नवदिति प्रत्न—वत् । नीति । काव्या । इन्द्रम् । वः । विश्वतः । परीति । इन्द्रम् । नरः । त्वम् । नः । सोम । विश्वतः । रक्ष । राजन् । अघायत इत्यघ—यतः । न । रिष्येत् । त्वावत इति त्व—वतः । सखा । या । ते । धामानि । दिवि । या । पृथिव्याम् । या । पर्वतेषु । ओषधीषु । अप्स्वस्य-

प्र—सु । तेभिः । नः । विश्वैः । सुमना इति सु—मनाः । अहेडन् । राजन् । सोम । प्रतीति । हव्या । गृभाय । अग्नीषोमेत्यग्नी—सोमा । सवेदसेति स—वेदसा । सहूती इति स—हूती । वननम् । गिरः । समिति । देवत्रेति देव—त्रा । बभूवथुः । युवम् । ( १ ) । एतानि । दिवि । रोचनानि । अग्निः । च । सोम । सक्रतू इति स—क्रतू । अधत्तम् । युवम् । सिन्धून् । अभिशस्तेरित्यभि—शस्तेः । अवद्यात् । अग्नीषोमावित्यग्नी—सोमौ । अमुञ्चतम् । गृभीतान् । अग्नीषोमावित्यग्नी—सोमौ । इमम् । सु । मे । शृणुतम् । वृषणा । हवम् । प्रतीति । सूक्तानीति सु—उक्तानि । हर्यतम् । भवतम् । दाशुषे । मयः । एति । अन्यम् । दिवः । मातरिश्वा । जभार । अमथ्नात् । अन्यम् । परीति । श्येनः । अद्रेः । अग्नीषोमेत्यग्नी—सोमा । ब्रह्मणा । वावृधाना । उरुम् । यज्ञाय । चक्रथुः । उ । लोकम् । अग्नीषोमेत्यग्नी—सोमा । हविषः । प्रस्थितस्येति प्र—स्थितस्य । वीतम् ( २ ) । हर्यतम् । वृषणा । जुषेथाम् । सुशर्माणेति सु—शर्माणा । स्ववसेति सु—अवसा । हि । भूतम् । अथ । धत्तम् । यजमानाय । शम् । योः ।

एति । प्यायस्व । समिति । ते । गणानाम् । त्वा । गणपतिमिति गण—पतिम् । हवामहे । कविम् । कवीनाम् । उपमश्रवस्तममित्युपमश्रवः—तमम् । ज्येष्ठराजमिति ज्येष्ठ—राजम् । ब्रह्मणाम् । ब्रह्मणः । पते । एति । नः । शृण्वन् । ऊतिभिरित्यूति—भिः । सीद । सादनम् । सः । इत् । जनेन । सः । विशा । सः । जन्मना । सः । पुत्रैः । वाजम् । भरते । धना । नृभिरिति नृ—भिः । देवानाम् । यः । पितरम् । आविवासतीत्या—विवासति ( ३ ) । श्रद्धामना इति श्रद्धा—मनाः । हविषा । ब्रह्मणः । पतिम् । सः । सुष्टुभेति सु—स्तुभा । सः । ऋक्वता । गणेन । वलम् । रुरोज । फलिगम् । रवेण । बृहस्पतिः । उस्रियाः । हव्यसूद इति हव्य—सूदः । कनिक्रदत् । वावशतीः । उदिति । आजत् । मरुतः । यत् । ह । वः । दिवः । या । वः । शर्म । अर्यमा । एति । याति । वृषभः । तुविष्मान् । दाता । वसूनाम् । पुरुहूत इति पुरु—हूतः । अर्हन् । सहस्राक्ष इति सहस्र—अक्षः । गोत्रभिदिति गोत्र—भित् । वज्रबाहुरिति वज्र—बाहुः । अस्मासु । देवः । द्रविणम् । दधातु । ये । ते । अर्यमन् । बहवः । देव-

याना इति देव—यानाः । पन्थानः ( ४ ) । राजन् । दिवः । आचरन्तीत्या—चरन्ति । तेभिः । नः । देव । महि । शर्म । यच्छ । शम् । नः । एधि । द्विपद् इति द्वि—पदे । शम् । चतुष्पद इति चतुः—पदे । बुध्नात् । अग्रम् । अङ्गिरोभिरित्यङ्गिरः—भिः । गृणानः । वीति । पर्वतस्य । दृꣳहितानि । ऐरत् । रुजत् । रोधाꣳसि । कृत्रिमाणि । एषाम् । सोमस्य । ता । मदे । इन्द्रः । चकार । बुध्नात् । अग्रेण । वीति । मिमाय । मानैः । वज्रेण । खानि । अतृणत् । नदीनाम् । वृथा । असृजत् । पथिभिरिति पथि—भिः । दीर्घयाथैरिति दीर्घ—याथैः । सोमस्य । ता । मदे । इन्द्रः । चकार ( ५ ) । प्रेति । यः । जज्ञे । विद्वान् । अस्य । बन्धुम् । विश्वानि । देवः । जनिमा । विवक्ति । ब्रह्म । ब्रह्मणः । उदिति । जभार । मध्यात् । नीचा । उच्चा । स्वधयेति स्व—धया । अभि । प्रेति । तस्थौ । महान् । मही इति । अस्तभायत् । वीति । जातः । द्याम् । सद्म । पार्थिवम् । च । रजः । सः । बुध्नात् । आष्ट । जनुषा । अभीति । अग्रम् । बृहस्पतिः । देवता । यस्य । सम्राडिति सम्—राट् । बुध्नात् । यः । अग्रम् ।

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

अभ्यर्तीत्यभि-अर्ति । ओजसा । बृहस्पतिम् ।
एति । विवामन्ति । देवाः । भिनत् । वलम् ।
वीति । पुरः । दर्दरीति । कनिक्रदत् । सुवः । अपः ।
जिगाय ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके तृतीयः प्रपाठकः ॥ ३ ॥

( अथ द्वितीयकाण्डे तृतीयप्रपाठके चतुर्दशोऽनुवाकः । )

विहिता पाविनस्त्विष्टिरनुवाके त्रयोदशे ॥

अथास्मिन्नन्तिमे चतुर्दशोऽनुवाके काम्ययाज्या[पुरोनुवाक्या] उच्यन्ते ।

तत्र त्रिहविष्कां येयं यज्ञविभ्रष्टेष्टिस्तृतीयानुवाके समाम्नाता, तस्यां प्रथमद्वितीययोर्हविषोः क्रमेण याज्यानुवाक्यां [नां] प्रतीकं ( कानि ) दर्शयति—

**स प्रत्नवन्नि काव्येन्द्रं वो विश्वतस्परीन्द्रं नरः ।, इति ।**

स प्रत्नवन्नवीयसेत्यनुवाक्या। नि काव्या वेधस इति याज्या । एतदुभयमाग्नेये हविषि द्रष्टव्यम् । तच्च हिरण्यगर्भ आपो हेत्यस्मिन्ननुवाके व्याख्यातम् । इन्द्रं वो विश्वतस्परीत्यनुवाक्या । इन्द्रं नरो नेमधितेति याज्या । एतदुभयमैन्द्रे हविषि द्रष्टव्यम् । तच्च प्रथमकाण्डस्य षष्ठप्रपाठके व्याख्यातम् ॥

अथ सौम्यस्य हविषः पुरोनुवाक्यामाह—

१ क ख घ च. °ष्का वि° । २ ख. °वाक्ययो. प्र । ३ क. घ. °क्याप्र° । ङ. °क्यासु प्र° । च. °क्याया. प्र° ।

त्वं नः सोम विश्वतो रक्षा राजन्नघा-
यतः। न रिष्येत्त्वावतः सखा।, इति।

अघं पापमस्मदुपद्रवमिच्छन्नघायंस्तस्मात्पापसंघाद्विश्वतः सर्वस्मान्नोऽस्मान्हे सोम राजंस्त्वं रक्ष। त्वावतस्त्वादृशस्य प्रभोः सखा कश्चित्समर्थोऽपि त्वदनुग्रहान्न रिष्येदस्मान्न हिनस्ति ॥

तत्रैव याज्यामाह—

या ते धामानि दिवि या पृथिव्यां या पर्वते-
ष्वोषधीष्वप्सु । तेभिर्नो विश्वैः सुमना
अहेडन्राजन्त्सोम प्रति हव्या गृभाय ।, इति।

हे सोम राजंस्ते तव दिवि पृथिव्यादिषु च प्रदेशेषु यानि धामानि स्थानानि सन्ति, प्रतिप्रदेशं पृथगनुवादार्था यच्छब्दावृत्तिः । तेभिर्विश्वैस्तैः सर्वैः स्थानैर्युक्तः शोभनमनस्कः क्रोधरहितः सन्नोऽस्माकं हव्या हवींषि प्रतिगृभाय प्रतिगृहाण। यस्मिन्स्थाने त्वं स्थितस्तत आगत्य हविः स्वी

"अग्नीषोमीयमेकादशकपालं निर्वपेयं कामो नोपनमेत्" इत्यत्र पुरोनुवाक्यामाह—

अग्नीषोमा सवेदसा सहूती वनतं
गिरः। सं देवत्रा बभूवथुः।, इति।

हेऽग्नीषोमौ गिरोऽस्मदीयाः स्तुतीर्वनतं भजतम्। कीदृशौ, सवेदसा समानज्ञानयुक्तौ, सहूती समानाह्वानयुक्तौ, देवत्रा देवेषु मध्ये संबभूवथुर्युवां संभूयैव सन्तौ न कदाचिदप्यन्योन्यं वियुक्तावित्यर्थः ॥

तत्रैव याज्यामाह—

युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू
अधत्तम् । युवꣳ सिन्धूꣳरभिशस्तेरव-
द्यादग्नीषोमावमुञ्चतं गृभीतान् ।, इति।

हे सोम त्वमग्निश्चेत्येतौ युवां सक्रतू समानसंकल्पौ सन्तौ दिवि एतानि रोचनानि नक्षत्रादीनि अधत्तमस्थापयतम्। हेऽग्नीषोमौ युवां गृभीतान्सिन्धू-

*न्मध्योदकादिनिमित्तेनापूर्णत्वापवादेन पङ्कादिरूपेण दुष्टेन दोषेण च गृहीताः सर्वा नदीरभिशस्तेस्तस्मादपवादादवद्यात्पङ्कादिदुष्टदोषाच्चामुञ्चतं मोचितवन्तौ। यद्यप्येतत्सर्वमीश्वरकृत्यं तथाऽपि तद्रूपत्वेनैनौ स्तूयेते ॥

"अग्नीषोमीयमष्टाकपालं निर्वपेद्ब्रह्मवर्चसकामः" इत्यत्र पुरोनुवाक्यामाह—

अग्नीषोमाविमꣳ सु मे शृणुतं वृषणा हवम्। प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः॥, इति।

हेऽग्नीषोमौ वृषणा कामानां वर्षयितारौ युवां मे मदीयमिमं हवमाह्वानं सुष्ठु शृणुतं, सूक्तानि अस्मदीयानि प्रतिहर्यतं मनसा प्रतिगृह्णीतं, दाशुषे हविर्दत्तवते यजमानाय मयः सुखं भवतं संपादयतम् ॥

तत्रैव याज्यामाह—

आऽन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः। अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम्॥, इति।

मातरिश्वा वायुरन्यं युवयोरेकमग्निं दिवो द्युलोकस्थादादित्यादाजभाराऽऽहृतवान्। तथा चान्यत्र मन्त्र आम्नायते—" आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः " इति। श्येनो गायत्र्याः पक्षिरूपावतारोऽन्यं युवयोरेकं सोममद्रेः परि पर्वतवदुन्नततमस्य द्युलोकस्योपरि अमथ्नात्सोमरक्षकाणां तत्रत्यानां मन्थनं विलोडनं पराजयरूपं क्षोभं कृत्वा समानीतवानित्यर्थः। एतच्च "कद्रूश्च वै सुपर्णी च" इत्यस्मिन्ननुवाके समाम्नातम्। हेऽग्नीषोमौ युवां ब्रह्मणा वावृधाना मन्त्रेण वर्धमानौ यज्ञार्थमुरुं लोकं विस्तीर्णं स्थानं चक्रथुरु कृतवन्तावेव यजमानस्य फलभूतं लोकं संपादितवन्तावित्यर्थः॥

तत्रैव विकल्पितां याज्यामाह—

अग्नीषोमा हविषः प्रस्थितस्य वीतꣳ हर्यतं वृषणा जुषेथाम्। सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः॥, इति।

हेऽग्नीषोमौ वृषणा कामानां वर्षयितारौ युवां प्रस्थितस्य समर्पितस्य हविषः सारं वीतं प्राप्नुतं हर्यतं प्रतिगृह्णीतं जुषेथां सेवेथां, सुशर्माणा शोभनसुखयुक्तौ

* रथ्योदकादि। आ वोदकादि। इति ख पुस्तकस्थ पाठान्तरे।

१ क. घ च. सूक्तसदृशानि।

स्ववसा शोभनरक्षणोपेतौ भूतं भवतम् । हि यस्मादेवं तस्मादथानन्तरं यजमानाय यजमानार्थं शं सुखं योः पुत्रादिभिश्रणं च धत्तं कुरुतम् ॥

" सोमाय वाजिने श्यामाकं चरुं निर्वपेत् " इत्यत्र याज्यानुवाक्ययोः प्रतीके दर्शयति—

आ प्यायस्व सं ते ।, इति ।

आ प्यायस्व समेतु त इत्येषा पुरोनुवाक्या । सं ते पयाꣳसीत्येषा याज्या । एते उभे चतुर्थकाण्डस्य द्वितीयप्रपाठके "मा नो हिꣳसीज्जनिता" इत्यस्मिन्ननुवाके समाम्नास्येते अतस्तत्रैव व्याख्यास्येते ॥

"ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद्ग्रामकामः" इत्यत्र पुरोनुवाक्यामाह—

गणानां त्वा गणपतिꣳ हवामहे कविं कवीना-
मुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत
आ नः शृण्वन्नूतिभिः सीद सादनम् ।, इति ।

ब्रह्मणां ब्रह्मणस्पते हे कृत्स्नमन्त्रपते गणानां गणपतिं कृत्स्नदेवगणस्वामिनं त्वां हवामह आह्वयामः। कीदृशं त्वां, कविं कवीनां विदुषां मध्ये प्रशस्तं विद्वांसम्, उपमश्रवस्तममुपमानत्वेन श्रवः कीर्तिर्यस्यासावुपमश्रवाः, सर्वगुणसंपन्नत्वेनायमेव सर्वेषां पदार्थानामुपमानमित्येतादृशी कीर्तिः, अतिशयेनोपमश्रवा उपमश्रवस्तमस्तादृशं, राज्ञां मध्ये ज्येष्ठो ज्येष्ठराजस्तादृशम् । यथोक्तगुणोपेतस्त्वं नोऽस्माकमूतिभिः पालनैर्निमित्तभूतैर्युक्तः सन्सादनमस्मिन्कर्मण्युपवेशनमासीद प्राप्नुहि ॥

तत्रैव याज्यामाह—

स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं
भरते धना नृभिः । देवानां यः पितरमाविवा-
सति श्रद्धामना हविषा ब्रह्मणस्पतिम् ।, इति ।

स इत्स एव यजमानो जनेन किंकरादिना युक्तं वाजमन्नं भरते दधाति । स एव विशा करप्रदया प्रजया सहितं वाजं भरते । स एव ब्राह्मणादिजन्मना सहितं वाजं भरते । स एव पुत्रैः सहितं वाजं भरते । स एव नृभिर्बन्धुभिः सहितानि धना द्रव्याणि भरते । यो यजमानः श्रद्धामनाः श्रद्धायुक्तमनस्को देवानां पितरं पालयितारं ब्रह्मणस्पतिं हविषा स्वकीयेनाऽऽविवासति आ समन्ताद्विशेषेण परिचरति, स इज्जनेनेति पूर्वत्रान्वयः ॥

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

अत्रैव विकल्पितां याज्यामाह। यद्वा तत्रैवोपहोममन्त्रमाह—

स सुष्टुभा स ऋक्वता गणेन वलꣳ रु-
रोज फलिगꣳ रवेण। बृहस्पतिरुस्रिया
हव्यसूदः कनिक्रदद्वावशतीरुदाजत्।, इति।

स देवः सुष्टुभा शोभना स्तुभः सामावयवाः स्तोभा यस्य मन्त्रगणस्य सोऽयं सुष्टुस्तेन सुष्टुभा, ऋक्वता, ऋचो बहुविधा यस्मिन्मन्त्रगणे स ऋक्वांस्तेन ऋक्वता, रवेण ध्वनियुक्तेन गणेन मन्त्रसमूहेन तुष्टः सन्रुरोज बभञ्जेत्यन्वयः। कं, बलं फलिगं फलमस्यास्तीति फली यजमानस्तं गच्छति प्राप्नोतीति फलिगस्तादृशं बलं प्रबलं प्रतिबन्धं रुरोज। हव्यसूदो हविर्भोक्ता कनिक्रदद्हो स्वादुतमं हविरिति क्रन्दनं कुर्वाणो बृहस्पतिर्वावशती भृशमस्तनत्वेन वत्सान्प्रति हम्बारवं कुर्वतीरुस्रिया गा उत्कर्षेणैतदीयगृहं प्रति प्रेरयति। स इत्यभ्यास आदरार्थः॥

"एतामेव निर्वपेद्यः कामयेत भ्रातृव्यं विनाशयेयमिति मारुती याज्यानुवाक्ये कुर्यात्" इति विहितयोः प्रतीके दर्शयति—

मरुतो यद्ध वो दिवो या वः शर्म।, इति।

मरुतो यद्ध व इत्यनुवाक्या। या वः शर्मेति याज्या। एतच्चोभयं प्रथमकाण्डस्य पञ्चमप्रपाठके व्याख्यातम्॥

*"अर्यम्णे चरुं निर्वपेत्सुवर्गकामः" इति चतुर्थेऽनुवाके यद्विहितं तत्र पुरो-*
नुवाक्यामाह—

अर्यमाऽऽयाति वृषभस्तुविष्मान्दाता वसूनां
पुरुहूतो अर्हन्। सहस्राक्षो गोत्रभिद्वज्रबाहु-
रस्मासु देवो द्रविणं दधातु।, इति।

"असौ वा आदित्योऽर्यमा" इतिश्रुतेरर्यमशब्द आदित्यं ब्रूते। स चेन्द्राभेदोपचारेणेन्द्रधर्मैः स्तूयते। वृषभः कामानां वर्षयिता। तुविष्मान्महाबलः। वसूनां धनानां दाता। पुरुषु बहुषु यज्ञेषु हूत आहूतः। अर्हन्स्वर्गं[1] दातुं[2] योग्यः। सहस्राक्षत्वादिकं स्पष्टम्॥

तत्रैव याज्यामाह—

ये तेऽर्यमन्बहवो देवयानाः पन्थानो राज-

१ क. घ च ॰न्स्वर्गन्तु यो॰। २ ङ. ॰र्गं गन्तु यो॰।

न्दिव आचरन्ति । तेभिर्नो देव महि शर्म
यच्छ शं न एधि द्विपदे शं चतुष्पदे ।, इति ।

हेऽर्यमन्नाजंस्ते त्वदीया देवयाना देवैर्गन्तुमर्हा ये बहवः पन्थान आ दिवः स्वर्गपर्यन्तं चरन्ति गच्छन्ति हे देव तेभिस्तैः पथिभिर्नोऽस्माकं महि शर्म महत्सुखं यच्छ, द्विपदे मनुष्याय नोऽस्माकं संबन्धिने शमेधि सुखकरो भव, चतुष्पदे गवादिरूपाय शमेधि । "अर्यम्णे चरुं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युः", "अर्यम्णे चरुं निर्वपेद्यः कामयेत स्वस्ति जनतामियाम्" इत्यनयोरपि एते एव याज्यानुवाक्ये ॥

" यो राजन्य आनुजावरः स्यात्तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेत् " इत्यत्र पुरोनुवाक्यामाह—

बुध्नादग्रमङ्गिरोभिर्गृणानो वि पर्वतस्य दृꣳ-
हितान्यैरत् । रुजद्रोधाꣳसि कृत्रिमाण्ये-
षाꣳ सोमस्य ता मद इन्द्रश्चकार ।, इति ।

बुध्नादग्रं कर्मोपक्रमादारभ्य समाप्तिपर्यन्तमङ्गिरोभिर्गृणानोऽङ्गिरोनाम्ना मुनिना सदृशैर्ऋत्विग्भिः स्तूयमान इन्द्रः पर्वतस्य पर्वतवत्सर्वाधारस्य राज्ञो दृंहितानि समानैरन्यैः क्रियमाणान्द्रोहविशेषान्व्यैरद्विगतानकरोत् । किं कुर्वन् । एषां समानानां कृत्रिमाणि बलात्संपादितानि रोधांसि श्रैष्ठ्यप्रतिबन्धकान्यवरोधनानि रुजज्जम्भयन् । कदैतत्सर्वमकरोदित्युच्यते । सोमस्य मदे सोमपानसंबन्धिनि मदे सतीन्द्रस्ता चकार तानि द्रोहनिवारणादीनि कृतवान् ॥

तत्रैव याज्यामाह—

बुध्नादग्रेण वि मिमाय मानैर्वज्रेण खान्य-
तृणन्नदीनाम् । वृथाऽसृजत्पथिभिर्दीर्घ-
याथैः सोमस्य ता मद इन्द्रश्चकार ।, इति ।

इन्द्रो नदीनां बुध्नादग्रेण मूलादग्रपर्यन्तं मानद(नैर्द)ण्डैर्विमिमाय विशेषेण निश्चितवान् । निश्चित्य च नदीनां खानि जलप्रवाहार्थानवकाशान्प्रति वज्रेणातृणज्जलप्रवाहनिरोधकपर्वतान्वज्रेण हिंसितवान् । दीर्घयाथैर्दीर्घाणां प्रवाहाणां गमनोपयुक्तैः पथिभिर्मार्गैर्युक्तान्नदीविशेषानसृजत् । न चात्रास्य

१ ख. °तादीन्व° । २ ख च. न तत्रा° ।

भूयान्प्रयासः किंतु वृथा। यथा लोके नखैस्तृणच्छेदादिव्यर्थचेष्टामायासमन्तरेण जनाः कुर्वन्ति तद्वदित्यर्थः। सोमस्येत्यादि पूर्ववत्। नखालम्भनमात्रेण महतीर्नदीः सृजत इन्द्रस्य श्रैष्ठ्यप्रापणे कः प्रयास इत्यभिप्रायः॥

"यो ब्राह्मण आनुजावरः स्यात्तस्मा एतं बार्हस्पत्यमानुषूकं चरुं निर्वपेत्" इत्यत्र पुरोनुवाक्यामाह—

प्र यो जज्ञे विद्वाꣳ अस्य बन्धुं विश्वानि देवो जनिमा विवक्ति। ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा स्वधयाऽभि प्र तस्थौ।, इति।

विद्वान्सर्वज्ञो यो बृहस्पतिरस्य ब्राह्मणस्य यजमानस्य बन्धुं समानानां मध्येऽनुकूलं प्रजज्ञे प्रकर्षेण जानाति। तदीयमभिज्ञत्वं कथं निश्चीयत इति चेदुच्यते। यतोऽयं देवो विश्वानि जनिमा सर्वेषां प्राणिनां सर्वाणि जन्मानि विवक्ति पुनः पुनः कथयति तस्मादभिज्ञत्वं निश्चीयते। अ(सोऽ)भिज्ञो बृहस्पतिर्ब्रह्मणो वेदस्य मध्यान्नीचादुच्चा मध्यमभागात्प्रथमभागादुत्तमभागाच्च ब्रह्म परिवृढं कर्मोज्जभारोद्धृतवान्। स्वधयाऽमृतेन श्रैष्ठ्यप्रापणलक्षणेनाभिप्रतस्थौ, एनं यजमानमभिलक्ष्य प्रस्थानं कृतवान्। समानानां मध्ये श्रैष्ठ्यं दातुं यजमानसमीपे समागतवानित्यर्थः॥

तत्रैव याज्यामाह—

महान्मही अस्तभायद्वि जातो द्याꣳ सद्म पार्थिवं च रजः। स बुध्नादाष्ट जनुषाऽभ्यग्रं बृहस्पतिर्देवता यस्य सम्राट्।, इति।

महान्सामर्थ्येनाधिको बृहस्पतिर्मही मही पृथिव्यन्तरिक्षे द्यां द्युलोकं सद्म मनुष्याणां गृहं पार्थिवं रजश्च जात उत्पत्तिमात्रेण व्यस्तभायद्विविधं स्तम्भितवान्। यद्यप्येतत्सर्वमीश्वरस्यैव कर्म तथाऽपि तदभेदेन बृहस्पतिः स्तूयते। यद्वा परमेश्वरानुग्रहादयमेव लोकत्रयाधिकं स्वस्वव्यापारक्षममकरोत्। यस्य यजमानस्य सम्राड्भ्योक्तरीत्या साम्राज्यं प्राप्तो बृहस्पतिर्देवता स यजमानो जनुषा जन्ममात्रेणैव बुध्नादप्रमाभि आयुषोऽनुष्ठीयमानकर्मणो वा मूलादारभ्य समाप्तिपर्यन्तमाष्ट व्याप्तवान्। ईदृशेन बृहस्पत्यनुग्रहेण युक्तो यजमानः सर्वथा श्रैष्ठ्यं प्राप्नोत्येवेत्यभिप्रायः॥

तत्रैव विकल्पितां याज्यामाह—

बुध्नाद्यो अग्रमभ्यर्त्योजसा बृहस्पतिमा विवासन्ति देवाः । भिनद्वलं वि पुरो दर्दरीति कनिक्रदत्सुवरपो जिगाय ॥, इति ॥

यो बृहस्पतिर्जगतो देहस्य कर्मणो वा बुध्नादारभ्याग्रमभ्यर्त्यवसानमोजसा स्वबलेन प्राप्नोति तं बृहस्पतिमिमं देवा आविवासन्ति आगत्य विशेषेण वासयन्ति परिचरन्तीत्यर्थः । बृहस्पतिर्बलं यजमानसंबन्धिनां मध्ये प्रबलं पुरुषं भिनद्भिनत्ति प्रातिकूल्यान्निवारयति, पुरः समानानां पुराणि विशेषेण दर्दरीति प्रातिकूल्यनिवारणाय पुनः पुनर्दारितवान् । कनिक्रददुत्साहेन शब्दं कुर्वन्, सुवः, तन्महदर्श श्रेष्ठपमपस्तन्साधनं सर्व जलक्षेत्रादिकं जिगाय जितवान्यजमानार्थे संपादितवानित्यर्थः ॥

अत्र विनियोगसंग्रहः—

"यज्ञविभ्रष्टयागे तु याज्याः स प्र निकेति च ।
इन्द्रमिन्द्रं चैन्द्रयागे त्वं नः सौम्यचरौ तथा ॥ १ ॥
अग्नी कामप्रापकेऽग्नी ब्रह्मवर्चसिनस्त्रयम् ।
आप्या सं ते चरौ सौम्ये गणा ग्रामप्रदे त्रयम् ॥ २ ॥
मरु यागे नाशकेष्टावर्यमाऽऽर्यमणे चरौ ।
बुध्नादैन्द्रे प्र यस्तिस्रो बार्हस्पत्यानुपूर्वके ।
पञ्चविंशतिन(र)प्रोक्ता अनुवाके चतुर्दशे ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥

१ क. ख. घ. ङ. वेदस्य ।

( अथ द्वितीयाष्टके चतुर्थः प्रपाठकः । )

( तत्र प्रथमोऽनुवाक । )

हरिः ॐ ।

देवा मनुष्याः पितरस्तेऽन्यत आसन्न-
सुरा रक्षाꣳसि पिशाचास्तेऽन्यतस्तेषां देवाना-
मुत यदल्पं लोहितमकुर्वन्तद्रक्षाꣳसि रात्रीभि-
रसुभ्नन्तान्त्सुब्धान्मृतानभि व्यौच्छत्ते देवा
अविदुर्यो वै नोऽयं म्रियते रक्षाꣳसि वा इमं
घ्नन्तीति ते रक्षाꣳस्युपामन्त्रयन्त तान्यब्रुवन्वरं
वृणामहै यद् ( १ ) असुराञ्जयाम तन्नः सहा-
सदिति ततो वै देवा असुरानजयन्तेऽसुराञ्जि-
त्वा रक्षाꣳस्यपानुदन्त तानि रक्षाꣳस्यनृतमक-
र्तेति समन्तं देवान्पर्यविशन्ते देवा अग्नावना-
थन्त तेऽग्नये प्रवते पुरोडाशमष्टाकपालं निर-
वपन्नग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये
प्रवते निरवपन्यान्येव पुरस्ताद्रक्षाꣳसि ( २ )
आसन्तानि तेन प्राणुदन्त यदग्नये विबाधवते
यान्येवाभितो रक्षाꣳस्यासन्तानि तेन व्यबा-
धन्त यदग्नये प्रतीकवते यान्येव पश्चाद्रक्षाꣳ-
स्यासन्तानि तेनापानुदन्त ततो देवा अभव-

न्पराऽसुरा यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवते ( ३ ) अग्नये प्रतीकवते यदग्नये प्रवते निर्वपति य एवास्माच्छ्रेयान्भ्रातृव्यस्तं तेन प्र णुदते यदग्नये विबाधवते य एवैनेन सदृङ्तं तेन वि बाधते यदग्नये प्रतीकवते य एवास्मात्पापीयान्तं तेनाप नुदते प्र श्रेयाꣳसं भ्रातृव्यं नुदतेऽति सदृशं क्रामति नैनं पापीयानाप्नोति य एवं विद्वानेतयेष्ट्या यजते ( ४ ) ॥

( वृणामहै यत्पुरस्ताद्रक्षाꣳसि वपेदग्नये विबाधवत एवं चत्वारि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ प्रथमाष्टके चतुर्थः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

देवाः । मनुष्याः । पितरः । ते । अन्यतः । आसन् । असुराः । रक्षाꣳसि । पिशाचाः । ते । अन्यतः । तेषाम् । देवानाम् । उत । यत् । अल्पम् । लोहितम् । अकुर्वन् । तत् । रक्षाꣳसि । रात्रीभि-

रिति रात्रि–भिः। असृजन्। तान्। सुब्धान्। मृतान्। अभि। वीति। औच्छन्। ते। देवाः। अविदुः। यः। वै। नः। अयम्। म्रियते। रक्षांसि। वै। इमम्। घ्नन्ति। इति। ते। रक्षांसि। उपेति। अमन्त्रयन्त। तानि। अब्रुवन्। वरम्। वृणामहै। यत् (१)। असुरान्। जयाम। तत्। नः। सह। असत्। इति। ततः। वै। देवाः। असुरान्। अजयन्। ते। असुरान्। जित्वा। रक्षांसि। अपेति। अनुदन्त। तानि। रक्षांसि। अनृतम्। अकर्त। इति। समन्तमिति सम्–अन्तम्। देवान्। परीति। अविशन्। ते। देवाः। अग्नौ। अनाथन्त। ते। अग्नये। प्रवत इति प्र–वते। पुरोडाशम्। अष्टाकपालमित्यष्टा–कपालम्। निरिति। अवपन्। अग्नये। विबाधवत इति विबाध–वते। अग्नये। प्रतीकवत इति प्रतीक–वते। यत्। अग्नये। प्रवत इति प्र–वते। निरवपन्निति निः–अवपन्। यानि। एव। पुरस्तात्। रक्षांसि (२)। आसन्। तानि। तेन। प्रेति। अनुदन्त। यत्। अग्नये। विबाधवत इति विबाध–वते। यानि।

एव । अभितः । रक्षांसि । आसन् । तानि । तेन । वीति । अबाधन्त । यत् । अग्नये । प्रतीकवत इति प्रतीक—वते । यानि । एव । पश्चात् । रक्षांसि । आसन् । तानि । तेन । अपेति । अनुदन्त । ततः । देवाः । अभवन् । परेति । असुराः । यः । भ्रातृव्यवानिति भ्रातृव्य—वान् । स्यात् । सः । स्पर्धमानः। एतया । इष्ट्या । यजेत । अग्नये । प्रवत इति प्र—वते । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपेत् । अग्नये । विबाधवत इति विबाध—वते ( ३ ) । अग्नये । प्रतीकवत इति प्रतीक—वते । यत् । अग्नये । प्रवत इति प्र—वते । निर्वपतीति निः—वपति । यः । एव । अस्मात् । श्रेयान् । भ्रातृव्यः । तम् । तेन । प्रेति । नुदते । यत्। अग्नये । विबाधवत इति विबाध—वते । यः । एव । एनेन । सदृङ्ङिति स—दृङ् । तम् । तेन । वीति । बाधते । यत् । अग्नये । प्रतीकवत इति प्रतीक—वते । यः । एव । अस्मात् । पापीयान् । तम् । तेन । अपेति । नुदते । प्रेति । श्रेयांसम् । भ्रातृव्यम् । नुदते । अतीति । सदृशम् । क्रामति ।

( भ्रातृव्यवत इष्टिविधि )

न। एनम्। पापीयान्। आप्नोति। यः। एवम्। विद्वान्। एतया। इष्ट्या। यजते (४)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके चतुर्थप्रपाठके प्रथमोऽनुवाकः॥ १॥

---

( अथ द्वितीयकाण्डे चतुर्थ प्रपाठकः। )

( तत्र प्रथमोऽनुवाकः। )

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥ १॥
प्रपाठके द्वितीये च तृतीये चेष्टयः क्रमात्।
प्रोक्तास्तत्रावशिष्टास्तु वक्ष्यन्तेऽस्मिंश्चतुर्थके॥ २॥

चतुर्थस्य प्रथमानुवाके भ्रातृव्यवतः स्पर्धमानस्य त्रिहविष्कां कांचिदिष्टिं विधातुं प्रस्तौति—

देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षांसि पिशाचास्तेऽन्यतस्तेषां देवानामुत यदल्पं लोहितमकुर्वन्तद्रक्षांसि रात्रीभिरसुभ्नन्तान्त्सुब्धान्मृतानभि व्यौच्छत्ते देवा अविदुर्यो वै नोऽयं म्रियते रक्षांसि वा इमं घ्नन्तीति ते रक्षांस्युपामन्त्रयन्त तान्यब्रुवन्वरं वृणामहै यदसुराञ्जयाम तन्नः सहासदिति ततो वै देवा असुरानजयन्तेऽसुराञ्जित्वा रक्षांस्यपानुदन्त तानि रक्षांस्यनृतमकर्तेति समन्तं देवान्पर्यविशन्ते देवा अग्नावनाथन्त तेऽग्नये प्रवते पुरोडाशमष्टाकपालं निरवपन्नग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निरवपन्यान्येव पुरस्ताद्रक्षांस्यास-

न्तानि तेन प्राणुदन्त यदग्नये विबाध-
वते यान्येवाभितो रक्षाꣳस्यासन्तानि ते न
व्यबाधन्त यदग्नये प्रतीकवते यान्येव
पश्चाद्रक्षाꣳस्यासन्तानि तेनापानुदन्त
ततो देवा अभवन्परासुराः , इति ।

देवानामसुरादीनां च सैन्यद्वयं युद्धाय संनद्धमासीत् । असुराणां रक्षसां चास्त्येवान्तरजातिभेदः । तदीये युद्धे स्वल्पप्रहारेण देवानां शरीरे यल्लोहितमितरेऽकुर्वंस्तल्लोहितस्थानं रक्षांसि प्रतिदिनं रात्रिष्वागत्य केनचिद्विषादिप्रयोगेणासुभ्रन्क्षुभितं कृतवन्तः । तदानीमेव तेन क्षोभेण देवा म्रियन्ते । तान्मृतानभिलक्ष्य पश्चाद्व्यौच्छद्रात्रिः प्रभातं प्राप्तवती । ततो देवा रक्षसां कृत्यमिदमित्यवगत्य रक्षांस्युपामन्त्रयन्तोत्कोचं प्रतिश्रुत्य स्वाधीनानि कृतवन्तः । ततो रक्षांसि विजयफले भागं संप्रार्थ्य स्वसैन्यान्निर्गत्य देवसैन्यं प्रविष्टानि । ततो देवा असुराञ्जित्वा रक्षांस्यपनोदितवन्तः । तानि रक्षांसि देवा अनृतमकुर्वन्निति निश्चित्य प्रहर्तुं परितो वेष्टनमकुर्वन् । तदानीं देवा अग्नौ स्वकार्यसिद्धिमयाचन्त । याचित्वा त्रिहविष्कामिष्टिं निरवपन् । तत्र प्रथमस्य हविषः प्रवानग्निर्देवता, याज्यापुरोनुवाक्ययोः प्रप्रायमग्निर्भरतस्येत्यादिकयोः श्रुतः प्रशब्दो यस्याग्नेरस्ति सोऽयं प्रवान् । द्वितीयस्य हविषो विबाधवानग्निर्देवता, वि पाजसा पृथुनेत्यस्मिन्मन्त्रे श्रूयमाणो विबाधशब्दो यस्याग्नेरस्ति सोऽयं विबाधवान् । तृतीयस्य हविषः प्रतीकवानग्निर्देवता, स त्वमग्ने प्रतीकेनेति मन्त्रे प्रतीकशब्दो यस्याग्नेरस्ति सोऽयं प्रतीकवान् । तत्र प्रवतोऽग्नेरिष्ट्या पूर्वस्यां दिशि रक्षांसि प्रणोदितवन्तः । विबाधवतोऽग्नेरिष्ट्या दक्षिणोत्तरयोः पार्श्वयो रक्षांसि विबाधितवन्तः । प्रतीकवतोऽग्नेरिष्ट्या प्रतीच्यां दिशि रक्षांस्यपनोदितवन्तः । ततो देवा विजयिनोऽभवन्नसुराः पराजिता अभवन् ॥

इष्टिं विधत्ते—

यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान एतयेष्ट्या
यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेद-
ग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये
प्रवते निर्वपति य एवास्माच्छ्रेयान्भ्रातृव्यस्तं

तेन प्र णुदते यदग्नये विबाधवते य एवैनेन सदृङ्तं तेन वि बाधते यदग्नये प्रतीकवते य एवास्मात्पापीयान्तं तेनाप नुदते , इति।

त्रिविधो हि भ्रातृव्यः, प्रबलः समानबलो हीनबलश्चेति। तेषां त्रयाणां क्रमेण त्रिभिर्हविर्भिरपाकरणं भवति॥

वेदनं प्रशंसति—

प्र श्रेयाꣳसं भ्रातृव्यं नुदतेऽति सदृशं क्रामति नैनं पापीयानाप्नोति य एवं विद्वानेतयेष्ट्या यजते॥, इति॥

भ्रातृव्यं श्रेयांसं प्रणुदते, सदृशमतिक्रामति, पापीयांस्तु न प्राप्नोत्येव॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः॥ १॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः। )

---

देवासुराः संयत्ता आसन्ते देवा अब्रुवन्यो नो वीर्यावत्तमस्तमनु समारभामहा इति त इन्द्रमब्रुवन्त्वं वै नो वीर्यावत्तमोऽसि त्वामनु समारभामहा इति सोऽब्रवीत्तिस्रो म इमास्तनुवो वीर्यावतीस्ताः प्रीणीताथासुरानभि भविष्यथेति ता वै ब्रूहीत्यब्रुवन्नियमꣳहोमुगियं विमृधेयमिन्द्रियावती ( १ ) इत्यब्रवीत्त इन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निरवपन्निन्द्राय वैमृधायेन्द्रायेन्द्रियावते यदिन्द्रा-

याꣳहोमुचे निरवपन्नꣳहस एव तेनामुच्यन्त यदिन्द्राय वैमृधाय मृध एव तेनापाघ्नत यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनाऽऽत्मन्नदधत त्रयस्त्रिꣳशत्कपालं पुरोडाशं निरवपन्त्रयस्त्रिꣳशद्वै देवतास्ता इन्द्र आत्मन्ननु समारम्भयत भूत्यै ( २ ) तां वाव देवा विजितिमुत्तमामसुरैर्व्यजयन्त यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावतेऽꣳहसा वा एष गृहीतो यस्माच्छ्रेयान्भ्रातृव्यो यदिन्द्रायाꣳहोमुचे निर्वपत्यꣳहस एव तेन मुच्यते मृधा वा एषोऽभिषण्णो यस्मात्समानेष्वन्यः श्रेयानुत ( ३ ) अभ्रातृव्यो यदिन्द्राय वैमृधाय मृध एव तेनाप हते यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनाऽऽमन्धत्ते त्रयस्त्रिꣳशत्कपालं पुरोडाशं निर्वपति त्रयस्त्रिꣳशद्वै देवतास्ता एव यजमान आत्मन्ननु समारम्भयते भूत्यै सा वा एषा विजितिर्नामेष्टिर्य एवं विद्वानेतयेष्ट्या यजत उत्तमामेव विजितिं भ्रातृव्येण वि जयते ( ४ ) ॥

( भ्रातृव्यवत्तो विजितिसञ्ज्ञकेष्टिविधि )

( इन्द्रियावती भूत्या उतैकान्नपञ्चाशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाक । )

---

देवासुरा इति देव—असुराः । संयत्ता इति सं—यत्ताः । आसन् । ते । देवाः । अब्रुवन् । यः । नः । वीर्यावत्तम इति वीर्यावत्—तमः । तम् । अन्विति । समारंभामहा इति सम्—आरंभामहै । इति । ते । इन्द्रम् । अब्रुवन् । त्वम् । वै । नः । वीर्यावत्तम इति वीर्यावत्—तमः । असि । त्वाम् । अन्विति । समारंभामहा इति सम्—आरंभामहै । इति । सः । अब्रवीत् । तिस्रः । मे । इमाः । तनुवः । वीर्यावतीरिति वीर्य—वतीः । ताः । प्रीणीत । अथ । असुरान् । अभीति । भविष्यथ । इति । ताः । वै । ब्रूहि । इति । अब्रुवन् । इयम् । अꣳहोमुगित्यꣳहः—मुक् । इयम् । विमृधेति वि—मृधा । इयम् । इन्द्रियावतीतीन्द्रिय—वती ( १ ) । इति । अब्रवीत् । ते । इन्द्राय । अꣳहोमुच इत्यꣳहः—मुचे । पुरोडाशम् । एकादशकपालमित्येकादश—कपालम् । निरिति । अवपन् । इन्द्राय । वैमृधाय । इन्द्राय । इन्द्रियावत इतीन्द्रि-

य—वते । यत् । इन्द्राय । अंहोमुच इत्यंहः— मुचे । निरवपन्निति निः—अवपन् । अंहसः । एव । तेन । अमुच्यन्त । यत् । इन्द्राय । वैमृधाय । मृधः । एव । तेन । अपेति । अघ्नत । यत् । इन्द्राय । इन्द्रियावत इतीन्द्रिय—वते । इन्द्रियम् । एव । तेन । आत्मन् । अदधत । त्रयस्त्रिंशत्कपालमिति त्रय-स्त्रिंशत्—कपालम् । पुरोडाशम् । निरिति । अव-पन् । त्रयस्त्रिंशदिति त्रयः—त्रिंशत् । वै । देवताः । ताः । इन्द्रः । आत्मन् । अन्विति । समारम्भय-तेति सम्—आरम्भयत । भूत्यै (२) । ताम् । वाव । देवाः । विजितिमिति वि—जितिम् । उत्तमामित्यु-त्—तमाम् । असुरैः । वीति । अजयन्त । यः । भ्रातृव्यवानिति भ्रातृव्य—वान् । स्यात् । सः । स्पर्धमानः । एतया । इष्ट्या । यजेत । इन्द्राय । अंहोमुच इत्यंहः—मुचे । पुरोडाशम् । एकादश-कपालमित्येकादश—कपालम् । निरिति । वपेत् । इन्द्राय । वैमृधाय । इन्द्राय । इन्द्रियावत इतीन्द्रि-य—वते । अंहसा । वै । एषः । गृहीतः । यस्मात् । श्रेयान् । भ्रातृव्यः । यत् । इन्द्राय । अंहोमुच इत्यंहः—मुचे । निर्वपतीति निः—वपति । अंह-

सः। एव। तेन॑। मुच्यते। मृधा। वै। एषः। अभिषण्ण इत्यभि–सन्नः। यस्मा॑त्। समानेषु॑। अन्यः। श्रेया॑न्। उत (३)। अभ्रा॑तृव्यः। यत्। इन्द्रा॑य। वैमृधाय॑। मृध॑ः। एव। तेन॑। अपेति॑। हते। यत्। इन्द्रा॑य। इन्द्रियाव॑त इती॑न्द्रिय–वते। इन्द्रियम्। एव। तेन॑। आत्मन्। धत्ते। त्रय॑स्त्रिंश-शत्कपालमिति त्रय॑स्त्रिंश शत्–कपालम्। पुरोडा-श॑म्। निरिति॑। वपति। त्रय॑स्त्रिंशदिति त्रय॑ः–त्रिंशत्। वै। देवता॑ः। ताः। एव। यज॑मानः। आत्मन्। अन्विति॑। समार॑म्भयत इति॑ सम्–आर॑म्भयते। भूत्यै॑। सा। वै। एषा। विजि॑तिरिति वि–जि॑तिः। नाम॑। इष्टि॑ः। यः। एवम्। विद्वान्। एतया॑। इष्ट्या॑। यज॑ते। उत्तमामित्यु॑त्–तमाम्। एव। विजि॑तिमिति वि–जितिम्। भ्रातृ॑व्येण। वीति॑। जयते (४)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ द्वितीयकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः। )

आद्येऽनुवाके काम्येष्टिः स्पर्धमानस्य वर्णिता ॥

अथ द्वितीये तस्यैव विजितिसंज्ञामिष्टिं विधातुं प्रस्तौति—

देवासुराः संयत्ता आसन्ते देवा अब्रुवन्यो नो वीर्यावत्तमस्तमनु समारभामहा इति त इन्द्रमब्रुवन्त्वं वै नो वीर्यावत्तमोऽसि त्वामनु समारभामहा इति सोऽब्रवीत्तिस्रो म इमास्तनुवो वीर्यावतीस्ताः प्रीणीताथासुरानभि भविष्यथेति ता वै ब्रूहीत्यब्रुवन्नियमꣳहोमुगियं विमृधेयमिन्द्रियावती इत्यब्रवीत्त इन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निरवपन्निन्द्राय वैमृधायेन्द्रायेन्द्रियावते यदिन्द्रायाꣳहोमुचे निरवपन्नꣳहस एव तेनामुच्यन्त यदिन्द्राय वैमृधाय मृध एव तेनापाघ्नत यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनाऽऽत्मन्नदधत त्रयस्त्रिꣳशत्कपालं पुरोडाशं निरवपन्त्रयस्त्रिꣳशद्वै देवतास्ता इन्द्र आत्मन्ननु समारम्भयत भूत्यै तां वाव देवा विजितिमुत्तमामसुरेभ्योऽव्यजयन्त, इति।

युद्धायोद्युक्ता देवाः परस्परमिदमब्रुवन्नोऽस्माकं मध्ये योऽतिशयेन वीर्यवांस्तमनुसृत्य वयं सर्वे समारभामहै सम्यग्युद्धोपक्रमं कुर्व(र्म) इति। ततस्त इन्द्रमतिशयेन वीर्यवन्तं निश्चित्य तेनोक्तास्तदीयास्तिस्रस्तनूर्हविर्भिस्तर्पितवन्तः। तैश्च हविर्भिः क्रमेण पापविमोकं वैर्यपघातं सामर्थ्यधारणं च कृतवन्तः। त्रिष्वेकादशकपालपुरोडाशेषु मिलित्वा त्रयस्त्रिंशत्कपालः पुरोडाशः संपद्यते। तेन च त्रयस्त्रिंशत्संख्याकान्देवानिन्द्र आत्माधीनान्करोति। तच्चैश्वर्याय संपद्यते। ततो देवा असुरैः सह युद्धार्थं तां पूर्वोक्तां पापविमोकशत्रुवधेन्द्रियधारणरूपामुत्तमां विजितिं प्राप्नुवन्॥

विधत्ते—

यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं

( भ्रातृव्यवतो विजितिसञ्ज्ञकेष्टिविधिः )

निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावतेऽꣳहसा वा एष गृहीतो यस्माच्छ्रेयान्भ्रातृव्यो यदिन्द्रायाꣳहोमुचे निर्वपत्यꣳहस एव तेन मुच्यते मृधा वा एषोऽभिषण्णो यस्मात्समानेष्वन्यः श्रेयानुताभ्रातृव्यो यदिन्द्राय वैमृधाय मृध एव तेनाप हते यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनाऽऽत्मन्धत्ते त्रयस्त्रिꣳशत्कपालं पुरोडाशं निर्वपति त्रयस्त्रिꣳशद्वै देवतास्ता एव यजमान आत्मन्ननु समारम्भयते भूत्यै, इति।

पूर्वोक्तप्रवदादिविशेषणवदंहोमुगादिविशेषणानि याज्यानुवाक्यागतशब्दाभिप्रायेण वा स्वार्थपरत्वेन वा योजनीयानि। अंहोमुचे प्र भरेमा मनीषामित्यस्मिन्मन्त्रेऽस्त्यंहोमुक्शब्दः। वि न इन्द्र मृधो जहीत्यस्मिन्मन्त्रेऽस्ति विमृधशब्दः। इन्द्रियाणि शतक्रतो, इत्यस्मिन्मन्त्रेऽस्तीन्द्रियशब्दः। अर्थपरत्वं तु विस्पष्टम्। पूर्वोक्तेषु प्रवदादिष्वपि प्रणोदनवत्त्वं शत्रुविबाधवत्त्वं प्रत्यङ्मुखवत्त्वं[1] चेत्यर्थपरत्वं योज्यम्। यस्माद्यजमानाद्भ्रातृव्यः श्रेयान्भवति स एव यजमानः पाप्मना गृहीतो भवति। स च प्रथमहविषा पापान्मुच्यते। समानेषु मध्ये यस्माद्यजमानादन्यः श्रेयान्भवति सोऽन्यो यद्यप्यभ्रातृव्यस्तथाऽप्येषो[2]ऽश्रेयान्यजमानः श्रेयस्त्वम( मा )त्रसंपादितवैरित्वेन[3] तेनान्येनाभिषण्णोऽभिभूतो भवति, तदीयश्रेयस्त्वमसहमानः सन्नहमभिभूतोऽस्मीति क्लिश्नाति। स तु द्वितीयेन हविषा मृधस्तादृशाञ्शत्रूनपहते। तृतीयेन हविषेन्द्रियधारणं भवति। पूर्ववत्समुदितया त्रयस्त्रिंशत्संख्यया यजमानस्य सर्वा देवताः स्वाधीना भवन्ति। तच्च भूत्यै संपद्यते॥

इष्टेर्नामोपदिश्य तद्वेदनं प्रशंसति—

सा वा एषा विजितिर्नामेष्टिर्य एवं विद्वानेतयेष्ट्या यजत उत्तमामेव विजितिं भ्रातृव्येण वि जयते॥, इति॥

---

१ ख. च. प्राङ्मुखवत्त्व। २ क. घ. ङ. 'प्येष श्रे'। ३ घ ङ. 'मत्रास'। ४ ख. च. 'रित्व ते'।

विशेषेण जयन्त्यनयेति विजितिः । एतद्वेदिता भ्रातृव्येण सह युद्ध्वा
[ता]ं पूर्वोक्तां पापमोक्षादिरूपामुत्तमां विजितिं प्राप्नोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-
दीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके
द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ द्वितीयाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः । )

देवासुराः संयत्ता आसन्तेषां गायत्र्योजो
बलमिन्द्रियं वीर्यं प्रजां पशून्त्संगृह्याऽऽदायाँ-
पक्रम्यातिष्ठत्तेऽमन्यन्त यतरान्वा इयमुपाव-
र्त्स्यति त इदं भविष्यन्तीति तां व्यह्वयन्त
विश्वकर्मन्निति देवा दाभीत्यसुराः सा नान्य-
तरांश्चनोपावर्तत ते देवा एतद्यजुरपश्यन्नो-
जोऽसि सहोऽसि बलमसि ( १ ) भ्राजोऽसि
देवानां धाम नामासि विश्वमसि विश्वायुः
सर्वमसि सर्वायुरभिभूरिति वाव देवा असुराणा-
मोजो बलमिन्द्रियं वीर्यं प्रजां पशूनवृञ्जत
यद्गायत्र्यपक्रम्यातिष्ठत्तस्मादेतां गायत्रीतीष्टि-
माहुः संवत्सरो वै गायत्री संवत्सरो वै तदप-
क्रम्यातिष्ठद्यदेतया देवा असुराणामोजो बल-
मिन्द्रियं वीर्यम् ( २ ) प्रजां पशूनवृञ्जत
तस्मादेतां संवर्ग इतीष्टिमाहुर्यो भ्रातृव्यवा-

न्स्यात्स स्पर्धमान एतयेष्ट्या यजेताग्नये संवर्गाय पुरोडाशमष्टाकपालं निर्वपेत्तꣳ शृतमासन्नमेतेन यजुषाऽभि मृशेदोजं एव बलमिन्द्रियं वीर्यं प्रजां पशून्भ्रातृव्यस्य वृङ्क्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति ( ३ ) ॥

( बलमस्येतया देवा असुराणामोजो बलमिन्द्रियं वीर्यं पञ्चचत्वारिꣳशच्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके तृतीयोनुवाक ।)

देवासुरा इति देव—असुराः । संयत्ता इति सं—यत्ताः । आसन् । तेषाम् । गायत्री । ओजः । बलम् । इन्द्रियम् । वीर्यम् । प्रजामिति प्र—जाम् । पशून् । संगृह्येति सं—गृह्य । आदायेत्या—दाय । अपक्रम्येत्यप—क्रम्य । अतिष्ठत् । ते । अमन्यन्त । यतरान् । वै । इयम् । उपावर्त्स्यतीत्युप—आवर्त्स्यति । ते । इदम् । भविष्यन्ति । इति । ताम् । वीति । अह्वयन्त । विश्वकर्मन्निति विश्व—कर्मन् । इति । देवाः । दाशि । इति । असुराः । सा । न । अन्यतरान् । चन । उपावर्ततेत्युप—आवर्तत । ते । देवाः ।

एतत् । यजुः । अपश्यन् । ओजः । असि । सहः । असि । बलम् । असि ( १ ) । भ्राजः । असि । देवानाम् । धाम । नाम । असि । विश्वम् । असि । विश्वायुरिति विश्व—आयुः । सर्वम् । असि । सर्वायुरिति सर्व—आयुः । अभिभूरित्यभि—भूः । इति । वाव । देवाः । असुराणाम् । ओजः । बलम् । इन्द्रियम् । वीर्यम् । प्रजामिति प्र—जाम् । पशून् । अवृञ्जत । यत् । गायत्री । अपक्रम्येत्यप—क्रम्य । अतिष्ठत् । तस्मात् । एताम् । गायत्री । इति । इष्टिम् । आहुः । संवत्सर इति सं—वत्सरः । वै । गायत्री । संवत्सर इति सं—वत्सरः । वै । तत् । अपक्रम्येत्यप—क्रम्य । अतिष्ठत् । यत् । एतया । देवाः । असुराणाम् । ओजः । बलम् । इन्द्रियम् । वीर्यम् (२)। प्रजामिति प्र—जाम् । पशून् । अवृञ्जत । तस्मात् । एताम् । संवर्ग इति सं—वर्गः । इति । इष्टिम् । आहुः । यः । भ्रातृव्यवानिति भ्रातृव्य—वान् । स्यात् । सः । स्पर्धमानः । एतया । इष्ट्या । यजेत । अग्नये । संवर्गायेति सं—वर्गाय । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपेत् । तम् । शृतम् । आसन्नमित्या—सन्नम् । एतेन । यजुषा ।

( भ्रातृव्यवत स्पर्धमानस्य सवर्गेष्टिविधि )

अभीति । मृशेत् । ओजः । एव । बलम् । इन्द्रियम् । वीर्यम् । प्रजामिति प्र—जाम् । पशून् । भ्रातृव्यस्य । वृङ्क्ते । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अथ द्वितीयकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाक । )

---

द्वितीये विजयार्थेष्टिः प्रोक्ता विजितिनाम(मि)का ॥

अथ तृतीये भ्रातृव्यवतः स्पर्धमानस्य संवर्गेष्टिं विधित्सुरादौ तदङ्गभूतं मन्त्रं पठितुं प्रस्तौति—

देवासुराः संयत्ता आसन्तेषां गायत्र्योजो बलमिन्द्रियं वीर्यं प्रजां पशून्त्संगृह्याऽऽदायापक्रम्यातिष्ठत्तेऽमन्यन्त यतरान्वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति तां व्यह्वयन्त विश्वकर्मन्निति देवा दाभीत्यसुराः सा नान्यतरांश्चनोपावर्तत ते देवा एतद्यजुरपश्यन्, इति ।

ओजस्त्वगसृङ्मांसादिधातुभ्यो जातोऽष्टमो धातुः । तथा च संप्रदायविद्भिरुक्तम्—"ओजो नामार्ष्टमीदशा" इति । बलं शरीरशक्तिः । इन्द्रियं दृष्ट्यादिपाटवम् । वीर्यमुत्साहः । प्रजाः पुत्रादिकाः । पशवो गवादिकाः । देवासुरेषु युद्धार्थं गतेषु तदीयानोजःप्रभृतीन्षट्पदार्थान्गायत्री संगृह्य तदुभयेभ्योऽपक्रम्य दूरे स्थितवती । तां दृष्ट्वा ते देवाश्चासुराश्चैवममन्यन्त—उभयोर्वर्गयोर्मध्ये यतरान्यद्वर्गस्थितानियं गायत्री प्राप्स्यति तद्वर्गस्थिता इदं सर्वैश्वर्यं प्राप्स्यन्तीति । तदुभयेऽपि तां गायत्रीं विलक्षणेन शब्देनाऽऽहूतवन्तः । हे

---

१ च 'व्येण स्प' । २ क. घ ङ 'वतस्पर्ध' । ३ क. घ. च. 'तुष्टष्ट' । ४ ख, ° ५ क. घ. ङ. युद्ध ग° ।

विश्वकर्मन्निति देवानामाह्वानं, हे दाभीत्यसुराणामाह्वानं, विश्वानि कर्माणि यस्याः सा विश्वकर्मा तत्संबोधनं हे विश्वकर्मन्निति। दभ्नोति विरोधिनो हिनस्तीति दाभी तत्संबोधनं हे दाभीति। सा गायत्र्यन्यतरानुभयोर्वर्गयोर्मध्ये कानपि पुरुषान्नैव प्राप्नोत्। ततस्ते देवास्तत्प्राप्त्युपायत्वेनैतद्यजुरपश्यन् ॥

तदिदं यजुः पठति—

ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः, इति।

अत्र सर्वात्मकत्वेन गायत्री स्तूयते। ओजोबले व्याख्याते। सहः सहिष्णुत्वं धैर्यम्। भ्राजो दीप्तिः। देवानां धाम स्वर्गः। नामेन्द्रादिकम्। विश्वमचेतनं कृत्स्नं जगत्। विश्वायुः कृत्स्नायुक्तम्। सर्वं चेतनरूपं कृत्स्नं जगत्। सर्वाण्यायुष्याणि यस्य चेतनस्य जगतस्तत्सर्वायुः। वैरिणोऽभिभवतीत्यभिभूः ॥

यथाम(जुर्म)न्त्रस्यार्थ(प्राप्यं) फलं दर्शयति—

इति वाव देवा असुराणामोजो बलमिन्द्रियं वीर्यं प्रजां पशूनवृञ्जत, इति।

अनेनैवोक्तेन स्तुतिरूपेण मन्त्रेण गायत्रीं प्रसाद्य तत्प्रसादादसुराणामोजआदिषट्कं विनाश्य स्वयं तल्लब्धवन्तः ॥

अथेष्टिं विधातुं प्रस्तौति—

यद्गायत्र्यपक्रम्यातिष्ठत्तस्मादेतां गायत्रीतीष्टिमाहुः संवत्सरो वै गायत्री संवत्सरो वै तदपक्रम्यातिष्ठद्यदेतया देवा असुराणामोजो बलमिन्द्रियं वीर्यं प्रजां पशूनवृञ्जत तस्मादेताꣳ संवर्ग इतीष्टिमाहुः, इति।

विधास्यमानाया इष्टेर्गायत्री संवर्ग इति नामद्वयम्। यस्माद्गायत्री सर्वेभूतभ्यपक्रम्य स्थित्वा मन्त्रेण स्तुता सती सर्वमानीतवती तस्मात्तेन मन्त्रेण ॰इय क्रियमाणेष्टिर्गायत्रीत्युच्यते। सा च गायत्री संवत्सररूपा

( गार्मुतचरुविधि )

तदीयाक्षरेष्वर्धमासेषु च चतुर्विंशतिसंख्याकायाः समानत्वात् । अतः संवत्सर एव तदानीं गायत्रीरूपेणापक्रम्यातिष्ठदिति संवत्सरात्मकत्वात्प्रशस्तेयमिष्टिः । यस्मादेतयेष्ट्या देवा असुराणां सबन्ध्योजआदिषट्कं वर्जितवन्तस्तस्मात्सम्यग्वृज्यते विनाश्यतेऽनेनेति संवर्गनामकोऽयं यागः ॥

इदानीं विधत्ते—

यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान
एतयेष्ट्या यजेताग्नये संवर्गाय पुरो-
डाशमष्टाकपालं निर्वपेत्, इति ।

संवर्गꣳ सꣳ रयि जयेति याज्यायां संवर्गशब्दश्रवणाद्वैरिसंबन्ध्योजआदिवर्जनहेतुत्वाच्चायमग्निः संवर्गः ॥

पूर्वपठितमोजोऽसीत्यादिमन्त्रं विनियुङ्क्ते—

तꣳ शृतमासन्नमेतेन यजुषाऽभि मृशेदोज एव
बलमिन्द्रियं वीर्यं प्रजां पशून्भ्रातृव्यस्य वृङ्क्ते
भवत्यात्मना पराऽस्य भ्रातृव्यो भवति॥, इति ॥

तं पुरोडाशं शृतं पक्वमासन्नं वेद्यामासादितम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ द्वितीयाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाक )

---

प्रजापतिः प्रजा असृजत ता अस्मात्सृष्टाः
पराचीरायन्ता यत्रावसन्ततो गर्मुदुदतिष्ठत्ता
बृहस्पतिश्चान्ववैताꣳ सोऽब्रवीद्बृहस्पतिरनया
त्वा प्र तिष्ठान्यथ त्वा प्रजा उपावर्त्स्यन्तीति तं
मादायन्निंष्ठत्ततो वै प्रजापतिं प्रजा उपावर्तन्त यः
हविरभिभू
...ात्तस्मा एतं प्राजापत्यं गार्मुतं

चरुं निर्वपेत्प्रजापतिम् ( १ ) एव स्वेन भागधेयेनोप धावति स एवास्मै प्रजां प्र जनयति प्रजापतिः पशूनसृजत तेऽस्मात्सृष्टाः पराञ्च आयन्ते यत्रावसन्ततो गर्मुदुदतिष्ठत्तान्पूषा चान्ववैताꣳ सोऽब्रवीत्पूषाऽनया मा प्र तिष्ठाथं त्वा पशव उपावर्त्स्यन्तीति मां प्र तिष्ठेति सोमोऽब्रवीन्मम वै ( २ ) अकृष्टपच्यमित्युभौ वां प्र तिष्ठानीत्यब्रवीत्तौ प्रातिष्ठत्ततो वै प्रजापतिं पशव उपावर्तन्त यः पशुकामः स्यात्तस्मा एतꣳ सौमापौष्णं गार्मुतं चरुं निर्वपेत्सोमापूषणावेव स्वेन भागधेयेनोप धावति तावेवास्मै पशून्प्र जनयतः सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून्प्र जनयति ( ३ ) ॥

( वपेत्प्रजापतिं वै दधाति पूषा त्रीणि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाक । )

प्रजापतिरिति प्रजा—पतिः । प्रजा इति प्र—

जाः । असृजत । ताः । अस्मात् । सृष्टाः । पराचीः । आयन् । ताः । यत्रं । अवंसन् । ततः । गर्मुत् । उदिति । अतिष्ठत् । ताः । बृहस्पतिः । च । अन्व-वैतामित्यनु—अवैताम् । सः । अब्रवीत् । बृहस्पतिः । अनया । त्वा । प्रेति । तिष्ठानि । अथ । त्वा । प्रजा इति प्र—जाः । उपावर्त्स्यन्तीत्युप—आवर्त्स्यन्ति । इति । तम् । प्रेति । अतिष्ठत् । ततः । वै । प्रजापतिमिति प्रजा—पतिम् । प्रजा इति प्र—जाः । उपावर्तन्तेत्युप—आवर्तन्त । यः । प्रजाकाम इति प्रजा—कामः । स्यात् । तस्मै । एतम् । प्राजा-पत्यमिति प्राजा—पत्यम् । गार्मुतम् । चरुम् । नि-रिति । वपेत् । प्रजापतिमिति प्रजा—पतिम् ( १ )। एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मै । प्रजामिति प्र—जाम् । प्रेति । जनयति । प्रजापतिरिति प्रजा—पतिः । प-शून् । असृजत । ते । अस्मात् । सृष्टाः । पराञ्चः । आयन् । ते । यत्रं । अवंसन् । ततः । गर्मुत् । उ-दिति । अतिष्ठत् । तान् । पूषा । च । अन्ववैता-मित्यनु—अवैताम् । सः । अब्रवीत् । पूषा । अनया । मा । प्रेति । तिष्ठ । अथ । त्वा । पशवः । उपाव-

स्स्यन्तीरुप—आवर्त्स्यन्ति । इति । माम् । प्रेति । तिष्ठ । इति । सोमः । अब्रवीत् । मम । वै ( २ )। अकृष्टपच्यमित्यकृष्ट—पच्यम् । इति । उभौ । वाम् । प्रेति । तिष्ठानि । इति । अब्रवीत् । तौ । प्रेति । अतिष्ठत् । ततः । वै । प्रजापतिमिति प्रजा—पतिम् । पशवः । उपावर्तन्तेत्युप—आवर्तन्त । यः । पशुकाम इति पशु—कामः । स्यात् । तस्मै । एतम् । सोमापौष्णमिति सोमा—पौष्णम् । गार्मुतम् । चरुम् । निरिति । वपेत् । सोमापूषणाविति सोमा—पूषणौ । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । तौ । एव । अस्मै । पशून् । प्रेति । जनयतः । सोमः । वै । रेतोधा इति रेतः—धाः । पूषा । पशूनाम् । प्रजनयितेति प्र—जनयिता। सोमः । एव । अस्मै । रेतः । दधाति । पूषा । पशून् । प्रेति । जनयति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

नजे,

स्पर्धमानस्य विहिता संवर्गेष्टिस्तृतीयके ॥

( गार्मुतचरुविधि )

अथ चतुर्थे गार्मुतं चरुं विधातुं प्रस्तौति—

प्रजापतिः प्रजा असृजत ता अस्मात्सृष्टाः
पराचीरायन्ता यत्रावसन्ततो गर्मुदुदतिष्ठत्ता
बृहस्पतिश्चान्ववैताꣳ सोऽब्रवीद्बृहस्पतिरनया
त्वा प्रतिष्ठान्यथ त्वा प्रजा उपावर्त्स्यन्तीति तं
प्रातिष्ठत्ततो वै प्रजापतिं प्रजा उपावर्तन्त, इति।

ताः पराङ्मुखत्वेनापगताः प्रजा यत्र देशे निवासं कृतवत्यस्तत्र देशे भाण्डक्षालनादिनिष्कासपातेन ततो देशाद्गर्मुत्संज्ञकमकृष्टपच्यमरण्यमुद्गरूपं धान्यमुदतिष्ठत्तदानीं बृहस्पतिश्च प्रजापतिश्च ताः प्रजा अनुगतवन्तौ। अत्र चकारादनाम्नातोऽपि प्रकृतः प्रजापतिः समुच्चीयते। तदा प्रजापतिं प्रति बृहस्पतिरेवमब्रवीत्। अनया गार्मुतधान्यरूपया त्वां प्रतिष्ठानि धान्यवत्त्वेन प्रतिष्ठितं करोमि,[1] ततो धान्यवन्तं त्वां तदर्थिन्यः प्रजा उपगमिष्यन्तीत्युक्त्वा तं प्रजापतिं प्रति प्रतिष्ठितवान्। ततो धान्यवन्तं प्रजापतिं धान्यार्थिन्यः प्रजा उपगताः॥

विधत्ते—

यः प्रजाकामः स्यात्तस्मा एतं प्राजापत्यं
गार्मुतं चरुं निर्वपेत्प्रजापतिमेव स्वेन भागधे-
येनोप धावति स एवास्मै प्रजां प्र जनयति, इति॥

अथ पशुकामस्य सोमापौष्णं गार्मुतं चरुं विधातुं प्रस्तौति—

प्रजापतिः पशूनसृजत तेऽस्मात्सृष्टाः पराञ्च
आयन्ते यत्रावसन्ततो गर्मुदुदतिष्ठत्तान्पूषा
चान्ववैताꣳ सोऽब्रवीत्पूषाऽनया मा प्र
तिष्ठाथ त्वा पशव उपावर्त्स्यन्तीति मां प्र
तिष्ठेति सोमोऽब्रवीन्मम वा अकृष्टपच्यमि-
त्युभौ वां प्र तिष्ठानीत्यब्रवीत्तौ प्रातिष्ठत्ततो
वै प्रजापतिं पशव उपावर्तन्त, इति।

---

१ ख °तिष्ठि°।

पशुनिवासस्थानेऽपि भक्षिततृणशेषगोमयादिपातेन गर्मुत उत्पत्तिः । तया गर्मुता प्रजापतिः पूषणं सोमं च प्रतिष्ठाप्य पशूनाप्तवान् ॥

अथेष्टिं विधत्ते—

यः पशुकामः स्यात्तस्मा एतꣳ सोमापौष्णं गार्मुतं चरुं निर्वपेत्सोमापूषणावेव स्वेन भागधेयेनोप धावति तावेवास्मै पशून्प्र जनयतः सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून्प्र जनयति॥, इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः । )

अग्ने गोभिर्न आ गहीन्दो पुष्ट्या जुषस्व नः । इन्द्रो धर्ता गृहेषु नः । सविता यः सहस्रियः स नो गृहेषु रारणत् । आ पूषा एत्वा वसु । धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् । त्वष्टा यो वृषभो वृषा स नो गृहेषु रारणत् । सहस्रेणायुतेन च । येन देवा अमृतम् ( १ ) दीर्घꣳ श्रवो दिव्यैरयन्त । रायस्पोष त्वमस्मभ्यं गवां कुल्मिं जीवस आ युवस्व । अग्निर्गृह-

पतिः सोमो विश्ववनिः सविता सुमेधाः स्वाहा। अग्ने गृहपते यस्ते घृत्यो भागस्तेन सह ओज आक्रममाणाय धेहि श्रैष्ठ्यात्पथो मा योषं मूर्धा भूयासꣳ स्वाहा (२)॥

(अमृतमष्टात्रिꣳशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः॥५॥

(अथ द्वितीयाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः।)

अग्ने। गोभिः। नः। एति। गहि। इन्दो इति। पुष्ट्या। जुषस्व। नः। इन्द्रः। धर्ता। गृहेषु। नः। सविता। यः। सहस्रियः। सः। नः। गृहेषु। रारणत्। एति। पूषा। एतु। एति। वसु। धाता। ददातु। नः। रयिम्। ईशानः। जगतः। पतिः। सः। नः। पूर्णेन। वावनत्। त्वष्टा। यः। वृषभः। वृषा। सः। नः। गृहेषु। रारणत्। सहस्रेण। अयुतेन। च। येन। देवाः। अमृतम् (१)। दीर्घम्। श्रवः। दिवि। ऐरयन्त। रायः। पोष। त्वम्। अस्मभ्यमित्यस्म—भ्यम्। गवाम्। कुल्मिम्। जीवसे। एति। युवस्व। अग्निः। गृहपतिरिति गृह—पतिः। सोमः। विश्ववनिरिति विश्व—वनिः।

सविता । सुमेधा इति सु—मेधाः । स्वाहा । अग्ने । गृहपत इति गृह—पते । यः । ते । सूर्यः । भागः । तेन । सहः । ओजः । आक्रममाणायेत्या—क्रममाणाय । धेहि । श्रैष्ठ्यात् । पथः । मा । योषम् । मूर्धा । भूयासम् । स्वाहा ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ द्वितीयकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः । )

प्रजापश्वर्थिनोरुक्तश्चतुर्थे गार्मुतश्चरुः ॥

अथ व्यवहितेन षष्ठेन चित्रायागं विधित्सुरादौ पञ्चमेनानुवाकेनोपहोममन्त्रान्पठति ।

कल्पः—" चित्रापौर्णमासे चित्रामिष्टिं निर्वपेदाग्नेयादीनि सप्ताग्ने गोभिर्न आ गहीत्येतेनानुवाकेनोपहोमाः " इति ।

तत्र प्रथममन्त्रपाठस्तु—

अग्ने गोभिर्न आ गहीन्दो पुष्ट्या जुषस्व नः । इन्द्रो धर्ता गृहेषु नः । , इति ।

हेऽग्ने गोभिः सह नोऽस्मान्प्रत्यागह्यागच्छ । हे इन्दो पशुपुष्ट्या नोऽस्माञ्जुषस्व प्रीणय । इन्द्रो नोऽस्माकं गृहेषु धर्ता पशूनां धारयिता भवतु ॥

द्वितीयमन्त्रपाठस्तु—

सविता यः सहस्रियः स नो गृहेषु रारणत् । आ पूषा एत्वा वसु ।, इति ।

पशूनां सहस्रं यस्यास्त्यसौ सहस्रियः । तादृशो यः सविता नोऽस्माकं गृहेषु रारणद्भृशं रमताम् । पशुपोषकश्च देव आगच्छतु । वसु धनमपि आगच्छतु ॥

तृतीयमन्त्रपाठस्तु—

( चित्रायागस्योपहोममन्त्राः )

धाता द॒दातु नो र॒यिमीशा॑नो॒ जग॑त-
स्पतिः। स नः॑ पू॒र्णेन॑ वावनत्। , इति।

सर्वस्य विधाता जगतः पालक ईश्वरो नोऽस्मभ्यं रयिं धनं ददातु। स ईश्वरो नोऽस्मान्पूर्णेन धनेन वावनद्भृशं भजतु रक्षतु ॥

चतुर्थमन्त्रपाठस्तु—

त्वष्टा॒ यो वृ॑ष॒भो वृषा॒ स नो॑ गृ॒हेषु॑
रारणत्। स॒हस्रे॑णा॒युते॑न च। , इति।

यस्त्वष्टा वृषभः श्रेष्ठो वृषा कामानां वर्षिता सोऽस्माकं गृहेषु पशूनां सहस्रेणायुतेन च सह रारणद्भृशं रमताम् ॥

पञ्चममन्त्रपाठस्तु—

येन॑ दे॒वा अ॒मृतं॑ दी॒र्घꣳ श्रवो॑ दि॒व्यै-
रय॑न्त। राय॑स्पोष॒ त्वम॒स्मभ्यं॒ गवां॑
कु॒ल्मिं जी॒वस॒ आ यु॑वस्व। , इति।

हे रायस्पोष धनपोषक येन त्वया देवा अमृतं पीयूषं दीर्घं सुपूर्णं श्रवः कीर्तिहेतुभूतमन्नं दिव्यैरयन्त स्थापितवन्तः। तादृशस्त्वमस्मदर्थं गवां कुल्मिं संघं जीवसे जीवनार्थमायुवस्वाऽऽनीय मिश्रय ॥

षष्ठमन्त्रपाठस्तु—

अ॒ग्निर्गृ॒हप॑तिः॒ सोमो॑ विश्व॒वनिः॑
स॒विता सु॒मेधाः॒ स्वाहा॑। , इति।

अग्निरस्मद्गृहस्याधिपतिः। सोमो विश्वं वनते भजत इति विश्ववनिः। सविता शोभना मेधा यस्येति सुमेधाः। एतेभ्य इदं स्वाहुतमस्तु ॥

सप्तममन्त्रपाठस्तु—

अग्ने॑ गृहपते॒ यस्ते॒ घृत्यो॑ भा॒गस्तेन॒ सह॒
ओज॑ आ॒क्रम॑माणाय धेहि॒ श्रैष्ठ्या॑त्प॒थो मा
योषं॑ मू॒र्धा भू॑यासꣳ॒ स्वाहा॑ ॥, इति ॥

हे गृहपतेऽग्ने घृतमर्हतीति घृत्यो यस्ते भागस्तेन सह ओजोऽष्टमधातुरूपं शरीरसारमाक्रममाणायानुतिष्ठते यजमानाय धेहि स्थापय। यजमानोऽहं श्रैष्ठ्यात्पथः श्रेष्ठानां मार्गकर्तॄणां संबन्धिनोऽस्मादनुष्ठानमार्गान्मा योषं

वियुक्तो मा भूवं, मूर्धा यजमानानां मध्ये शिरोवदुत्तमो भूयासं, तुभ्यमिदं स्वाहुतमस्तु ॥

अत्र विनियोगसंग्रहः—

"अग्ने गोभिस्तूपहोमाश्चित्रायागे हि सप्त ते ॥ १ ॥"

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ द्वितीयाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

---

चित्रया यजेत पशुकाम इयं वै चित्रा यद्वा अस्यां विश्वं भूतमधि प्रजायते तेनेयं चित्रा य एवं विद्वाꣳश्चित्रया पशुकामो यजते प्र प्रजया पशुभिर्मिथुनैर्जायते प्रैवाऽऽग्नेयेन वापयति रेतः सौम्येन दधाति रेत एव हितं त्वष्टा रूपाणि वि करोति सारस्वतो भवत एतद्वै दैव्यं मिथुनं दैव्यमेवास्मै (१) मिथुनं मध्यतो दधाति पुष्ट्यै प्रजननाय सिनीवाल्यै चरुर्भवति वाग्वै सिनीवाली पुष्टिः खलु वै वाक्पुष्टिमेव वाचमुपैत्यैन्द्र उत्तमो भवति तेनैव तन्मिथुनꣳ सप्तैतानि हवीꣳषि भवन्ति सप्त ग्राम्याः पशवः सप्ताऽऽरण्याः सप्त छन्दाꣳस्युभयस्यावरुद्ध्या अथैता आहुतीर्जुहोत्येते वै देवाः पुष्टिपतयस्त एवास्मिन्पुष्टिं दधति

पुष्यति प्रजया पशुभिरथो यदेता आहुतीर्जुहोति प्रतिष्ठित्यै (२)॥

( अस्मै त एव द्वादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाक । )

चित्रया । यजेत । पशुकाम इति पशु—कामः । इयम् । वै । चित्रा । यत् । वै । अस्याम् । विश्वम् । भूतम् । अधीति । प्रजायत इति प्र—जायते । तेन । इयम् । चित्रा । यः । एवम् । विद्वान् । चित्रया । पशुकाम इति पशु—कामः । यजते । प्रेति । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । मिथुनैः । जायते । प्रेति । एव । आग्नेयेन । वापयति । रेतः । सौम्येन । दधाति । रेतः । एव । हितम् । त्वष्टा । रूपाणि । वीति । करोति । सारस्वतौ । भवतः । एतत् । वै । दैव्यम् । मिथुनम् । दैव्यम् । एव । अस्मै (१)। मिथुनम् । मध्यतः । दधाति । पुष्ट्यै । प्रजननायेति प्र—जननाय । सिनीवाल्यै । चरुः । भवति । वाक् । वै । सिनीवाली । पुष्टिः ।

खलु । वै । वाक् । पुष्टिम् । एव । वाचम् । उपेति । एति । ऐन्द्रः । उत्तम इत्युत्—तमः । भवति । तेन । एव । तत् । मिथुनम् । सप्त । एतानि । हवींषि । भवन्ति । सप्त । ग्राम्याः । पशवः । सप्त । आरण्याः । सप्त । छन्दांसि । उभयस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । अथ । एताः । आहुतीरित्या—हुतीः । जुहोति । एते । वै । देवाः । पुष्टिपतय इति पुष्टि—पतयः । ते । एव । अस्मिन् । पुष्टिम् । दधति । पुष्यति । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । अथो इति । यत् । एताः । आहुतीरित्या—हुतीः । जुहोति । प्रतिष्ठित्या इति प्रति—स्थित्यै (२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ द्वितीयकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

चित्रायागस्योपहोममन्त्राः पञ्चम ईरिताः ॥

अथ षष्ठे तं यागं विधत्ते—

चित्रया यजेत पशुकाम इयं वै चित्रा यद्वा अस्यां विश्वं भूतमधि प्रजायते तेनेयं चित्रा य एवं विद्वाꣳश्चित्रया पशुकामो यजते प्र प्रजया पशुभिर्मिथुनैर्जायते, इति ।

( चित्रायागविधिः )

चित्रेति यागस्य नामधेयम् । सा च चित्रा भूमिस्वरूपा । यस्मात्कारणादस्यां भूमौ सर्वं प्राणिजातमाधिक्येनोत्पद्यते तेन चित्रप्राण्युत्पादनेनेयं भूमिश्चित्रा । तद्वद्विचित्रप्रजापशुहेतुत्वाद्यागोऽपि चित्रेत्युच्यते ॥

चित्रायाः स्वरूपभूतान्सप्त यागविशेषान्विधातुं तद्विधिं क्रमेणोन्नयति—

प्रैवाऽऽग्नेयेन वापयति रेतः सौम्येन दधाति रेत एव हितं त्वष्टा रूपाणि वि करोति सारस्वतौ भवत एतद्वै दैव्यं मिथुनं दैव्यमेवास्मै मिथुनं मध्यतो दधाति पुष्ट्यै प्रजननाय सिनीवाल्यै चरुर्भवति वाग्वै सिनीवाली पुष्टिः खलु वै वाक्पुष्टिमेव वाचमुपैत्यैन्द्र उत्तमो भवति तेनैव तन्मिथुनम्, इति ।

अत्राऽऽग्नेयेन हविषा प्रवापयति प्रकर्षेण पशूत्पत्तिबीजं प्रक्षिपति । सौम्येन हविषा व्रीह्यादिबीजेषु गोमयमिव प्रजादिबीजेषु पोषकं रेतो धारयति । तृतीयहविर्देवता त्वष्टा च हितं रेतो नानाविधरूपाकारेण विकरोति । अतः सरस्वतीदेवताकः सरस्वद्देवताकश्चेत्युभौ सारस्वतौ भवतः । एतच्च द्वयं स्त्रीपुरुषरूपत्वाद्देवतासंबन्धि मिथुनं, तस्य हविषां मध्येऽनुष्ठानेन यजमानार्थं दैव्यं मिथुनं गृहमध्ये संपादितवान्भवति । तच्चोत्पन्नानां प्रजानां पशूनां च पुष्ट्यै संपद्यते, प्रजानां पशूनां च प्रजननायोत्पत्तये संपद्यते । तत्र सिनीवाल्यै चरुः कर्तव्यः । सिनीवाल्या वाक्त्वमर्थवादान्तरे द्रष्टव्यम् । वाचः पुष्टिहेतुत्वं सभामध्ये पण्डितेष्ववलोक्यते । तस्मादनेन चरुणा पुष्टिहेतुं वाचं प्राप्नोति । ऐन्द्रो यागश्चरमः कर्तव्यः । तेनैवेन्द्रस्य पुरुषत्वेन सिनीवाल्याः स्त्रीत्वेन च तदुभयं मिलित्वा मिथुनं भवति । अत्र द्रव्यविशेषाः शाखान्तरे द्रष्टव्याः ॥

पाठप्राप्तां हविःसंख्यां प्रशंसति—

सप्तैतानि हवींषि भवन्ति सप्त ग्राम्याः पशवः सप्ताऽऽरण्याः सप्त छन्दाꣳस्युभयस्यावरुद्ध्यै, इति ।

गोपुरुषाश्वाजाविगर्दभोष्ट्रा ग्राम्याः । द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कट-

१ ख. च. °ह्या नि हि° । २ ख. च. तन । ३ क. घ. ङ. च. °त स्त्री म° । ४ क. घ. ङ. च. °ताका म° । ५ ख. च. गोमहिषा° ।

नादेयाः सप्ताऽऽरण्याः । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि । उभयस्य पशुसंघस्य छन्दःसंघस्य च ॥

अग्ने गोभिर्न आ गहीत्यादिभिर्मन्त्रैरुपहोमान्विधत्ते—

अथैता आहुतीर्जुहोत्येते वै देवाः पुष्टिपतयस्त एवास्मिन्पुष्टिं दधाति पुष्यति प्रजया पशुभिरथो यदेता आहुतीर्जुहोति प्रतिष्ठित्यै॥, इति ॥

एते वै मन्त्रोक्ता अग्नीन्द्रादयः ॥

अत्र मीमांसा ।

प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

" यच्चित्रया यजेतेति तद्गुणो नाम वा भवेत् ।
चित्रत्वस्त्रीत्वगुणो रूढेरग्नीषोमीयके पशौ ॥
द्वयोर्विधौ वाक्यभेदो वैशिष्ट्ये गौरवं ततः ।
स्यान्नाम पृषदाज्यवद्दिष्पञ्चमानेषु तत्तथा ॥ "

" चित्रया यजेत पशुकामः " इत्याम्नायते । तत्र चित्राशब्दो नोद्भिच्छब्दवद्यौगिकः, किंतु रूढ्या चित्रस्त्रीत्वमभिधत्ते । ततो न पूर्वन्यायेन नामत्वम् । तथा सत्यग्नीषोमीयं पशुमालभेतेति विहितं पशुयागमत्र यजेतेत्यनेन पदेनानूद्य तस्मिन्पशौ चित्रस्त्रीत्वगुणो विधीयत इति प्राप्ते ब्रूमः—चित्रत्वं स्त्रीत्वं चेति द्वावेतौ गुणौ, तयोर्द्वयोर्विधाने वाक्यं भिद्येत ।

तथा चोक्तम्—

" प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥ "[1] इति ॥

अथ वाक्यभेदपरिहाराय गुणद्वयविशिष्टपशुद्रव्यरूपं कर्म विधीयते तदा गौरवं स्यात् । तस्माच्चित्राशब्दः पूर्ववद्यजिसामानाधिकरण्येन यागनामधेयं भवति । चित्रत्वं च तस्य विलक्षणद्रव्यद्वारेणोपपद्यते । दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमिति दध्यादीनि विचित्राणि प्रदेयद्रव्याणि पठ्यन्ते । तदेतच्चित्रानामकस्य यागस्योत्पत्तिवाक्यं, यागस्वरूपभूतयोर्दध्यादिद्रव्यप्रजापतिदेवतयोरत्रोपदिश्यमानत्वात् । उत्पन्नस्य तस्य यागस्य चित्रया यजेत पशुकाम इत्येतत्फलवाक्यम् । एवं सति प्रकृतार्थो लभ्येत ।

[1] च 'भेकार्थ वि ।

अग्नीषोमीयपश्वनुवादेन गुणविधाने प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम्। लिङ्गप्रत्ययस्य चानुवादत्वाङ्गीकारान्मुख्यविध्यर्थो बाध्येत। तस्माच्चित्रापदं कर्मनामधेयम्। यथा चित्राशब्दे नामधेयत्वं तथा बहिष्पवमानशब्द आज्यशब्दे पृष्ठशब्दे च तत्तत्कर्मनामधेयत्वं योजनीयम्।

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

"चित्रया पशवोऽमुष्मिन्नेव स्युर्नियता न वा।
आद्यः स्वर्गेण तुल्यत्वाद्देहस्योत्पादकत्वतः॥
चित्रोत्पत्तौ तु नियमो न श्रुतो नापि कल्पकम्।
पुंस्प्रवृत्त्यादिनो (नाऽ) पैते प्रतिबन्धे भवेत्फलम्॥"

काम्यकर्मण्येवं श्रूयते—"चित्रया यजेत पशुकाम ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः" इति। तत्र यथा स्वर्गफलस्याऽऽमुष्मिकत्वं नियतम्, एवं पश्वादिफलस्यापि। यदि स्वर्गहेतुर्ज्योतिष्टोमो देहान्तरस्योत्पादकः, तर्हि चित्रादिरपि तथाऽस्त्विति चेत्। मैवम्। वैषम्यात्। अस्मिन्देहे स्वर्गस्य भोक्तुमशक्यत्वादश्रुताऽप्यन्यदेहोत्पत्तिरर्थापत्त्या कल्प्यते। चित्रया त्वन्यदेहोऽवश्यमुत्पाद्यत इति नियमो न श्रुतो नापि किंचित्तस्य कल्पकमस्ति, अनेनापि देहेन पश्वादिफलस्य भोक्तुं शक्यत्वात्। अस्मिन्देहे प्रतिग्रहादिदृष्टोपायमन्तरेण पश्वाद्यलाभाद्ध्रुवं चित्रादिफलमामुष्मिकमेवेति चेन्न। प्रतिग्रहादेः प्रतिबन्धनिवृत्तावुपयुक्तत्वात्। तस्मादसति प्रतिबन्धे फलमैहिकं सति त्वामुष्मिकम्।

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

"स्त्रीपुंसदेवकौ सारस्वतौ तद्धर्मगः क्रमः।
नास्त्यस्ति वाऽत्र नास्त्येष तन्नियामकवर्जनात्॥
याज्यानुवाक्यापाठेन स्त्रीप्राथम्यं हि मुख्ययोः।
मुख्यार्थत्वेन धर्माणां स्यान्मुख्यक्रमतः क्रमः"॥

चित्रायागे सप्तानां हविषां मध्ये चतुर्थपञ्चमे इत्थमाम्नायेते—"सारस्वतौ भवत एतद्वै दैव्यं मिथुनम्" इति। सरस्वती च सरस्वांश्चेति विगृह्य समासे कृते पुमान्स्त्रियेतिसूत्रेणैकशेषात्सरस्वन्ताविति भवति। तौ देवते ययोर्यागयोस्तौ सारस्वतौ यागौ। एतच्च मिथुनमिति वाक्यशेषादवगम्यते। तयोर्यागयोर्निर्वापादयो धर्मा[1]श्चोदकप्राप्ताः। तत्र स्वेच्छया स्त्रीयागस्य पुंयागस्य वा प्रथमं निर्वापः कार्यः। कुतः। श्रुत्यर्थपाठप्रवृत्तिस्थानानामन्यतमस्य नियाम-

१ क. घ. ङ. च. र्मस्य प्रा॰।

कस्याभावादिति प्राप्ते ब्रूमः–हौत्रकाण्डे स्त्रीदेवतायाः पूर्वे याज्यानुवाक्ये आम्नाते—" प्र णो देवी सरस्वती" " आ नो दिवः " इति । पश्चात्पुंदेवतायाः " पीपिवा॒ꣳसꣳ सरस्वतः " " ये ते सरस्व ऊर्मयः " इति । अनेन याज्यानुवाक्याक्रमेण मुख्ययोर्द्वयोर्यागयोर्मध्ये स्त्रीयागस्य प्राथम्यमवगम्यते । ततो धर्माणां मुख्ययागार्थत्वान्मुख्यक्रमेणैव क्रमे नियते सति स्त्रीयागस्यैव प्रथमं निर्वापः कार्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ द्वितीयाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

मा॒रु॒तम॑सि म॒रुता॒मोजो॒ऽपां धारां॑ भिन्धि र॒मय॑त मरुतः श्ये॒नमा॒यिनं॒ मनो॑जवसं॒ वृष॑णꣳ सुवृ॒क्तिम् । येन॒ शर्धं॑ उ॒ग्रमव॑सृष्ट॒मेति॒ तद॑श्विना॒ परि॑ धत्तꣳ स्व॒स्ति । पु॒रोवा॒तो व॒र्षञ्जि॒न्वरा॒वृ॒त्स्वाहा॑ वाता॒वद्व॒र्षन्नु॒ग्ररा॑वृ॒त्स्वाहा॑ स्त॒नय॒न्वर्ष॑न्भी॒मरा॑वृ॒त्स्वाहा॒ऽनश॒न्य॑वस्फू॒र्जन्दि॒द्युद्व॒र्षन्त्वे॒षरा॑वृ॒त्स्वाहा॒ऽतिरा॒त्रं व॒र्षन्पू॒र्तिरा॑वृ॒त् ( १ ) स्वाहा॑ ब॒हु हा॒यम॑वृ॒षादि॑ति श्रु॒तरा॑वृ॒त्स्वाहाऽऽत॒प॑ति व॒र्षन्वि॒राडा॑वृ॒त्स्वाहा॒ऽवस्फू॒र्जन्दि॒द्युद्व॒र्षन्भू॒तरा॑वृ॒त्स्वाहा॒ मान्दा॒ वाशाः॒ शुन्ध्यू॒रजि॑राः । ज्योति॑ष्मती॒स्तम॑स्वरी॒रुन्द॑तीः॒ सुफे॑नाः । मित्र॑भृतः॒ क्षत्र॑भृतः॒ सुरा॑ष्ट्रा इ॒ह मा॑ऽवत ।

वृष्णो॑ अश्व॑स्य सं॒दान॑मसि वृष्ट्यै॒ त्वोप॑ नह्या-
मि ( २ ) ॥

( पूर्तिरावृद्द्विचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

मारु॒तम् । अ॒सि॒ । म॒रुता॑म् । ओज॑ः । अ॒पाम् ।
धारा॑म् । भि॒न्धि॒ । र॒मय॑त । म॒रु॒तः॒ । श्ये॒नम् ।
आ॒यिन॑म् । मनो॑जवस॒मिति॒ मन॑ः—ज॒व॒स॒म् । वृष॑-
णम् । सु॒वृ॒क्तिमिति॑ सु—वृ॒क्तिम् । येन॑ । शर्ध॑ः ।
उ॒ग्रम् । अव॑सृष्ट॒मित्यव॑—सृ॒ष्ट॒म् । एति॑ । तत् ।
अ॒श्विना । परी॒ति॑ । ध॒त्त॒म् । स्व॒स्ति । पु॒रो॒वा॒त इति॑
पु॒रः—वा॒तः । वर्ष॑न् । जि॒न्वः । आ॒वृदि॒त्या॑—वृत् ।
स्वाहा॑ । वा॒ता॒वदि॒ति॑ वा॒त—व॒त् । वर्ष॑न् । उ॒ग्रः ।
आ॒वृदि॒त्या॑—वृत् । स्वाहा॑ । स्त॒नय॑न् । वर्ष॑न् ।
भी॒मः । आ॒वृदि॒त्या॑—वृत् । स्वाहा॑ । अ॒न॒श॒नि ।
अ॒व॒स्फू॒र्जन्नि॒त्य॑व—स्फू॒र्जन् । दि॒द्यु॒त् । वर्ष॑न् । त्वे॒षः ।
आ॒वृदि॒त्या॑—वृत् । स्वाहा॑ । अ॒ति॒रा॒त्रमित्य॑ति—
रा॒त्रम् । वर्ष॑न् । पू॒र्तिः । आ॒वृदि॒त्या॑—वृत् ( १ ) ।
स्वाहा॑ । ब॒हु । ह॒ । अ॒यम् । अ॒वृ॒षा॒त् । इति॑ ।

भूतः । आवृदित्या॑—वृत् । स्वाहा॑ । आतप॑तीत्या॑—
तप॑ति । वर्ष॑न् । विराडिति॑ वि—राट् । आवृदि-
त्या॑— वृत् । स्वाहा॑ । अवस्फूर्जन्निर्त्य॑व—स्फूर्ज॑न् ।
दिद्युत् । वर्ष॑न् । भूतः । आवृदित्या॑—वृत् । स्वाहा॑ ।
मान्दाः । वाशाः । शुन्ध्यूः । अजि॑राः । ज्योति॑-
ष्मतीः । तम॑स्वरीः । उन्द॑तीः । सुफे॑ना इति॑ सु—
फेनाः । मित्र॑भृत इति॑ मित्र॑—भृतः । क्षत्र॑भृत इति॑ क्षत्र॑—
भृतः । सुरा॑ष्ट्रा इति॑ सु—राष्ट्राः । इह । मा । अवत ।
वृष्णः । अश्व॑स्य । संदान॑मिति॑ सं—दान॑म् । असि ।
वृष्ट्यै॑ । त्वा । उपे॑ति॑ । नह्यामि ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ द्वितीयकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

---

पशुकामस्य चित्राख्यो यागः षष्ठे निरूपितः ॥

अथ सप्तममारभ्य दशमान्तैश्चतुर्भिरनुवाकैः कारीरीष्टिः प्रतिपाद्यते । तत्र तावत्सप्तमेऽनुवाके केचिन्मन्त्राः पठ्यन्ते ।

कल्पः—"कारीर्या वृष्टिकामो यजेताग्नीनन्वाधायापरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य यजमानो मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परिधत्ते " इति ।

पाठस्तु—

मारुतमसि मरुतामोजोऽपां धारां भिन्धि, इति ।

हे कृष्णवासस्त्वं मरुत्संबन्ध्यसि, वस्त्रे प्रक्षिप्तस्य कृष्णद्रव्यमिश्रस्य जलस्य

मरुद्भिः शोषणीयत्वात्। अत एव मरुतामोजो बलमसि, मेघेषु प्रतिबद्धानामपां धारामुद्दिश्य प्रतिबन्धरूपं मेघं भिन्धि ॥

कल्पः—" रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रतिमीवति पुरोवातमेव जनयति " इति।

प्रतिमीवति प्रतिबध्नाति।

पाठस्तु—

रमयत मरुतः श्येनमायिनं मनोजवसं वृषणꣳ सुवृक्तिम्। येन शर्ध उग्रमवसृष्टमेति तदश्विना परि धत्तꣳ स्वस्ति।, इति।

हे मरुतः श्येनं श्येनवत्प्रबलगति पुरोवातं रमयत क्रीडयत। कीदृशम्। आयिनमागच्छन्त, मनोजवसं मनस इव जवो वेगो यस्य तादृशं, वृषणमुदकस्य वर्षयितारं, सुवृक्तिं सुष्ठु पाश्चात्यवातस्य वर्जयितारम्। येन पुरोवातेनावसृष्टं मेघेभ्यो मोचितं जलमुग्रं तीव्रधारारूपं भूत्वा शर्धः शीर्णमनिःशेषेण छिन्नमेति प्राप्नोति। तादृशं पुरोवातं रमयतेति पूर्वत्रान्वयः। हेऽश्विनौ देवभिषजौ तज्जलं स्वस्ति क्षेमकरं यथा भवति तथा परितो धारयतम् ॥

कल्पः—" पुरोवातो वर्षन्निल्यष्टौ वातनामानि हुत्वा " इति।

पाठस्तु—

पुरोवातो वर्षञ्जिन्वरावृत्स्वाहा वातावद्वर्षन्नुग्ररावृत्स्वाहा स्तनयन्वर्षन्भीमरावृत्स्वाहाऽनशन्यवस्फूर्जन्दिद्युद्वर्षन्त्वेषरावृत्स्वाहाऽतिरात्रं वर्षन्पूर्तिरावृत्स्वाहा बहु हायमवृषादिति श्रुतरावृत्स्वाहाऽऽतपति वर्षन्विराडावृत्स्वाहाऽवस्फूर्जन्दिद्युद्वर्षन्भूतरावृत्स्वाहा,इति।

यः पुरोवातो वर्षन्वृष्टिं प्रवर्तयञ्जिन्वः प्रजाः प्रीणयन्नावृत्तावर्तता, तस्मै स्वाहुतमस्तु। वातावत्प्रवातेन युक्त उग्रस्तीव्रधारायुक्तः स्तनयन्गर्जन्भीमो गर्जनाधिक्येन भयंकर इव, अनशनि प्राणघातकोऽशनिर्यथा न पतति तथाऽ-

---

१ ख °मित क्षेत्रमे°। २ ङ °स्वाहा इ°।

वस्फूर्जन्नवसेचनेन शब्दयन्, दिद्युद्विद्युल्लक्षणेन प्रकाशनेन युक्तः, त्वेषो वर्षधारया सस्यक्षेत्रादेर्दीपकः, अतिरात्र रात्रिमतीत्य दिवारात्रमित्यर्थः । पूर्तिर्महीतलं पूरयिता । अयं वातो बहु यथा भवति तथाऽवृषाद्धावर्षयंतिकिलेति श्रुतो जनेषु ख्यातः। आतपति आतपे स्थिते सति विराडविशेषेण राजमानः। अवस्फूर्जन्दिद्युदितिशब्दौ व्याख्यातौ । आदरार्थं पुनर्वचनम् । इत्थं भूतो यथोक्तगुणैर्युक्तः सन्मर्वलोकधारणक्षम इत्यर्थः ॥

कल्पः—" अन्तर्वेदि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य तस्मिन्नवर्जूरसक्तून्करीरसक्तून्वा मान्दा वाशा इति कृष्णमधुपा संयुज्य तिस्रः पिण्डीः कृत्वा पुष्करपलाशैः संवेष्ट्य " इति ।

पाठस्तु—

मान्दा वाशाः शुन्ध्यूरजिराः । ज्योतिष्मतीस्तमस्वरीरुन्दतीः सुफेनाः । मित्रभृतः क्षत्रभृतः सुराष्ट्रा इह माऽवत । , इति ।

मान्दादीन्येकादशापां नामानि संबुद्ध्यन्तानि । तादृश्यो हे आपो यूयमिहास्मिन्कर्मणि मामवत फलप्रदानेन रक्षत । मान्दा हर्षहेतवः । वाशाः शब्देन वर्षणजन्येन युक्ताः । शुन्ध्यूः शुद्धिहेतवः । अजिराः प्रवाहरूपेण गमनशीलाः । ज्योतिष्मतीः शुक्ररूपयुक्ताः । तमस्वरीः सूर्यप्रकाशाच्छादनेन तमो यथा भवति तथा स्वरन्त्यो गच्छन्त्यः । उन्दतीर्भूमिं क्लेदयन्त्यः । सुफेना जलप्रवाहबाहुल्येन बहुफेनयुक्ताः । जगन्मित्रभूता ओषधीर्बिभ्रति पोषयन्तीति मित्रभृतः । क्षत्रं देशाधिपतिं राजानं सुवृष्टिजन्यसंतोषेण बिभ्रति पोषयन्तीति क्षत्रभृतः । सुष्ठु शोभनं सस्येन संपूर्णं राष्ट्रं यासां ताः सुराष्ट्राः ॥

कल्पः—" समुद्यम्य कृष्णाजिनस्यान्तौ वृष्णो अश्वस्य संदानमसीति कृष्णेन दाम्नोपनह्यति " इति ।

पाठस्तु—

वृष्णो अश्वस्य संदानमसि वृष्ट्यै त्वोप नह्यामि ॥, इति ॥

हे रज्जो त्वं वृष्णोऽश्वस्य सेचनसमर्थस्याश्वमुख्यस्यैवास्य कृष्णाजिनस्य संदानं दृढबन्धनसाधनमसि । अतो वृष्टिसिद्ध्यर्थमनेन संदानेन हे कृष्णाजिन त्वामुपनह्यामि बध्नामि ॥

१ क. घ. ङ. °यन्किले° । २ क. घ. °थुक्त इ° ।

( कारीरीष्टिमन्त्रा )

अत्र विनियोगसंग्रहः—

" कारीर्या मारुतं कृष्णं स्वामी धारयते पटम् ।
रमेति पश्चिमं वातं पुरोवातं करोति हि ॥ १ ॥
पुरोऽष्टावाहुतीर्हुत्वा मान्दाः संयौति सक्तुकम् ।
वृष्णः संनह्यते सक्तुं मन्त्रा द्वादश वर्णिताः " ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः । )

देवा॑ वसव्या॒ अग्ने॒ सोम॒ सूर्य॑ । देवाः॑ शर्मण्या॒ मित्रा॑वरुणाऽर्यमन्न् । देवाः॑ सपीतयोऽपां नपादाशुहेमन्न् । उद्नो द॑त्तोद॒धिं भि॑न्त दि॒वः प॒र्जन्या॑दन्तरि॑क्षात्पृथि॒व्यास्ततो॑ नो॒ वृष्ट्या॑ऽवत । दिवा॑ चि॒त्तमः॑ कृण्वन्ति प॒र्जन्ये॑नोदवाहेन॑ । पृथि॒वीं यद्व्युन्दन्ति॑ । आ यं नरः॑ सुदान॑वो ददाशु॒षे दि॒वः कोश॒मचु॑च्यवुः । वि प॒र्जन्याः॑ सृजन्ति॒ रोद॑सी॒ अनु॒ धन्व॑ना यन्ति ( १ ) वृष्टयः॑ । उदी॑रयथा मरुतः समुद्रतो यू॒यं वृ॒ष्टिं व॑र्षयथा पुरीषिणः । न वो॑ दस्रा॒ उप॑ दस्यन्ति धे॒नवः॒ शुभं॑ या॒ताम॑नु॒ रथा॑ अवृत्सत । सृ॒जा वृ॒ष्टिं दि॒व आऽद्भिः स॑मु॒द्रं पृ॑ण । अ॒ब्जा अ॑सि प्रथम॒जा बल॑मसि समु॒द्रिय॑म् ।

उन्नम्भय पृथिवीं भिन्धीदं दिव्यं नभः । उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम् । ये देवा दिविभागा येऽन्तरिक्षभागा ये पृथिवि-भागाः । त इमं यज्ञमवन्तु त इदं क्षेत्रमा विशन्तु त इदं क्षेत्रमनु वि विशन्तु ( २ )॥

( यन्ति देवा विꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाक । )

---

देवाः । वसव्याः । अग्ने । सोम । सूर्य । देवाः । शर्मण्याः । मित्रावरुणेति मित्रा—वरुणा । अर्यमन् । देवाः । सपीतय इति स—पीतयः । अपाम् । नपात् । आशुहेमन्नित्याशु—हेमन् । उद्नः । दत्त । उदधिमित्युद—धिम् । भिन्त । दिवः । पर्जन्यात् । अन्तरिक्षात् । पृथिव्याः । ततः । नः । वृष्ट्या । अवत । दिवा । चित् । तमः । कृण्वन्ति । पर्जन्येन । उदवाहेनेत्युद—वाहेन । पृथिवीम् । यत् । व्युन्द-न्तीति वि—उन्दति । एति । यम् । नरः । सुदानव इति सु—दानवः । ददाशुषे । दिवः । कोशम् । अचु-

च्यवुः । वीति । पर्जन्याः । सृजन्ति । रोदसी इति ।
अन्विति । धन्वना । यन्ति (१) । वृष्टयः ।
उदिति । ईरयथ । मरुतः । समुद्रतः । यूयम् ।
वृष्टिम् । वर्षयथ । पुरीषिणः । न । वः । दस्राः ।
उपेति । दस्यन्ति । धेनवः । शुभम् । यातम् ।
अन्विति । रथाः । अवृत्सत । सृज । वृष्टिम् । दिवः ।
एति । अद्भिरित्यत्—भिः । समुद्रम् । पृण । अब्जा
इत्यप्—जाः । असि । प्रथमजा इति प्रथम—जाः ।
बलम् । असि । समुद्रियम् । उदिति । नम्भय ।
पृथिवीम् । भिन्धि । इदम् । दिव्यम् । नभः ।
उद्नः । दिव्यस्य । नः । देहि । ईशानः । वीति । सृज ।
दृतिम् । ये । देवाः । दिविभागा इति दिवि—भागाः ।
ये । अन्तरिक्षभागा इत्यन्तरिक्ष—भागाः । ये ।
पृथिविभागा इति पृथिवि—भागाः । ते । इमम् ।
यज्ञम् । अवन्तु । ते । इदम् । क्षेत्रम् । एति ।
विशन्तु । ते । इदम् । क्षेत्रम् । अनु । वीति ।
विशन्तु (२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके
चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

( अथ द्वितीयकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः । )

---

प्राच्याङ्गमन्त्राः कारीर्यां सप्तमे समुदीरिताः ॥
अथावशिष्टमन्त्रा अष्टमे वर्ण्यन्ते ।

कल्प—"उत्करे मार्गीषं त्रिगधमनोवस्थितं भवति [त्रि]च्छर्दीषीत्यर्थो ( दिक्कमथो ) देवा वसव्या इति पूर्वस्यां गधायां कृष्णाजिनमावध्नीयाद्‌होरात्रावसक्तं भवति यदि वर्षेत्पिण्डीरेव जुहुयाद्यदि न वर्षेद्देवाः शर्मण्या इति मध्यमायामावध्नीयादहोरात्रावसक्तं भवति यदि वर्षेत्पिण्डीरेव जुहुयाद्यदि न वर्षेद्देवाः सपीतय इति जघन्यायामावध्नीयादहोरात्रावसक्तं भवति यदि वर्षेत्पिण्डीरेव जुहुयाद्यदि न वर्षेच्छ्वोभूते धामच्छदादीनि त्रीणि हवींषि निर्वपति" इति ।

पाठस्तु—

देवा वसव्या अग्ने सोम सूर्य । देवाः शर्मण्या मित्रावरुणाऽर्यमन् । देवाः सपीतयोऽपां नपादा-शुहेमन् । उद्नो दत्तोदधिं भिन्त दिवः पर्जन्या-दन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्याऽवत, इति ।

अत्रोद्नो दत्तेत्येष त्रयाणां मन्त्राणां शेषत्वेनानुषज्यते । हे देवा उद्नो दत्तोदकानि प्रयच्छत । कीदृशा देवाः, वसव्याः प्रजानां वासयितारः । क एते देवा इत्युच्यते—अग्ने सोम सूर्येति । एवमादिका हे देवा इति पूर्वत्रान्वयः । उदकदाने क उपाय इति तदुच्यते—उदधिं भिन्त, उदकं धीयतेऽस्मिन्नित्युदधिर्मेघस्तं विदारयत । केभ्यो निमित्तेभ्यः, दिवोऽन्तरिक्षात्पृथिव्याः, लोकत्रयं निमित्तीकृत्येत्यर्थः । ततो मेघविदारणादूर्ध्वं पर्जन्यादागतया वृष्ट्या नोऽस्मानवत रक्षत । द्वितीयमन्त्रे तु मित्रावरुणाऽर्यमन्नित्येवमादयो हे देवाः शर्मण्याः सुखप्रदा इति व्याख्येयम् । तृतीयमन्त्रे त्वपां नपादुदकानामविनाशयितराशुहेमञ्शीघ्रगत इत्येवमादयो हे देवाः सपीतयः समाना पीतिः सोमपानं येषां ते तादृशा इति व्याख्येयम् ॥

कल्पः—"उपहोमकाले दिवा चित्तमः कृण्वन्तीति प्रतिमन्त्रं पिण्डीराबध्नाति जुहोतीत्येके" इति ।

---

१ च. प्राग्घोमम् ।

( कारीरीष्टिमन्त्राः )

तत्र प्रथममन्त्रपाठस्तु—

दिवा चित्तमः कृण्वन्ति पर्जन्येनोद-
वाहेन । पृथिवीं यद्व्युन्दन्ति ।, इति ।

यदा देवाः पृथिवीं विशेषेण क्लेदयन्ति तदानीमुदकं वहता पर्जन्येन दिवाऽपि तमः कृण्वन्ति किमुत रात्रौ ॥

द्वितीयमन्त्रपाठस्तु—

आ यं नरः सुदानवो ददाशुषे दिवः
कोशमचुच्यवुः । वि पर्जन्याः सृजन्ति
रोदसी अनु धन्वना यन्ति वृष्टयः ।, इति ।

नरो मनुष्या ऋत्विजः सुदानवः सुष्ठु हविषो दातारो ददाशुषे हविर्दत्तवते यजमानाय यजमानार्थं यं कोशमुदकधारकं मेघं दिवः सकाशादाचुच्यवुः समन्ताच्च्यावितवन्तः प्रसारितवन्त इत्यर्थः । स मेघः पर्वमेकोऽपि पर्जन्या बहवो मेघा भूत्वा रोदसी अनु द्यावापृथिव्यावनुलक्ष्य विविधां वृष्टिं सृजन्ति । बहुपर्जन्यभावाभिप्रायेण बहुवचनम् । ताश्च वृष्टयो धन्वना मरुभूपावुदकरहितायां यन्ति प्रवर्तन्ते ॥

तृतीयमन्त्रपाठस्तु—

उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा
पुरीषिणः । न वो दस्रा उप दस्यन्ति
धेनवः शुभं यातामनु रथा अवृत्सत ।, इति ।

हे मरुतो यूयं समुद्रसदृशान्मेघाद्वृष्टिमुदीरयथोत्पादयत । ततः पुरीषिणः पांसुयुक्तान्भूप्रदेशान्वर्षयथाऽऽप्लावयथ । हे दस्रा भूमिशोषमुपक्षपयितारो मरुतो वो युष्माकं धेनवो धेनुसदृशा मेघा नोपदस्यन्ति नैवोपक्षीयन्ते । किं कुर्वतां युष्माकं, शुभं याता जगदनुग्रहरूपमिदं मङ्गलकार्यं प्राप्नुवताम् । किं च, इतरेषां देवानां रथा अन्ववृत्सत भवदीयान्रथाननुवर्तन्तां, वृष्टिं दातुमस्मदीये कर्मणि रथानारुह्य युष्मासु समागच्छत्सु पृष्ठतः सर्वेऽप्यन्ये देवा रथानारुह्य समागच्छन्त्वित्यर्थः ॥

---

१ ख. च. °ति । दिवा चिदह्न्यपि तमो दुर्दिनान्धकारं कृण्वन्ति कुर्वन्ति पर्जन्येन मेघेनोदकपरिपूर्णेन मरुत पृथिवीं यदा व्युन्दन्ति क्लेदयन्ति मेघा वा वृष्ट्योदकप्रवाहरूप दुर्दिनं कुर्वन्तु । भूक्लेदनार्थं य° । २ ख. च. हविषा । ३ ख. घ. च. °नार्थं ।

कल्पः—"उत्करे कृष्णांयामपक्वां स्थालीमद्भिः पूरयति सृजा वृष्टिमिति, यदि भिद्येत वर्षिष्यतीति विद्यात् " इति ।

पाठस्तु—

सृजा वृष्टिं दिव आऽद्भिः समुद्रं पृण ।, इति ।

हे मरुत्संघ दिवः सकाशाद्वृष्टिं सृज । अद्भिः समुद्रसदृशं वह्निदाहमन्तरेणाऽऽतपेन शुष्कमिमं कुम्भमापृण समन्तात्पूरय ॥

कल्पः—" अनडुपस्तम्भने शङ्कौ वा कृष्णाऽविर्बध्दा भवत्यब्जा असीति तां मोक्षति " इति ।

पाठस्तु—

अब्जा असि प्रथमजा बलमसि समुद्रियम् ।, इति ।

हेऽवेऽब्जा उदकाज्जाताऽसि मातृपित्रुदकाद्रेतोरूपेण परिणताद्रुत्पन्नाऽसि । किं च, प्रथमजा असि सुवर्भानुप्रसारितादादित्यावरकतमोभागात्प्रथममपहृतादुत्पन्नाऽसि । " तस्य यत्प्रथमं तमोऽपाघ्नन्त्सा कृष्णाऽविरभवत् " इति श्रुतेः । समुद्रियं समुद्रसदृशमेघसंबन्धि बलं वृष्ट्युत्पादनसामर्थ्यमसि । त्वय्याक्रन्दन्त्यां वृष्टिर्भविष्यतीति ज्ञातुं शक्यत्वादित्यर्थः ॥

कल्पः—" उत्करे वर्षाहुस्तम्बं प्रतिष्ठाप्योन्नम्भय पृथिवीमिति वर्षाहां जुहोति " इति ।

वर्षाहुः पुनर्नवा ।

पाठस्तु—

उन्नम्भय पृथिवीं भिन्धीदं दिव्यं नभः । उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम् ।, इति ।

हे पुनर्नवे पृथिवीमुन्नम्भयोत्कर्षेण क्लेदय, तदर्थं दिव्यं दिवि भवमिदं नभ आकाशवद्व्याप्तं मेघमण्डलं भिन्धि विदारय । विदार्य च दिव्यस्य दिवि भवस्योद्न उदकस्य वर्षणं नोऽस्मभ्यं देहि । पुनर्नवाया ओषध्या उत्पादक हे देव त्वमीशानः सन्दृतिं विसृजोदकपूर्णदृतिसमानं मेघं वर्षणाय विसृष्टद्वारं कुरु ॥

कल्पः—" ये देवा दिविभागा इत्युपर्याहवनीये कृष्णाजिनमवधूनोत्यूर्ध्वग्रीवं बहिष्ठाद्विशसनम् " इति ।

---

१ ख. 'ष्णाम' । २ क. घ. ङ. ञ. 'ति तामभिक्रन्देन्' इ' ।

( कारीरीष्टिमन्त्रव्याख्यानम् )

पाठस्तु—

ये देवा दिविभागा येऽन्तरिक्षभागा ये पृथिविभागाः। त इमं यज्ञमवन्तु त इदं क्षेत्रमा विशन्तु त इदं क्षेत्रमनु वि विशन्तु ॥, इति ॥

लोकत्रयभाजो ये देवास्ते प्रथमं यज्ञं प्रविश्य सस्यनिष्पादकं क्षेत्रं सामान्येनाऽऽविश्य ततः प्रतिक्षेत्रमनु च विशेषेण विशन्तु ॥

अत्र विनियोगसंग्रहः—

वृष्टिप्रदायां कारीर्यां देवा इत्यादिकैस्त्रिभिः।
दिनत्रये चर्मबन्धः शकटस्थे छदिस्त्रये ॥ १ ॥
उद्रो दत्तेति वाक्यं तु त्रयाणां शेष इष्यते।
दिवात्रिभिः सक्तुहोमः सृजेन्युत्तरसंस्थिताम् ॥ २ ॥
स्थालीमद्भिः पूरयित्वा कृब्जाः प्रोक्षत्यवि स्थिताम्।
उक्तं पुनर्नवाहोमो ये चर्माग्नौ तु श्रूयते ॥
अष्टमे त्वनुवाकेऽस्मिन्दश मन्त्रा उदीरिताः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ द्वितीयाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः । )

मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परि धत्त एतद्वै वृष्ट्यै रूपꣳ सरूप एव भूत्वा पर्जन्यं वर्षयति रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रति मीवति पुरोवातमेव जनयति वर्षस्यावरुद्ध्यै वातनामानि

१ च. 'क्षेत्र प्रतिकेदारम्'।

जुहोति वायुर्वै वृष्ट्यां ईशे वायुमेव स्वेन भागधेयेनोप धावति स एवास्मै पर्जन्यं वर्षयत्यष्टौ ( १ ) जुहोति चतंस्रो वै दिशश्चतंस्रोऽवान्तरदिशा दिग्भ्य एव वृष्टिꣳ सं प्र च्यावयति कृष्णाजिने सं यौति हविरेवाकरन्तर्वेदि सं यौत्यवरुद्धयै यतीनामद्यमानानाꣳ शीर्षाणि पराऽपतन्ते खर्जूरा अभवन्तेषाꣳ रसं ऊर्ध्वोऽपतत्तानि करीराण्यभवन्त्सौम्यानि वै करीराणि सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति यत्करीराणि भवन्ति ( २ ) सौम्ययैवाऽऽहुत्या दिवो वृष्टिमव रुन्धे मधुषा सं यौत्यपां वा एष ओषधीनाꣳ रसो यन्मध्वभ्द्य एवौषधीभ्यो वर्षयत्यथो अभ्द्य एवौषधीभ्यो वृष्टिं नि नयति मान्दा वाशा इति सं यौति नामधेयैरेवैना अच्छैत्यथो यथा ब्रूयादसावेहीत्येवमेवैना नामधेयैरा ( ३ ) च्यावयति वृष्णो अश्वस्य संदानमसि वृष्ट्यै त्वोप नह्यामीत्याह वृषा वा अश्वो वृषा पर्जन्यः कृष्ण इव खलु वै भूत्वा वर्षति रूपेणैवैनꣳ समर्धयति वर्षस्यावरुद्धयै ( ४ ) ॥

( अष्टौ भवन्ति नामधेयैरेकान्नत्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः । )

मारुतम् । असि । मरुताम् । ओजः । इति । कृष्णम् । वासः । कृष्णतूषमिति कृष्ण—तूषम् । परीति । धत्ते । एतत् । वै । वृष्ट्यै । रूपम् । सरूप इति स—रूपः । एव । भूत्वा । पर्जन्यम् । वर्षयति । रमयत । मरुतः । श्येनम् । आयिनम् । इति । पश्चाद्वातमिति पश्चात्—वातम् । प्रतीति । मीवति । पुरोवातमिति पुरः—वातम् । एव । जनयति । वर्षस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । वातनामानीति वात—नामानि । जुहोति । वायुः । वै । वृष्ट्याः । ईशे । वायुम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मै । पर्जन्यम् । वर्षयति । अष्टौ ( १ ) । जुहोति । चतस्रः । वै । दिशः । चतस्रः । अवान्तरदिशा इत्यवान्तर—दिशाः । दिग्भ्य इति दिक्—भ्यः । एव । वृष्टिम् । सम् । प्रेति । च्यावयति । कृष्णाजिन इति कृष्ण—अजिने । समिति । यौति । हविः । एव । अकः ।

अन्तर्वेदीत्यन्तः—वेदि । समिति । यौति । अवरुद्ध्या इत्यव—रुद्ध्यै । यतीनाम् । अद्यमानानाम् । शीर्षाणि । परेति । अपतन् । ते । खर्जूराः । अभवन् । तेषाम् । रसः । ऊर्ध्वः । अपतत् । तानि । करीराणि । अभवन् । सौम्यानि । वै । करीराणि । सौम्या । खलु । वै । आहुतिरित्या—हुतिः । दिवः । वृष्टिम् । च्यावयति । यत् । करीराणि । भवन्ति ( २ ) । सौम्यया । एव । आहुत्येत्या—हुत्या । दिवः । वृष्टिम् । अवेति । रुन्धे । मधुषा । समिति । यौति । अपाम् । वै । एषः । ओषधीनाम् । रसः । यत् । मधु । अभ्य इत्यत्—भ्यः । एव । ओषधीभ्य इत्योषधि—भ्यः । वर्षति । अथो इति । अभ्य इत्यत्—भ्यः । एव । ओषधीभ्य इत्योषधि—भ्यः । वृष्टिम् । नीति । नयति । मान्दाः । वाशाः । इति । समिति । यौति । नामधेयैरिति नाम—धेयैः । एव । एनाः । अच्छ । एति । अथो इति । यथा । ब्रूयात् । असौ । एति । इहि । इति । एवम् । एव । एनाः । नामधेयैरिति नाम—धेयैः । एति ( ३ ) । च्यावयति । वृष्णः । अश्वस्य । संदानमिति सं—दानम् । असि । वृष्ट्यै । त्वा । उपेति । नह्यामि । इति ।

आह । वृषा । वै । अश्वः । वृषा । पर्जन्यः । कृष्णः । इव । खलु । वै । भूत्वा । वर्षति । रूपेण । एव । एनम् । समिति । अर्धयति । वर्षस्य । अवरुद्ध्या इत्यव—रुद्ध्यै ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( अथ द्वितीयकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः । )

कारीर्युत्तरभागस्था मन्त्रा अष्टम ईरिताः ॥
अथ नवमे पूर्वभागस्थाः सप्तमानुवाकोक्तमन्त्रा व्याख्यायन्ते ।
तत्र यजमानस्य वस्त्रपरिधानं विधत्ते—

मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परि धत्त एतद्वै वृष्टयै रूपᳩ सरूप एव भूत्वा पर्जन्यं वर्षयति, इति ।

तूषा वस्त्रस्य दशास्ताः कृष्णा यस्य तत्कृष्णतूषम् । जलपरितैर्मेघैरादित्यप्रकाशे सर्वत आवृते सति वृष्टेः स्वरूपं कृष्णं भाति । यजमानोऽपि कृष्णवस्त्रप्रावरणो वृष्टिसमानरूपः सन्पर्जन्यं वर्षयितुं प्रभुर्भवति ॥
मन्त्रान्तरं विनियुङ्क्ते—

रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रति मीवति पुरोवातमेव जनयति वर्षस्यावरुद्ध्यै, इति ।

प्रतिमीवति प्रतिबध्नाति ॥
पुरोवातो वर्षन्नित्यादिमन्त्राणां विनियोगं दर्शयति—

वातनामानि जुहोति वायुर्वै वृष्ट्या

१ ख. च. 'रणाद्वृष्टि' ।

ईशे वायुमेव स्वेन भागधेयेनोप धावति स एवास्मै पर्जन्यं वर्षयति, इति।

जिन्वरुग्ररित्यादीनि वायोर्नामानि तदुद्देशेन होमे सति यो वायुर्वृष्टेरीश्वरः स तुष्टः सन्वर्षयति ॥

पाठप्राप्तां मन्त्रसंख्यां प्रशंसति—

अष्टौ जुहोति चतस्रो वै दिशश्च-
तस्रोऽवान्तरदिशा दिग्भ्य एव
वृष्टिꣳ सं प्र च्यावयति, इति ॥

मान्दा वाशा इति मन्त्रेण सक्तूनां संयवनं यद्विधास्यते तस्याऽऽधारं विधत्ते—

कृष्णाजिने सं यौति हविरेवाकः, इति।

प्रकृतौ कृष्णाजिने हविःस्वरूपान्व्रीहीनवहन्ति तण्डुलान्पिनष्टि च। अतोऽत्रापि कृष्णाजिने[१] संयवने वा हविः कृतं भवति ॥

देशविशेषं विधत्ते—

अन्तर्वेदि सं यौत्यवरुद्ध्यै, इति।

वेदेर्बहिः संयवने यज्ञभूमिमप्रविश्य हविर्नावरुध्यते ॥

करीराणि विधातुं प्रस्तौति—

यतीनामद्यमानानाꣳ शीर्षाणि पराऽपतन्ते
खर्जूरा अभवन्तेषाꣳ रस ऊर्ध्वोऽपतत्तानि करी-
राण्यभवन्त्सौम्यानि वै करीराणि सौम्या खलु
वा आहुतिर्दिवो वृष्टिं च्यावयति, इति।

पारमहंस्यरूपं चतुर्थाश्रमं प्राप्तानां येषां यतीनां मुखे ब्रह्मात्मप्रतिपादको वेदान्तशब्दो नास्ति तान्यतीनिन्द्र आरण्येभ्यः श्वभ्यः प्रायच्छत्। तथा कौषीतकिब्राह्मणोपनिषदीन्द्रस्य प्रतिज्ञा[२] समाम्नायते—"अरुन्मुखान्यतीन्त्सालावृकेभ्यः प्रायच्छम्[३]" इति। पतितत्वात्तेषां तथात्वं युक्तम्। तथा च स्मर्यते—

"नित्यकर्म परित्यज्य वेदान्तश्रवणं विना।
वर्तमानस्तु संन्यासी पतत्येव न संशयः ॥" इति ॥

१ ख. ॰ने ह॰। २ क. ग. ङ. ॰ज्ञासमाम्नाये—"अ॰। ३ क. घ. ङ. च. ॰च्छन्' इ॰।

तेषां च सालावृकैर्भक्षणं षष्ठकाण्डे समाम्नायते—" इन्द्रो यतीन्त्सालावृकेभ्यः प्रायच्छत्तान्दक्षिणत उत्तरवेद्या आदन् " इति । वेदान्तश्रवणवाञ्छां विना नित्यकर्म परित्यक्तवतां भवनामपीदृशी गतिरिति दर्शयितुं वेदिसमीपे भक्षणम् । सालावृकैर्भक्ष्यमानानां यतीनां यानि शीर्षाणि कपालास्थीनि भूमावपतन् , तानि खर्जूरवृक्षत्वेनोदभवन् । ये तालाभिधाना महाखर्जूरास्तेषां फलानि शिरःकपालसदृशानि लक्ष्यन्ते । तेषां फलानां रस ऊर्ध्वमुत्क्रम्य भूमावपतत् । पतित्वा च सोमलतासदृशीनां लतानां सोमप्रतिनिधिभूतानामङ्कुररूपाणि करीरशब्दवाच्यान्यभवन् । अत एव सोमाङ्कुरसदृशत्वात्सौम्यानि करीराणि, तदाहुतिश्च सौम्या सती दिवः सकाशाद्वृष्टिं प्रच्यावयति ।

" अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिः " इति स्मृतेः ॥

सक्तूनां प्रकृतिद्रव्यं विधत्ते—

यत्करीराणि भवन्ति सौम्ययैवाऽऽहुत्या दिवो वृष्टिमव रुन्धे , इति ॥

संयवनसाधनं माक्षिकद्रव्यं विधत्ते—

मधुषा सं योत्यपां वा एष ओषधीनाꣳ रसो यन्मध्वद्भ्य एवौषधीभ्यो वर्षयत्यथो अद्भ्य एवौषधीभ्यो वृष्टिं नि नयति , इति ।

मक्षिका हि नानाविधेभ्यः पुष्पेभ्यो रसानादाय मधु कुर्वन्ति । तेषां च रसानामोषधिजन्यत्वाद्द्रवत्वाच्चोभयसारत्वम् ॥

मन्त्रेण संयवनं विधत्ते—

मान्दा वाशा इति सं योति नामधेयैरेवैना अच्छैत्यथो यथा ब्रूयादसावेहीत्येवमेवैना नामधेयैरा च्यावयति, इति ।

मान्दादीन्यपां नामानि तैरेना अभिमुखत्वेन प्राप्नोति । किंच, हे देवदत्त समागच्छेति यथा लोके ब्रूयादेवमेवैना अपः स्वनामभिराच्यावयति ॥

कृष्णाजिनबन्धनमन्त्रं व्याचष्टे—

वृष्णो अश्वस्य संदानमसि वृष्ट्यै त्वोप नह्या-

१ ख. ग. °णमेव । सा° ।

मीत्याह वृषा वा अश्वो वृषा पर्जन्यः कृष्ण इव खलु वै भूत्वा वर्षति रूपेणैवै-नः समर्धयति वर्षस्यावरुद्ध्यै ॥ , इति ॥

यथाऽश्वो वृषा सेचनसमर्थ एवं पर्जन्योऽपि सेचनसमर्थः संश्चुदकपूर्णे(रणे)-न कृष्ण एव भूत्वा पश्चाद्वर्षति । अतः कृष्णेन रज्जुरूपेणैनं पर्जन्यं समृद्धं करोति । तच्च वर्षस्यावरोधाय संपद्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-दीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः । )

दे॒वा व॑स॒व्या॑ देवाः॒ शर्म॑ण्या॒ देवाः॒ सपी॑-त॒य इ॒त्या ब॑ध्नाति दे॒वता॑भिरे॒वान्वहं॒ वृष्टि॑मि-च्छति॒ यदि॑ व॒र्षेत्ताव॑त्ये॒व होत॒व्यं॑ यदि॒ न व॒र्षेच्छ्वो भू॒ते ह॒विर्निर्व॑पेदहोरा॒त्रे वै मि॒त्रावरु॑-णावहोरा॒त्राभ्यां॒ खलु॒ वै प॒र्जन्यो॑ वर्षति॒ नक्तं॑ वा हि दिवा॑ वा॒ वर्ष॑ति मि॒त्रावरु॑णावे॒व स्वेन॑ भा॒ग॒धेये॒नोप॑ धावति॒ ताव॒वास्मै॑ ( १ ) अहो-रा॒त्राभ्यां॑ प॒र्जन्यं॑ वर्षयतो॒ऽग्नये॑ धाम॒च्छदे॑ पु॒रोडाश॑म॒ष्टाक॑पालं॒ निर्व॑पे॒न्मारु॒तꣳ स॒प्तक॑पाल॒ꣳ सौ॒र्यमेक॑कपालम॒ग्निर्वा इ॒तो वृष्टि॑मु॒दीरयति म॒रुतः॑ सृ॒ष्टां न॑यन्ति॒ य॒दा खलु॒ वा अ॒सावा॑-दि॒त्यो न्य॑ङ्र॒श्मिभिः॑ पर्याव॒र्तते॒ऽथ॑ वर्षति

धामच्छद्दिव खलु वै भूत्वा वर्षत्येता वै देवता वृष्ट्या ईशते ता एव स्वेन भागधेयेनोप धावति ताः ( २ ) एवास्मै पर्जन्यं वर्षयन्त्युतावर्षिष्यन्वर्षत्येव सृजा वृष्टिं दिव आऽद्भिः समुद्रं पृणेत्याहिमाश्चैवामूश्चापः समर्धयत्यथो आभिरेवामूरच्छैत्यब्जा असि प्रथमजा बलमसि समुद्रियमित्याह यथायजुरेवैतदुन्नम्भय पृथिवीमिति वर्षाह्वां जुहोत्येषा वा ओषधीनां वृष्टिवनिरतयैव वृष्टिमा च्यावयति ये देवा दिविभागा इति कृष्णाजिनमव धूनोतीम एवास्मै लोकाः प्रीता अभीष्टा भवन्ति (३)॥

( अस्मै धावति ता वा एकविं८ शतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके दशमोऽनुवाक । )

देवाः । वसव्याः । देवाः । शर्मण्याः । देवाः । सपीतय इति स—पीतयः । इति । एति । बध्नाति । देवताभिः । एव । अन्वहमित्यनु—अहम् । वृष्टिम् । इच्छति । यदि । वर्षेत् । तावति । एव । होतव्यम् । यदि । न । वर्षेत् । श्वः । भूते । हविः । निरि-

ति । वपेत् । अहोरात्रे इत्यहः—रात्रे । वै । मित्राव-
रुणाविति मित्रा—वरुणौ । अहोरात्राभ्यामित्यहः—
रात्राभ्याम् । खलु । वै । पर्जन्यः । वर्षति । नक्त-
म् । वा । हि । दिवा । वा । वर्षति । मित्रावरुणा-
विति मित्रा—वरुणौ । एव । स्वेन । भागधेयेनेति
भाग—धेयेन । उपेति । धावति । तौ । एव ।
अस्मै ( १ ) । अहोरात्राभ्यामित्यहः—रात्राभ्याम् ।
पर्जन्यम् । वर्षयतः । अग्नये । धामच्छद इति
धाम—छदे । पुरोडाशम । अष्टाकपालमित्यष्टा—क-
पालम् । निरिति । वपेत् । मारुतम् । सप्तकपाल-
मिति सप्त—कपालम् । सौर्यम् । एककपालमित्ये-
क—कपालम् । अग्निः । वै । इतः । वृष्टिम् । उदि-
ति । ईरयति । मरुतः । सृष्टाम् । नयन्ति । यदा ।
खलु । वै । असौ । आदित्यः । न्यङ् । रश्मिभि-
रिति रश्मि- भिः । पर्यावर्तत इति परि—आवर्तते ।
अथ । वर्षति । धामच्छदिति धाम—छत् । इव ।
खलु । वै । भूत्वा । वर्षति । एताः । वै । देवताः ।
वृष्ट्याः । ईशते । ताः । एव । स्वेन । भागधेयेनेति
भाग—धेयेन । उपेति । धावति । ताः (२) । एव ।
अस्मै । पर्जन्यम् । वर्षयन्ति । उत । अवर्षिष्यन् ।

वर्षति । एव । सृज । वृष्टिम् । दिवः । एति । अद्भिरित्यत्–भिः । समुद्रम् । पृण । इति । आह । इमाः । च । एव । अमूः । च । अपः । समिति । अर्धयति । अथो इति । आभिः । एव । अमूः । अच्छ । एति । अब्जा इत्यप्–जाः । असि । प्रथमजा इति प्रथम–जाः । बलम् । असि । समुद्रियम् । इति । आह । यथायजुरिति यथा–यजुः । एव । एतत् । उदिति । नम्भय । पृथिवीम् । इति । वर्षाह्वामिति वर्ष–ह्वाम् । जुहोति । एषा । वै । ओषधीनाम् । वृष्टिवनिरिति वृष्टि–वनिः । तया । एव । वृष्टिम् । एति । च्यावयति । ये । देवाः । दिविभागा इति दिवि–भागाः । इति । कृष्णाजिनमिति कृष्ण–अजिनम् । अवेति । धूनोति । इमे । एव । अस्मै । लोकाः । प्रीताः । अभीष्टा–इत्यभि–इष्टाः । भवन्ति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ द्वितीयकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः । )

---

प्राच्याङ्गमन्त्राः कारीर्या व्याख्याता नवमे स्फुटम् ॥
अथोत्तरभागस्थमन्त्रा दशमे व्याख्यायन्ते ।

तत्र त्रिषु दिनेषु क्रमेण च्छदिस्त्रये सक्तुबन्धनार्थं मन्त्रान्विनियुङ्क्ते—

देवा वसव्या देवाः शर्मण्या देवाः सपीतय इत्या बध्नाति देवताभिरेवान्वहं वृष्टिमिच्छति, इति ।

तत्तन्मन्त्रोक्ताभिर्देवताभिरनुगृहीतः प्रतिदिनं वृष्टिमिच्छति ॥

तत्र वर्षावर्षपक्षयोर्व्यवस्थया सक्तुहोमं पुरोडाशनिर्वापं च विधत्ते—

यदि वर्षेत्तावत्येव होतव्यं यदि न वर्षेच्छ्वो भूते हविर्निर्वपेत्, इति ।

तावत्येव सक्तुबन्धने कृते सति वर्षणपक्षे पुरोडाशनिर्वापमन्तरेण पिण्डीर्जुहुयात् । प्रथमदिने वृष्टौ सत्यां पिण्डत्रयहोमेनैव कर्मसमाप्तिः । तथा द्वितीयतृतीययोर्दिनयोः । त्रिष्वपि दिनेषु वृष्ट्यभावे चतुर्थदिने पुरोडाशनिर्वापं कुर्यात् ॥

अहोरात्रावसक्तं भवतीति वदता सूत्रकारेणात्यन्तसंयोगवाचिनीं द्वितीयां प्रयुञ्जानेनाहोरात्रयोर्निरन्तरं बन्धनं यदुक्तं तद्विधिमर्थवादेनोन्नयति—

अहोरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षति नक्तं[1] वा हि दिवा वा वर्षति मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवास्मा अहोरात्राभ्यां पर्जन्यं वर्षयतः, इति ।

अह्नः सूर्यप्रकाशयुक्तत्वान्मित्रत्वम् । रात्रेरन्धकारेण लीनं(णाऽऽवरक)त्वाद्वरुणत्वम् । पर्जन्यश्चाहोरात्राभ्यामन्तरेण वर्षितुं न क्षमः । कुतः । कालान्तरस्याभावात् । तथा सति रात्रौ दिवसे वा सर्वदा वर्षिष्यतीति ज्ञातुमशक्यत्वान्निरन्तरं बन्धनीयम् । तेन तुष्टौ मित्रावरुणौ वर्षयतः ॥

हविर्निर्वपेदिति सामान्येन यदुक्तं तदेव विशेषतः प्रपञ्चयति—

अग्नये धामच्छदे पुरोडाशमष्टाकपालं निर्वपेन्मारुतꣳ सप्तकपालꣳ सौर्यमेककपालमग्निर्वा इतो वृष्टिमुदीरयति मरुतः सृष्टां नयन्ति यदा खलु वा असावादित्यो न्यङ्रश्मिभिः

१ क. घ. ङ. च. 'नक्तं वा'

पर्यावर्ततेऽथ वर्षति धामच्छदिव खलु वै भूत्वा वर्षत्येता वै देवता वृष्ट्या ईशते ता एव स्वेन भागधेयेनोप धावति ता एवास्मै पर्जन्यं वर्षयन्त्युतावर्षिष्यन्वर्षत्येव, इति।

धामा ह यत्ते अजरेति याज्यानुवाक्ययोर्धामशब्दोपेतत्वाद्धामच्छदग्निः। तदर्थस्तु धामान्यस्मद्गृहादीन्यन्धकारापादिकया वृष्ट्याऽऽच्छादयतीति धामच्छत्तस्मै निर्वापः। अग्नौ प्रास्ताऽऽहुतिरितिस्मृत्यनुसारेणाग्निरस्माल्लोकादाहुत्यादित्यद्वारा वृष्टिमुत्पादयति। सृष्टामुत्पादितां तां वृष्टिं मरुतो यत्र तत्र नयन्ति। यस्मिन्कालेऽसावादित्यो न्यग्भूतस्तीव्रै रश्मिभिः परित आवर्ततेऽतिशयेन संतापं करोति तदा पर्जन्यद्वारा वर्षति। वर्षन्स धामानि गृहादीन्याच्छादयन्निव बहुलमेघयुक्तो भूत्वा वर्षति। तथा सत्यग्निर्मरुत आदित्य इत्येता एव देवता वृष्टिनियमनाय समर्थाः। ताश्च हविर्भिस्तुष्टा यजमानार्थं वर्षयन्ति। यद्यपि पर्जन्यः स्वयमेवावर्षिष्यन्निव पूर्वं स्थितस्तथाऽप्येताभिर्देवताभिः प्रेरितः क्षणमात्रेण पुरोवातादिसामग्रीं संपाद्य सर्वथा वर्षत्येव॥

आमस्थालीपूरणमन्त्रं व्याचष्टे—

सृजा वृष्टिं दिव आऽद्भिः समुद्रं पृणेत्याहेमाश्चैवामूश्चापः समर्धयत्यथो आभिरेवामूरच्छैति, इति।

अद्भिः पृणेत्यनेनेमा भूलोकस्था अपः समर्धयति। सृजा वृष्टिमित्यनेनामूः स्वर्गस्था अपः समर्धयति। किं चाऽऽभिरेव भूलोकस्थाभिरद्भिरमूरच्छैति स्वर्गस्था अपः प्राप्तुं गच्छति॥

कृष्णाविप्रोक्षणमन्त्रस्य स्पष्टार्थतां दर्शयति—

अब्जा असि प्रथमजा बलमसि समुद्रियमित्याह यथायजुरेवैतत्, इति॥

पुनर्नवायां होमं विधत्ते—

उन्नम्भय पृथिवीमिति वर्षाह्वां जुहोत्येषा वा ओषधीनां वृष्टिवनिस्तयैव वृष्टिमा च्यावयति, इति।

एषा वै पुनर्नवैवौषधीनां सर्वासां मध्ये वृष्टिवनिर्वृष्टिभाक्, वर्षतौ बहुलतरसमुद्भवात्॥

मन्त्रान्तरं विनियुङ्क्ते—

ये देवा दिविभागा इति कृष्णाजिनमव धूनोतीम एवास्मै लोकाः प्रीता अभीष्टा भवन्ति॥, इति॥

दिवि भागा अन्तरिक्षभागाः पृथिविभागा इत्युक्तत्वाल्लोकाः प्रीताः सन्तो यजमानायाभीष्टप्रदा भवन्ति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः॥ १०॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके एकादशोऽनुवाकः । )

सर्वाणि छन्दांस्येतस्यामिष्ट्यामनूच्या-नीत्याहुस्त्रिष्टुभो वा एतद्वीर्यं यत्ककुदुष्णिहा जगत्यै यदुष्णिहककुभावन्वाह तेनैव सर्वाणि छन्दांस्यव रुन्धे गायत्री वा एषा यदुष्णिहा यानि चत्वार्यध्यक्षराणि चतुष्पाद एव ते पशवो यथा पुरोडाशे पुरोडाशोऽध्येवमेव तद्यदृच्यध्यक्षराणि यज्जगत्या ( १ ) परिदध्यादन्तं यज्ञं गमयेत्त्रिष्टुभा परि दधातीन्द्रियं वै वीर्यं त्रिष्टुगिन्द्रिय एव वीर्यं यज्ञं प्रति ष्ठापयति नान्तं गमयत्यग्ने त्री ते वाजिना त्री षधस्थेति त्रिवत्या परि दधाति सरूपत्वाय सर्वो वा एष यज्ञो यत्त्रैधातवीयं कामायकामाय प्र युज्यते सर्वेभ्यो हि कामेभ्यो यज्ञः

प्रयुज्यते त्रैधातवीयेन यजेताभिचरन्त्सर्वो वै (२) एष यज्ञो यत्त्रैधातवीयꣳ सर्वेणैवैनं यज्ञेनाभि चरति स्तृणुत एवैनमेतयैव यजेताभिचर्यमाणः सर्वो वा एष यज्ञो यत्त्रैधातवीयꣳ सर्वेणैव यज्ञेन यजते नैनमभिचरन्त्स्तृणुत एतयैव यजेत सहस्रेण यक्ष्यमाणः प्रजातमेवैनद्ददात्येतयैव यजेत सहस्रेणेजानोऽन्तं वा एष पशूनां गच्छति (३) यः सहस्रेण यजते प्रजापतिः खलु वै पशूनसृजत ताꣳस्त्रैधातवीयेनैवासृजत य एवं विद्वाꣳस्त्रैधातवीयेन पशुकामो यजते यस्मादेव योनेः प्रजापतिः पशूनसृजत तस्मादेवैनान्त्सृजत उपैनमुत्तरꣳ सहस्रं नमति देवताभ्यो वा एष आ वृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत सर्वो वा एष यज्ञः (४) यत्त्रैधातवीयꣳ सर्वेणैव यज्ञेन यजते न देवताभ्य आ वृश्च्यते द्वादशकपालः पुरोडाशो भवति ते त्रयश्चतुष्कपालास्त्रिषमृद्धत्वाय त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्या उत्तरउत्तरो ज्यायान्भवत्येवमिव

हीमे लोका यवमयो मध्यं एतद्वा अन्तरि-
क्षस्य रूपꣳ समृद्ध्यै सर्वेषामभिगमयन्नवं
द्यत्यछंम्बट्कारꣳ हिरण्यं ददाति तेजं एव
( ५ ) अवं रुन्धे तार्प्यं ददाति पशूनेवावं
रुन्धे धेनुं ददात्याशिषं एवावं रुन्धे साम्नो वा
एष वर्णो यद्धिरण्यं यजुंषां तार्प्यमुंक्थाम-
दानां धेनुरेतानेव सर्वान्वर्णानवं रुन्धे ( ६ ) ॥

( जगंत्याऽभिचरन्त्सर्वो वै गच्छति यज्ञस्तेजं एव त्रिꣳशच्चं । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ द्वितीयाष्टके चतुर्थप्रपाठक एकादशोऽनुवाक । )

---

सर्वाणि । छन्दांꣳसि । एतस्याम् । इष्ट्याम् ।
अनूच्यानीत्यंनु—उच्यानि । इति । आहुः । त्रिष्टुभः ।
वै । एतत् । वीर्यम् । यत् । ककुत् । उष्णिहा ।
जगंत्यै । यत् । उष्णिहककुभावित्युंष्णिह—ककुभौ ।
अन्वाहेत्यंनु—आहं । तेनं । एव । सर्वाणि । छन्दां-
ꣳसि । अवेति । रुन्धे । गायत्री । वै । एषा । यत् ।
उष्णिहा । यानिं । चत्वारि । अधीतिं । अक्षराणि ।
चतुंष्पाद् इति चतुंः—पादः । एव । ते । पशवः ।
यथा । पुरोडाशे । पुरोडाशः । अधीतिं । एवम् ।

एव । तत् । यत् । ऋचि । अधीति । अक्षराणि । यत् । जगत्या (१)। परिदध्यादिति परि—दध्यात् । अन्तम् । यज्ञम् । गमयेत् । त्रिष्टुभा । परीति । दधाति । इन्द्रियम् । वै । वीर्यम् । त्रिष्टुक् । इन्द्रिये । एव । वीर्ये । यज्ञम् । प्रतीति । स्थापयति । न । अन्तम् । गमयति । अग्ने । त्री । ते । वाजिना । त्री । सधस्थेति सध—स्था । इति । त्रिवत्येति त्रि—वत्या । परीति । दधाति । सरूपत्वायेति सरूप—त्वाय । सर्वः । वै । एषः । यज्ञः । यत् । त्रैधातवीयम् । कामायकामायेति कामाय—कामाय । प्रति । युज्यते । सर्वेभ्यः । हि । कामेभ्यः । यज्ञः । प्रयुज्यत इति प्र—युज्यते । त्रैधातवीयेन । यजेत । अभिचरन्नित्यभि—चरन् । सर्वः । वै (२)। एषः । यज्ञः । यत् । त्रैधातवीयम् । सर्वेण । एव । एनम् । यज्ञेन । अभीति । चरति । स्तृणुते । एव । एनम् । एतया । एव । यजेत । अभिचर्यमाण इत्यभि—चर्यमाणः । सर्वः । वै । एषः । यज्ञः । यत् । त्रैधातवीयम् । सर्वेण । एव । यज्ञेन । यजते । न । एनम् । अभिचरन्नित्यभि—चरन् । स्तृणुते । एतया । एव । यजेत । सहस्रेण । यक्ष्यमाणः । प्रजातमिति प्र—

जातम् । एव । एनत् । ददाति । एतया । एव । यजेत । सहस्रेण । ईजानः । अन्तम् । वै । एषः । पशूनाम् । गच्छति ( ३ ) । यः । सहस्रेण । यजते। प्रजापतिरिति प्रजा—पतिः । खलु । वै । पशून् । असृजत । तान् । त्रैधातवीयेन । एव । असृजत । यः । एवम् । विद्वान् । त्रैधातवीयेन । पशुकाम इति पशु—कामः । यजते । यस्मात् । एव । योनेः । प्रजापतिरिति प्रजा—पतिः । पशून् । असृजत । तस्मात् । एव । एनान् । सृजते । उपेति । एनम् । उत्तरमित्युत्—तरम् । सहस्रम् । नमति । देवताभ्यः । वै । एषः । एति । वृश्च्यते । यः । यक्ष्ये । इति । उक्त्वा । न । यजते । त्रैधातवीयेन । यजेत । सर्वः । वै । एषः । यज्ञः ( ४ ) । यत् । त्रैधातवीयम् । सर्वेण । एव । यज्ञेन । यजते । न । देवताभ्यः । एति । वृश्च्यते । द्वादशकपाल इति द्वादश—कपालः । पुरोडाशः । भवति । ते । त्रयः । चतुष्कपाला इति चतुः—कपालाः । त्रिष्षमृद्धत्वायेति त्रिष्षमृद्ध—त्वाय । त्रयः । पुरोडाशाः । भवन्ति । त्रयः । इमे । लोकाः । एषाम् । लोकानाम् । आप्त्यै । उत्तरउत्तर इत्युत्तरः—उत्तरः । ज्यायान् ।

भवति । एवम् । इव । हि । इमे । लोकाः । यव-
मय इति यव—मयः । मध्ये । एतत् । वै । अन्त-
रिक्षस्य । रूपम् । समृद्ध्या इति सम्—ऋद्ध्यै ।
सर्वेषाम् । अभिगमयन्नित्यभि—गमयन् । अवेति ।
द्यति । अर्छम्बट्कारमित्यर्छम्बट्—कारम् ।
हिरण्यम् । ददाति । तेजः । एव ( ५ ) । अवेति ।
रुन्धे । तार्प्यम् । ददाति । पशून् । एव । अवेति ।
रुन्धे । धेनुम् । ददाति । आशिष इत्या—शिषः ।
एव । अवेति । रुन्धे । साम्नः । वै । । एषः । वर्णः ।
यत् । हिरण्यम् । यजुषाम् । तार्प्यम् । उक्थामदा-
नामित्युक्थ—मदानाम् । धेनुः । एतान् । एव ।
सर्वान् । वर्णान् । अवेति । रुन्धे ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके
चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

( अथ द्वितीयकाण्डे चतुर्थप्रपाठक एकादशोऽनुवाकः । )

अनुवाके तु दशमे कारीरीष्टिः समापिता ॥
अथैकादशे त्रैधातवीयेष्टिर्विधीयते ।
तत्राऽऽदौ सामिधेनीषु द्वे धाय्ये विधत्ते—

सर्वाणि छन्दाꣳस्येतस्यामिष्ट्यामनूच्यानी-
त्याहुस्त्रिष्टुभो वा एतद्वीर्यं यत्ककुद्-

१ ख च. °विधातव्या । त° ।

ष्णिहा जगत्यै यदुष्णिहककुभावन्वाह
तेनैव सर्वाणि छन्दाꣳस्यव रुन्धे, इति।

एतस्यां त्रैधातवीयेष्टौ सामिधेनीरूपेण सर्वाण्यपि छन्दांस्यनुवक्तव्यानीत्यभिज्ञा आहुः। तत्तु सर्वच्छन्दोनुवचनं कथं घटत इति तदुच्यते—ककुच्छन्दस्त्रिष्टुभः सारम्, उष्णिक्छन्दो जगत्याः सारम्। अतस्तदुभयानुवचनेन सर्वच्छन्दोनुवचनं संपद्यते। प्र सो अग्ने तवोतिभिरित्येषा ककुत्तदीयेषु त्रिषु पादेषु मध्यमपादस्य द्वादशाक्षरत्वात्। प्र होत्रे पूर्व्यं वच इत्येषोष्णिक्तदीयेषु त्रिषु पादेष्वन्तिमपादस्य द्वादशाक्षरत्वात्॥

एतदुभयवचनेन त्रिष्टुब्जगत्योर्लाभेऽपि गायत्र्या अलाभशङ्कां वारयितुमन्तर्भावं दर्शयति—

गायत्री वा एषा यदुष्णिहा यानि चत्वार्यध्यक्षराणि चतुष्पाद एव ते पशवो यथा पुरोडाशे पुरोडाशोऽध्येवमेव तद्यदृच्यध्यक्षराणि, इति।

उष्णिक्छन्दसोऽष्टाविंशत्यक्षराणि। तत्र चतुर्विंशत्यक्षरैर्गायत्र्यन्तर्भूता। यान्यधिकाक्षराणि चत्वारि सन्ति ते चतुष्पात्पशुस्वरूपा एव। पूर्वस्मिन्प्रपाठके त्रिधाताविष्टौ पुरोडाशस्योपरि पुरोडाशान्तरस्थापनं विहितम्। एवमत्रापि विधास्यते। एवं सति यथा पुरोडाशेऽध्युपर्यन्यः पुरोडाशः स्थाप्यते, एवमेवोष्णिक्छन्दस्कायामृचि गायत्रीछन्दोक्षरसंख्याया अधिकाक्षराणि चत्वारीति यत्तदवगन्तव्यम्। अतः पुरोडाशसाम्यायाक्षराधिक्यं युक्तमित्यभिप्रायः॥

+ प्रकृतौ द्वे ऋचावुक्ते आ जुहोत दुवस्यतेति गायत्री सामिधेनी, त्वं वरुण इति जगती भवति[1], ते अपवदितुं त्रिष्टुभं विधत्ते—

यज्जगत्या परिदध्यादन्तं यज्ञं गमयेत्त्रिष्टुभा परि दधातीन्द्रियं वै वीर्यं त्रिष्टुगिन्द्रिय एव वीर्ये यज्ञं प्रति ष्ठापयति नान्तं गमयति, इति।

---

+ प्रकृतावा जुहोत दुवस्यतेति गायत्री सामिधेनीषु परिधानीया भवति, तामपवदितुमिति तै०। इति ख पुस्तके पाठान्तरम्।

१ क घ ङ ति, ताम्प।

उष्णिक्छन्दसो जगतीवीर्यत्वेन निरूपितत्वात्तदेवात्र जगतीशब्देन विवक्ष्यते । तस्मिश्चोष्णिक्छन्दसि गायत्र्यन्तर्भावस्योक्तत्वाल्लक्षितलक्षणया जगतीशब्दो गायत्रीं ब्रूते । तथा सति प्रकृतिवद्गायत्र्या परिधानं यत्तदेवात्र जगतीपरिधानमिति विवक्षितत्वात्तत्र बाध इत्युच्यते । अथवा शाखान्तरानुसारेण मुख्ययैव जगत्याऽत्र प्राप्तं परिधानं लुप्यते । तत्परिधाने हि यज्ञं नाशितवान्भवति । अथ त्रिष्टुभा परिदध्यात्सामिधेनीः समापयेदित्यर्थः । त्रिष्टुभ इन्द्रियसामर्थ्यरूपत्वाद्यज्ञं सामर्थ्ये प्रतिष्ठापितवान्भवति । ततो यज्ञं न नाशयति ॥

तां त्रिष्टुभं दर्शयति—

अग्ने त्री ते वाजिना त्री षधस्थेति
त्रिवत्या परि दधाति सरूपत्वाय, इति ।

त्रिशब्दा बहवो यस्यां सन्तीति त्रिवती । सेयं तृतीयकाण्डस्य द्वितीयप्रपाठके समाम्नास्यमानत्वात्तत्रैव व्याख्यास्यते । यथाऽस्यामृचि त्रिशब्दस्तथा त्रैधातवीयकर्मनामन्यपि त्रिशब्दोऽस्तीति सारूप्यम् ॥

सर्वकामसाधनत्वेन यागं विधत्ते—

सर्वो वा एष यज्ञो यत्त्रैधातवीयं
कामायकामाय प्र युज्यते सर्वेभ्यो हि
कामेभ्यो यज्ञः प्रयुज्यते , इति ।

सर्वेषु यज्ञेषु यानि च्छन्दांसि प्रयोक्तव्यानि तानि सर्वाण्यत्रोष्णिक्ककुद्भ्यामेवावरुध्यानीत्युक्तम् । अतोऽयं सर्वयज्ञस्वरूपत्वादस्य यः कामोऽस्ति तेन तदर्थं प्रयोक्तव्यः । यस्माज्ज्योतिष्टोमादिरखिलो यज्ञः सर्वकामार्थं प्रयुज्यते तस्मात्सर्वयज्ञस्वरूपस्यास्य सर्वकामार्थत्वं युक्तम् ॥

सामान्येन सर्वकामार्थत्वं विधाय विशेषतोऽभिचारहेतुत्वं विधत्ते—

त्रैधातवीयेन यजेताभिचरन्त्सर्वो वा
एष यज्ञो यत्त्रैधातवीयꣳ सर्वेणैवैनं
यज्ञेनाभि चरति स्तृणुत एवैनम्, इति ॥

अभिचारपरिहारार्थत्वं विधत्ते—

एतयैव यजेताभिचर्यमाणः सर्वो वा

एष यज्ञो यत्त्रैधातवीयꣳ सर्वेणैव यज्ञेन
यजते नैनमभिचरन्त्स्तृणुते , इति।

एतयैव त्रैधातवीयेष्ट्यैव ॥

सहस्रदक्षिणाकस्य ज्योतिर्विश्वज्योतिरप्तोर्याममहाव्रतादेरनुष्ठानसिद्धिं प्रति साधनत्वं विधत्ते—

एतयैव यजेत सहस्रेण यक्ष्य-
माणः प्रजातमेवैनद्ददाति, इति।

यस्तु सहस्रदक्षिणाकेन यागेन यष्टुमसमर्थः सन्नहं तेन यक्ष्य इति कामयते सोऽयमेतयेष्ट्या यजेत पश्चात्तत्र प्रजातं प्रभूतं बहुविधं सहस्रं दातुं शक्तो भवत्येव। ततस्तादृशक्रत्वनुष्ठानं सिध्यति ॥

अथ सहस्रदक्षिणाकेन यागेनेष्टवत उपरितनबहुविधयज्ञसाधनद्रव्यार्थं विधत्ते—

एतयैव यजेत सहस्रेणेजानोऽन्तं वा एष
पशूनां गच्छति यः सहस्रेण यजते प्रजापतिः
खलु वै पशूनसृजत ताꣳस्त्रैधातवीयेनैवासृजत
य एवं विद्वाꣳस्त्रैधातवीयेन पशुकामो यजते
यस्मादेव योनेः प्रजापतिः पशूनसृजत तस्मा-
देवैनान्त्सृजत उपैनमुत्तरꣳ सहस्रं नमति, इति।

यः पुमान्गोसहस्रदक्षिणाकेन यागेनेष्टवान्भवति स एष पशूनामवसानं प्राप्नोति। तेनोत्तरक्रतूननुष्ठातुमसमर्थो भवति। अतस्तत्सामर्थ्याय पशुकामः सन्प्रजापतिवदेतेनेष्ट्वा पशुयोनेरस्मादेव यागात्पशून्प्राप्नोति। तदुत्तरक्रतुषु दातव्यं गोसहस्रमेनं यजमानं प्राप्नोति ॥

यष्टुं संकल्प्याननुष्ठातुः संकल्पभ्रंशपरिहारार्थं विधत्ते—

देवताभ्यो वा एष आ वृश्च्यते यो यक्ष्य
इत्युक्त्वा न यजते त्रैधातवीयेन यजेत
सर्वो वा एष यज्ञो यत्त्रैधातवीयꣳ सर्वेणैव
यज्ञेन यजते न देवताभ्य आ वृश्च्यते, इति।

आह्व(त्र)श्चनं सर्वथा विच्छेदो देवताद्रोह इति यावत् ॥
अस्मिन्कर्मणि द्रव्यं विधत्ते—

**द्वादशकपालः पुरोडाशो भवति ते**
**त्रयश्चतुष्कपालास्त्रिषमृद्धत्वाय**, इति।

समूहाकारेण गणनायां द्वादशकपालत्वेऽप्यनुष्ठाने त्रिसंख्याकाश्चतुष्कपालाः कर्तव्याः। तथा त्रिसंख्यया यजमानस्य त्रिवारं समृद्धत्वं संपद्यते ॥
पुरोडाशसंख्यां प्रशंसति—

**त्रयः पुरोडाशा भवन्ति त्रय इमे**
**लोका एषां लोकानामाप्त्यै**, इति ॥

पूर्वप्रपाठकोक्तत्रिधाताविव प्रमाणवैषम्यं विधत्ते—

**उत्तरउत्तरो ज्यायान्भवत्येवमिव हीमे लोकाः**, इति ॥

चोदकप्राप्तं व्रीहिमयत्वमपवदितुं यवमयं विधत्ते—

**यवमयो मध्य एतद्वा अन्तरिक्षस्य रूपꣳ समृद्ध्यै**, इति।

भूलोकवर्तिनो मनुष्याः स्वर्गलोकवर्तिनः सूर्यचन्द्रादयश्च विस्पष्टमुपलभ्यन्त इत्यस्ति तयोरेकविधत्वम्। अन्तरिक्षवर्तिनस्तु यक्षगन्धर्वादयो नोपलभ्यन्त इति वैलक्षण्यम्। एवं यवमयस्येतरवैलक्षण्यादन्तरिक्षरूपत्वम्। तच्च समृद्ध्यै संपद्यते ॥

त्रिधातुवत्त्रिष्वपि पुरोडाशेषु सकृदेव हस्तस्पर्शेनावदानं विधत्ते—

**सर्वेषामभिगमयन्नव द्यत्यछम्बट्कारम्**, इति ॥

यदुक्तं सूत्रकारेण—"हिरण्यं तार्प्यं धेनुरिति दक्षिणा" इति, तदेतद्विधत्ते—

**हिरण्यं ददाति तेज एवाव रुन्धे**
**तार्प्यं ददाति पशूनेवाव रुन्धे धेनुं**
**ददात्याशिष एवाव रुन्धे साम्नो वा एष**
**वर्णो यद्धिरण्यं यजुषां तार्प्यमुक्थामदानां**
**धेनुरेतानेव सर्वान्वर्णानव रुन्धे ॥**, इति ॥

---

१ क. घ. च 'त्वेऽनु'। २ क. घ. ङ च तया।

हिरण्यस्य तेजस्वित्वात्तद्दानेन तेजःप्राप्तिः । तार्प्यस्य घृताक्तवस्त्रत्वात्तद्दानेन पशुप्राप्तिः । धेनोः कामधेनुत्वसाम्यात्तद्दानेनाऽऽशिषां प्राप्तिः । सर्वं तेजः सामरूप्य॰ ह शश्वदित्याम्नानाद्धिरण्यस्य सामवर्णत्वम् । यजुर्वेदं क्षत्रियस्याऽऽहुर्योनिमित्याम्नानत्वात्तार्प्यस्य च राजसूये क्षत्रियेण परिहितत्वादीदृशं संबन्धमभिप्रेत्य तार्प्यं यजुषां वर्णः स्वरूपमित्युच्यते । उक्थैः शस्त्रैर्देवतानां जायमाना मदा यास्वृक्षु ता ऋच उक्थामदास्तासां नवप्रसूतधेनुवद्दर्पणहेतुत्वाद्धेन्वा ऋग्वर्णत्वम् । उक्तद्रव्यत्रयदानेनोक्तान्वर्णान्प्राप्नोति ॥

अत्र मीमांसा ।

षष्ठाध्यायस्य द्वितीयपादे चिन्तितम्—

" असमाप्यं समाप्यं वा काम्यं कामे निवर्तिते ।
आद्यः प्रयोजनाभावादन्त्यो निन्दादिसंश्रवात् ॥ "

"चित्रया यजेत पशुकामः, कारीर्या वृष्टिकामो यजेत" इत्यादिषु कामप्रेरितेन पुरुषेण कर्मोपक्रान्तम् । तस्य च समाप्तेः प्रागेव केनचिन्निमित्तेन तत्फलप्राप्तौ दोषदर्शनेन वा कामो निवर्तेत तदानीं कर्मानुष्ठाने प्रयोजनाभावान्न समापनीयमिति चेन्मैवम् । प्रक्रान्तस्य कर्मणोऽसमाप्तौ निन्दाप्रायश्चित्तयोः श्रवणात् । "देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत" इति तदुभयं श्रुतम् । तस्मात्समापनीयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः । )

---

त्वष्टा॑ ह॒तपु॑त्रो॒ वीन्द्र॒॰ सोम॒माऽह॑र॒त्तस्मि॑न्नि॒न्द्र॑ उपह॒वमै॑च्छत॒ तं नोपा॑ह्वयत पु॒त्रं मेऽव॑धी॒रिति॒ स य॑ज्ञवेश॒सं कृ॒त्वा प्रा॒सहा॒ सोम॑मपिब॒त्तस्य॒ यद॒त्यशि॑ष्यत॒ तत्त्वष्टाऽऽहव॒नीय॒मुप॒ प्राव॑र्तय॒त्स्वाहेन्द्र॑शत्रु॒र्वर्ध॒स्वेति॒ स याव॑दू॒र्ध्वः

पंगाविध्यंति तावंति स्वयमेव व्यंरमत यदिं वा तावंत्प्रवणम् ( १ ) आसीद्यदिं वा ताव-दध्यग्नेरासीत्स संभवंन्नग्नीषोमांवभि समंभवत्स इंषुमात्रमिंषुमात्रं विष्वंङ्ङवर्धत स इमाँल्लोका-नंवृणोद्यदिमाँल्लोकानवृंणोत्तद्वृत्रस्यं वृत्रत्वं त-स्मादिन्द्रोंऽबिभेदपि त्वष्टा तस्मै त्वष्टा वज्रंम-सिञ्चत्तपो वै स वज्र आसीत्तमुद्यन्तुं नाशंक्नो-दथ वै तर्हि विष्णुः ( २ ) अन्या देवताऽऽसी-त्सोंऽब्रवीद्विष्णवेहीदमा हंरिष्यावो येनायमि-दमिति स विष्णुंस्त्रेधाऽऽत्मानं वि न्यंधत्त पृथिव्यां तृतीयमन्तरिक्षे तृतीयं दिवि तृतीय-मभिपर्यावर्ताद्धद्यबिभेद्यत्पृथिव्यां तृतीयमासी-त्तेनेन्द्रो वज्रमुदंयच्छद्विष्णवंनुस्थितः सोंऽब्र-वीन्मा मे प्र हारस्ति वा इदम् ( ३ ) मयिं वीर्यं तत्ते प्र दांस्यामीति तदंस्मै प्रायंच्छत्त-त्प्रत्यंगृह्णादधा मेति तद्विष्णवेऽति प्रायंच्छत्त-द्विष्णुः प्रत्यंगृह्णादस्मास्विन्द्रं इन्द्रियं दंधा-त्विति यदन्तरिक्षे तृतीयमासीत्तेनेन्द्रो वज्रमुदं-यच्छद्विष्णवंनुस्थितः सोंऽब्रवीन्मा मे प्र हार-स्ति वा इदम् ( ४ ) मयिं वीर्यं तत्ते प्र

दास्यामीति तदस्मै प्रायच्छत्तत्प्रत्यगृह्णाद्द्वि-
र्माऽधा इति तद्विष्णवेऽति प्रायच्छत्तद्विष्णुः
प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति यद्द्वि
तृतीयमासीत्तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः
सोऽब्रवीन्मा मे प्र हार्येनाहम् ( ५ ) इदम-
स्मि तत्ते प्र दास्यामीति त्वी३ इत्यब्रवीत्संधां
तु सं दधावहै त्वामेव प्र विशानीति यन्मां
प्रविशेः किं मा भुञ्ज्या इत्यब्रवीत्त्वामिवेन्धीय
तव भोगाय त्वां प्र विशेयमित्यब्रवीत्तं वृत्रः
प्राविशदुदरं वै वृत्रः क्षुत्खलु वै मनुष्यस्य
भ्रातृव्यो यः ( ६ ) एवं वेद हन्ति क्षुधं
भ्रातृव्यं तदस्मै प्रायच्छत्तत्प्रत्यगृह्णात्त्रिर्माऽ-
धा इति तद्विष्णवेऽति प्रायच्छत्तद्विष्णुः
प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति यत्त्रिः
प्रायच्छत्त्रिः प्रत्यगृह्णात्तत्त्रिधातोस्त्रिधातुत्वं यद्वि-
ष्णुरन्वतिष्ठत विष्णवेऽति प्रायच्छत्तस्मादैन्द्रा-
वैष्णवꣳ हविर्भवति यद्वा इदं किं च तदस्मै
तत्प्रायच्छदृचः सामानि यजूꣳषि सहस्रं वा
अस्मै तत्प्रायच्छत्तस्मात्सहस्रदक्षिणम् (७) ॥

( त्रैधातवीयद्रव्योद्देशेनेन्द्राविष्णुदेवताकत्वमहस्रदक्षिणत्वोविधि )

( प्रवण विष्णुर्वा इदमिदमह यो मंवत्स्येकविं९ शतिश्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः॥ १२॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाक । )

त्वष्टा । हतपुत्र इति हत—पुत्रः । वीन्द्रमिति वि—इन्द्रम् । सोमम् । एति । अहरत् । तस्मिन् । इन्द्रः । उपहवमित्युप—हवम् । ऐच्छत । तम् । न । उपेति । अह्वयत । पुत्रम् । मे । अवधीः । इति । सः । यज्ञवेशसमिति यज्ञ—वेशसम् । कृत्वा । प्रासहेति प्र—सहा । सोमम् । अपिबत् । तस्य । यत् । अत्यशिष्यतेत्यति—अशिष्यत । तत् । त्वष्टा । आहवनीयमित्या—हवनीयम् । उप । प्रेति । अवर्तयत् । स्वाहा । इन्द्रशत्रुरितीन्द्र—शत्रुः । वर्धस्व । इति । सः । यावत् । ऊर्ध्वः । पराविध्यतीति परा—विध्यति । तावति । स्वयम् । एव । वीति । अरमत । यदि । वा । तावत् । प्रवणमिति प्र—वनम् (१) । आसीत् । यदि । वा । तावत् । अग्नीति । अग्नेः । आसीत् । सः । संभवन्निति सं—भवन् । अग्नीषोमावित्यग्नी—सोमौ । अभि । समिति । अभवत् । सः । इषुमात्रमिषुमात्रमितीषुमात्रम्—इषुमा-

त्रम् । विष्वंङ् । अवर्धत । सः । इमान् । लोकान् । अवृणोत् । यत् । इमान् । लोकान् । अवृणोत् । तत् । वृत्रस्यं । वृत्रत्वमिति वृत्र—त्वम् । तस्मांत् । इन्द्रः । अबिभेत् । अपीति । त्वष्टां । तस्मै । त्वष्टां । वज्रंम् । असिञ्चत् । तपः । वै । सः । वज्रः । आसीत् । तम् । उद्यंन्तुमित्युत्—यन्तुम् । न । अशक्नोत् । अथं । वै । तर्हि । विष्णुः ( २ ) । अन्या । देवता । आसीत् । सः । अब्रवीत् । विष्णो । एति । इहि । इदम् । एति । हरिष्यावः । येन । अयम् । इदम् । इति । सः । विष्णुः । त्रेधा । आत्मानंम् । वि । नीति । अधत्त । पृथिव्याम् । तृतीयम् । अन्तरिक्षे । तृतीयम् । दिवि । तृतीयम् । अभिपर्यावर्तादित्यंभि—पर्यावर्तात् । हि । अबिभेत् । यत् । पृथिव्याम् । तृतीयम् । आसीत् । तेन । इन्द्रः । वज्रंम् । उदिति । अयच्छत् । विष्ण्वंनुस्थित इति विष्णु—अनुस्थितः । सः । अब्रवीत् । मा । मे । प्रेति । हाः । अस्ति । वै । इदम् ( ३ ) । मयि । वीर्यम् । तत् । ते । प्रेति । दास्यामि । इति । तत् । अस्मै । प्रेति । अयच्छत् । तत् । प्रतीति । अगृह्णात् । अधाः । मा । इति । । तत् । विष्णवे । अति ।

प्रेतिं । अयच्छत् । तत् । विष्णुः । प्रतीतिं । अगृह्णात् । अस्मासुं । इन्द्रंः । इन्द्रियम् । दधा- तु । इतिं । यत् । अन्तरिक्षे । तृतीयम् । आसीत् । तेनं । इन्द्रंः । वज्रंम् । उदितिं । अयच्छत् । विष्णवंनुस्थित इति विष्णुं—अनुस्थितः । सः । अब्रवीत् । मा । मे । प्रेतिं । हाः । अस्तिं । वै । इदम् (४) । मयिं । वीर्यम् । तत् । ते । प्रेतिं । दास्यामि । इतिं । तत् । अस्मै । प्रेतिं । अयच्छत् । तत् । प्रतीतिं । अगृ- ह्णात् । द्विः । मा । अधाः । इतिं । तत् । विष्णवे । अतिं । प्रेतिं । अयच्छत् । तत् । विष्णुः । प्रतीतिं । अगृह्णात् । अस्मासुं । इन्द्रंः । इन्द्रियम् । दधातु । इतिं । यत् । दिवि । तृतीयम् । आसीत् । तेनं । इन्द्रंः । वज्रंम् । उदितिं । अयच्छत् । विष्णवंनुस्थित इति विष्णुं—अनुस्थितः । सः । अब्रवीत् । मा । मे । प्रेतिं । हाः । येनं । अहम् (५) । इदम् । अस्मिं । तत् । ते । प्रेतिं । दास्यामि । इतिं । त्वी ३ । इतिं । अब्रवीत् । संधामितिं सं—धाम् । तु । समितिं । दधावहै । त्वाम् । एव । प्रेतिं ।

विशानि । इति । यत् । माम् । प्रविशेरिति प्र—विशेः । किम् । मा । भुञ्ज्याः । इति । अब्रवीत् । त्वाम् । एव । इन्धीय । तव । भोगाय । त्वाम् । प्रेति । विशेयम् । इति । अब्रवीत् । तम् । वृत्रः । प्रेति । अविशत् । उदरम् । वै । वृत्रः । क्षुत् । खलु । वै । मनुष्यस्य । भ्रातृव्यः । यः ( ६ ) । एवम् । वेद । हन्ति । क्षुधम् । भ्रातृव्यम् । तत् । अस्मै । प्रेति । अयच्छत् । तत् । प्रतीति । अगृह्णात् । त्रिः । मा । अधाः । इति । तत् । विष्णवे । अति । प्रेति । अयच्छत् । तत् । विष्णुः । प्रतीति । अगृह्णात् । अस्मासु । इन्द्रः । इन्द्रियम् । दधातु । इति । यत् । त्रिः । प्रेति । अयच्छत् । त्रिः । प्रत्यगृह्णादिति प्रति—अगृह्णात् । तत् । त्रिधातोरिति त्रि—धातोः । त्रिधातुत्वमिति त्रिधातु—त्वम् । यत् । विष्णुः । अन्वतिष्ठतेत्यनु—अतिष्ठत । विष्णवे । अति । प्रेति । अयच्छत् । तस्मात् । ऐन्द्रावैष्णवमित्यैन्द्रा—वैष्णवम् । हविः । भवति । यत् । वै । इदम् । किम् । च । तत् । अस्मै । तत् । प्रेति । अयच्छत् । ऋचः । सामानि । यजूंषि । सहस्रम् । वै ।

अस्मै। तत्। प्रेति। अयच्छत्। तस्मात्। सहस्रदक्षिणमिति सहस्र—दक्षिणम् (७)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके चतुर्थप्रपाठके द्वादशोऽनुवाकः॥ १२॥

( अथ द्वितीयकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः। )

त्रैधातवीयतद्द्रव्ये एकादश उदीरिते॥

अथ द्वादशे तस्य द्रव्यस्येन्द्राविष्णुदेवताकत्वं सहस्रदक्षिणां च विधास्यन्नादौ कर्मनाम्नि त्रिधातुत्वसंपादनायोपाख्यानं दर्शयति—

त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाऽहरत्तस्मिन्निन्द्र उपहवमैच्छत तं नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्, इति।

विश्वरूपनाम्नस्त्वष्टृपुत्रस्येन्द्रेण कृतो वध उपरितनप्रपाठकस्य प्रथमानुवाके स्पष्टी भविष्यति। स च हतपुत्रस्त्वष्टा कोपादिन्द्ररहितं सोमयागं कर्तुमुद्यतः। तस्मिन्यागे मामाह्वयेत्येवमिन्द्रोऽब्रवीत्। स तु त्वष्टा तं पुत्रं मेऽवधीरित्यवदत्। तमिन्द्रं नोपाह्वयत। स चेन्द्रो यज्ञस्य विघातं कृत्वा बलात्कारेण सोमं पीतवान्॥

अथ त्वष्टुरभिचारहोमेनेन्द्रवधहेतोः पुरुषस्योत्पत्तिं दर्शयति—

तस्य यदत्यशिष्यत तत्त्वष्टाऽऽहवनीयमुप प्रावर्तयत्स्वाहेन्द्रशत्रुर्वर्धस्वेति स यावदूर्ध्वः पराविध्यति तावति स्वयमेव व्यरमत यदि वा तावत्प्रवणमासीद्यदि वा तावदध्यग्नेरासीत्स संभवन्नग्नीषोमावभि समभवत्, इति।

तस्येन्द्रेण बलात्पीतस्य सोमस्य संबन्धि रसरूपं यदल्पमत्यशिष्यत तद्गृहीत्वा त्वष्टाऽभिचारं कर्तुमाहवनीयमुपेत्य होमेनाग्नि वैर्युत्पादनाय प्रवृत्तमकरोत्। तस्मिन्होमे मन्त्रमिममुच्चारितवान्स्वाहेन्द्रशत्रुर्वर्धस्वेति। तस्यायमर्थः—

१ क. घ. ङ. च. 'वीयात'।

हेऽग्ने तुभ्यमिदं स्वाहुतं, पुनरिन्द्रस्य शातयिता कश्चित्पुरुषो भूत्वा वर्धस्वेति। सोऽग्निर्यावता कालेनोर्ध्वज्वालारूपो भूत्वा पराभूतमिन्द्रं कर्तुं विध्यामीत्युद्यतो भवति तावति काले वह्निः स्वयमेव विरतोऽभूज्ज्वाला शान्तेत्यर्थः । तत्र मन्त्रगतस्वरापराधो निमित्तम् । तथा हि, इन्द्रस्य शातयितेन्द्रशत्रुरिति विवक्षायां तत्पुरुषसमासस्यान्तोदात्तत्वेन भवितव्यम् । आद्युदात्तस्त्वयं शब्दः प्रयुक्तः । स च बहुव्रीहितां द्योतयति । ' बहुव्रीहौ प्रकृत्या पूर्वपदम् ' इति पूर्वपदाद्युदात्तत्वविधानात् । सति बहुव्रीहाविन्द्रः शातयिता यस्येत्यर्थो भवति । सोऽयं मन्त्रगतः स्वरापराधः । अपराधाभावे सत्युन्नतया ज्वालया यजमानस्य कार्यसिद्धिः सूचिता भवति । अपराधे त्ववनतया ज्वालया यजमानस्य कार्यसिद्ध्यभावः सूच्यते । यद्यत्र कार्यसिद्ध्यभावसूचनायाग्निः ( ग्नेः ) प्रवणमवनतमासीत् , यदि वा कार्यसिद्धेः सूचनार्थमग्निज्वा(ग्नेर्ज्वा)-लयाऽधिका वृद्धिरभूत्, तद्यथा तथा वा तिष्ठतु । स त्वग्निः पुरुषरूपेण संभवन्नेवाग्नीषोमावभिव्याप्य समुत्पन्नो होमाधाराङ्गाराभिमानिनमग्निदेवं हूयमानरसाभिमानिनं सोमदेवं च स्वमुखे प्रक्षिप्योभयोः पार्श्वयोरूर्ध्वाधोदन्तपङ्क्तिभ्यां दष्टवानित्यर्थः । एतच्चोपरितनप्रपाठके ' तावब्रूतामभिसंदष्टौ वै स्वः ' इत्यत्र स्पष्टी भविष्यति ॥

एतस्योत्पन्नस्य पुरुषस्य वृत्रत्वं दर्शयति—

स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत स इमाँल्लोकानवृणोद्यदिमाँल्लोकानवृणोत्तद्वृत्रस्य वृत्रत्वम्, इति ।

इषुपातो यावति देशे भवति तावन्तं देशं सर्वासु दिक्षु व्याप्य प्रतिदिनमयमवर्धत, तेन सर्वलोकावरणादस्य वृत्रत्वम् ॥

अथास्य वृत्रस्य वधाय साधनभूतस्य वज्रस्योत्पत्तिं दर्शयति—

तस्मादिन्द्रोऽबिभेदपि त्वष्टा तस्मै त्वष्टा वज्रमसिञ्चत्तपो वै स वज्र आसीत्, इति ।

तस्मात्सर्वलोकावरकाद्वृत्रादिन्द्रोऽबिभेत् । यथेन्द्रस्तथा त्वष्टाऽप्यबिभेत् । त्रिष्वपि लोकेष्वनेनाऽऽवृतेषु त्वष्टुरिन्द्रस्य चोभयोः समान एव स्थानाभावः । ततस्त्वष्टा तं वृत्रं हन्तुं तेनेन्द्रेण सह मैत्रीं कृत्वा तस्मा इन्द्राय वज्रमसिञ्चत्, अस्त्ररूपत्वायाभिमन्त्रितेन जलेन तदीयं वज्रं प्रक्षाल्य तस्मै दत्तवानित्यर्थः । सोऽयमिन्द्रसंबन्धी वज्रोऽभिमन्त्रितत्वात्तपोरूप एवाऽऽसीत् ॥

तपोरूपस्य तस्य वज्रस्योद्यमनाय विष्णुसहकार्यपेक्षामिन्द्रस्य दर्शयति—

तमुद्यन्तुं नाशक्नोदथ वै तर्हि विष्णु-
रन्या देवताऽऽसीत्सोऽब्रवीद्विष्णवेही-
दमा हरिष्यावो येनायमिदमिति, इति।

यदेन्द्र उद्यमने शक्तो नाभूत्तदानीं तस्येन्द्रस्य पुरतो विष्णुर्नाम काचिद्देवताऽऽसीत्तं विष्णुमेवं प्रार्थितवान्वृत्रस्य वीर्यं स्मृत्वा भयमापन्नस्य मम हस्तो वज्रमुद्यन्तुं न प्रभवति। येन वीर्येणायं वृत्र इदं जगद्व्याप्तवान्, तादृशं वीर्यमावामुभावस्माद्वृत्रादाहरिष्यावः। अतो हे विष्णो मम सहकारित्वमागच्छेति॥

प्रार्थितस्य विष्णोः साहाय्याचरणप्रकारं दर्शयति—

स विष्णुस्त्रेधाऽऽत्मानं वि न्यधत्त
पृथिव्यां तृतीयमन्तरिक्षे तृतीयं दिवि
तृतीयमभिपर्यावर्ताद्ध्यबिभेत्, इति।

विष्णुर्मूर्तित्रयं संपाद्य रक्षणाय लोकत्रये स्थापितवान्। यस्मादस्य वृत्रस्याभिपर्यावर्तात्सर्वदिग्व्यापिरूपाया वृद्धेरयमिन्द्रोऽबिभेत्तस्मादिन्द्रभीतिनिवारणाय मूर्तित्रयस्थापनं युक्तमित्यभिप्रायः॥

मूर्तित्रयस्थापनादूर्ध्वं प्रवृत्तमिन्द्रव्यापारं दर्शयति—

यत्पृथिव्यां तृतीयमासीत्तेनेन्द्रो वज्रमुद-
यच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्र
हारस्ति वा इदं मयि वीर्यं तत्ते प्र दास्या-
मीति तदस्मै प्रायच्छत्तत्प्रत्यगृह्णादधा
मेति तद्विष्णवेऽति प्रायच्छत्तद्विष्णुः प्रत्य-
गृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति, इति।

विष्णुना स्वकीयवक्ष्यमाणद्वयापेक्षया तृतीयं शरीरं पृथिव्यां यत्स्थापितमासीत्तेन युक्तः स इन्द्रस्तस्य विष्णोः पृष्ठतः स्थितस्तं वज्रमुदयच्छत्। तदानीं स वृत्रो भीतः सन्निन्द्रमिदमब्रवीत्—हे इन्द्र मे शरीरं मा प्रहारास्ति वा इदं किंचिन्मयि वीर्यं पृथिवीव्याप्तिक्षमं तत्सर्वं तुभ्यं दास्यामीत्युक्त्वा तदि-

१ ख. ग. °कारी भवितुमा°।

न्द्राय दत्तवान्। स चेन्द्रस्तत्स्वी चकार, स्वीकृत्य च मा धारयेति ब्रुवन्विष्णवे तद्वीर्यमत्यादरेण प्रायच्छत्। स च विष्णुरस्मासु मध्येऽयमिन्द्रो वीर्यं धारयत्वित्यभिप्रेत्येन्द्रार्थं तद्वीर्यं प्रत्यगृह्णात् ॥

ईदृशमिन्द्रकृत्यं द्वितीयपर्याये दर्शयति—

यदन्तरिक्षे तृतीयमासीत्तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्रहारस्ति वा इदं मयि वीर्यं तत्ते प्र दास्यामीति तदस्मै प्रायच्छत्तत्प्रत्यगृह्णाद्द्विर्माऽधा इति तद्विष्णवेऽति प्रायच्छत्तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति, इति।

हे विष्णो पूर्वं सकृद्वीर्यग्रहणेन मां धारितवानसि, तदपेक्ष्य द्विर्मा धारयेति ब्रुवन्वीर्यं प्रायच्छत् ॥

तृतीयपर्याये तस्येन्द्रस्य कृत्यं दर्शयति—

यद्दिवि तृतीयमासीत्तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्रहार्येनाहमिदमस्मि तत्ते प्र दास्यामीति त्वी३ इत्यब्रवीत्, इति।

येन वीर्येणाहमिदं जगद्व्याप्तवानस्मि तत्सर्वं ते प्रदास्यामीत्युक्ते इन्द्रोऽङ्गीचकार। अङ्गीकारार्थोऽयं त्वीशब्दः, अस्तु तथेत्यर्थः ॥

तस्य वीर्यस्य प्रदानात्प्रागेवेन्द्रवृत्रयोः संधिं दर्शयति—

संधां तु सं दधावहै त्वामेव प्र विशानीति यन्मां प्रविशेः किं मा भुञ्ज्या इत्यब्रवीत्त्वामेवेन्धीय तव भोगाय त्वां प्र विशेयमित्यब्रवीत्तं वृत्रः प्राविशदुदरं वै वृत्रः क्षुत्खलु वै मनुष्यस्य भ्रातृव्यो य एवं वेद हन्ति क्षुधं भ्रातृव्यम्, इति।

१ ख. च. °येण द° । २ ख. च. मा वृत° । ३ ख. च. °येण त° । ४ ख. च. °कृतवान् । इ° ।

तुशब्दो वक्तव्यशेषसद्भावद्योतनार्थः। तत्सर्वं वीर्यं तुभ्यं दास्यामीति (मि) किं त्वन्यच्छेषं वक्तव्यमस्ति । तावदुभौ संधानं करवाव। कीदृशं संधानमिति तदुच्यते—हे इन्द्र त्वामेवाहं प्रविशानीति, तत इन्द्र एवमब्रवीद्यदि त्वं मां प्रविशेस्तदा किं मामेव भोक्ष्यस इति। ततो वृत्र इदमब्रवीन्नाहं त्वां भोक्ष्ये किं तु त्वामिन्धीयोदराग्निपाटवेन प्रकाशयेयं दीपयेयं, तच्च तत्र बहुविधान्नभोगायोपयुज्येत, ततस्त्वां प्रविशामीत्युक्त्वा तमिन्द्रं वृत्रः प्राविशत्। प्रविष्टश्च वृत्रो बह्वन्नपूरणक्षममवकाशरूपमुदरमभवत्। लोकेऽपि मनुष्यस्योदरे वर्तमाना क्षुदेवात्यन्तबाधकत्वात्सहजो भ्रातृव्यः। एतद्वेदनस्य क्षुदपघातः फलम् ॥

तस्य वृत्रस्य प्रवेशात्पूर्वं द्युलोकगतवीर्यदानं यदस्ति तदिदानीं दर्शयति–

तदस्मै प्रायच्छत्तत्प्रत्यगृह्णात्त्रिर्मोऽधा इति
तद्विष्णवेऽति प्रायच्छत्तद्विष्णुः प्रत्यगृह्णा-
दस्मास्विन्द्र इन्द्रियं दधात्विति, इति।

पूर्ववद्व्याख्येयम् ॥

इदानीं त्रिधातुनिर्वचनं दर्शयति—

यत्त्रिः प्रायच्छत्त्रिः प्रत्यगृह्णात्तत्त्रिधातोस्त्रिधातुत्वम्, इति।

वृत्रस्य त्रिवारप्रदानेनेन्द्रस्य त्रिवारप्रतिग्रहेण च वीर्यरूपस्य पुरोडाशस्य हविषस्त्रिधा भिन्नस्य त्रिधातुनाम संपन्नम्। त्रयो धातवश्चतुष्कपालरूपा भेदा यस्य द्वादशकपालपुरोडाशस्य सोऽयं त्रिधातुः ॥

त्रिसंख्यातस्य हविषो व्यासक्तदेवतां विधत्ते—

यद्विष्णुरन्वतिष्ठत विष्णवेऽति प्राय-
च्छत्तस्मादैन्द्रावैष्णवः हविर्भवति, इति।

यस्माद्विष्णुरनुकूलत्वेन स्थितस्तस्मै च विष्णवेऽपीन्द्रोऽत्यादरेण प्रायच्छत्तस्माद्व्यासक्तयोरिन्द्रविष्ण्वोस्तत्र देवतात्वम् ॥

त्रिवारं प्रत्तं तद्वीर्यरूपं हविर्वेदत्रयरूपेण प्रशंसति—

यद्वा इदं किं च तदस्मै तत्प्राय-
च्छदृचः सामानि यजूꣳषि, इति ॥

१ ख. च स्मात्कारण।

अत्र च या हिरण्यदक्षिणा पूर्वमुक्ता तस्याः संख्याविधिमुन्नयति—

सहस्रं वा अस्मै तत्प्रायच्छ-
त्तस्मात्सहस्रदक्षिणम् ॥, इति ॥

यस्मात्सहस्रभेदभिन्नं वीर्यं दत्तवांस्तस्मात्सहस्रदक्षिणाकमिदं कर्म द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाक. ॥ १२ ॥

---

( अथ द्वितीयाष्टके चतुर्थप्रपाठके त्रयोदशोऽनुवाक । )

देवा वै राजन्याज्जायमानादबिभयुस्तमन्त-
रेव सन्तं दाम्नाऽपौम्भन्त्स वा एषोऽपोब्धो
जायते यद्राजन्यो यद्वा एषोऽनपोब्धो जायेत
वृत्रान्घ्नꣳश्चरेद्यं कामयेत राजन्यमनपोब्धो जा-
येत वृत्रान्घ्नꣳश्चरेदिति तस्मा एतमैन्द्राबार्ह-
स्पत्यं चरुं निर्वपेदैन्द्रो वै राजन्यो ब्रह्म बृह-
स्पतिर्ब्रह्मणैवैनं दाम्नोऽपोम्भनान्मुञ्चति हिर-
ण्मयं दाम दक्षिणा साक्षादेवैनं दाम्नोऽपोम्भ-
नान्मुञ्चति ( १ ) ॥

( एन द्वादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
चतुर्थप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके त्रयोदशोऽनुवाक । )

देवाः। वै। राजन्यात्। जायमानात्। अबिभयुः। तम्। अन्तः। एव। सन्तम्। दाम्ना। अपेति। औम्भन्। सः। वै। एषः। अपोब्ध इत्यप—उब्धः। जायते। यत्। राजन्यः। यत्। वै। एषः। अनपोब्ध इत्यनप—उब्धः। जायेत। वृत्रान्। घ्नन्। चरेत्। यम्। कामयेत। राजन्यम्। अनपोब्ध इत्यनप—उब्धः। जायेत। वृत्रान्। घ्नन्। चरेत्। इति। तस्मै। एतम्। ऐन्द्राबार्हस्पत्यमित्यैन्द्रा—बार्हस्पत्यम्। चरुम्। निः। इति। वपेत्। ऐन्द्रः। वै। राजन्यः। ब्रह्म। बृहस्पतिः। ब्रह्मणा। एव। एनम्। दाम्नः। अपोम्भनादित्यप—उम्भनात्। मुञ्चति। हिरण्मयम्। दाम। दक्षिणा। साक्षादिति स—अक्षात्। एव। एनम्। दाम्नः। अपोम्भनादित्यप—उम्भनात्। मुञ्चति (१)।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके चतुर्थप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

( अथ द्वितीयकाण्डे चतुर्थप्रपाठके त्रयोदशोऽनुवाकः । )

त्रैधातवीययागस्य द्वादशे देवतेरिता ॥

अथ त्रयोदशेऽनुवाक ऐन्द्राबार्हस्पत्यं चरुं विधातुं प्रस्तौति—

देवा वै राजन्याज्जायमानादबिभयुस्तम-
न्तरेव सन्तं दाम्नाऽपौम्भन्त्स वा एषो-
ऽपोब्धो जायते यद्राजन्यो यद्वा एषोऽ-
नपोब्धो जायेत वृत्राग्घ्नंश्चरेत्, इति।

राजन्यस्याप्रतिबद्धशक्तिकत्वेनेतरवैरिवद्देवानपि हनिष्यतीति मत्वा देवा भीताः सन्तो गर्भमध्य एव स्थितं सन्तं राजन्यं शक्तिप्रतिबन्धलक्षणेन दाम्नाऽपगतशक्तिको यथा भवति तथौम्भञ्शक्तिप्रतिबन्धं पूरितवन्तः । अत एव सर्वत्र लोके राजन्यः प्रतिबद्धशक्तिक एव जायते । यद्यप्रतिबद्धशक्तिको जायेत गर्भनिर्गमनमारभ्य वैरिणो मारयन्निव लोके चरेत् ॥

इदानीं विधत्ते—

यं कामयेत राजन्यमनपोब्धो जायेत वृत्रा-
ग्घ्नंश्चरेदिति तस्मा एतमैन्द्राबार्हस्पत्यं चरुं
निर्वपेदैन्द्रो वै राजन्यो ब्रह्म बृहस्पतिर्ब्र-
ह्मणैवैनं दाम्नोऽपोम्भनान्मुञ्चति, इति।

यं राजन्यं प्रत्यध्वर्युरेवं कामयेत देवैरप्रतिबद्धशक्तिकोऽयं जायतां सर्वत्र निवारकान्वैरिणो मारयन्नेव चरत्विति तस्येयमिष्टिः । देवेष्विन्द्रस्य क्षत्रियत्वं बृहदारण्यके समाम्नातम्—"यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः" इति। तस्मान्मनुष्येषु राजन्य ऐन्द्रः । "ब्रह्म वै देवानां बृहस्पतिः" इत्यस्य श्रवणाद्बृहस्पतेर्ब्राह्मणजातित्वम् । अत ऐन्द्राबार्हस्पत्यचरौ निरुप्ते सत्येनमैन्द्रं राजन्यं ब्रह्मणा बृहस्पतिसामर्थ्येन दैविकाच्छक्तिप्रतिबन्धान्मोचयति ॥

अत्रोचितां दक्षिणां विधत्ते—

हिरण्मयं दाम दक्षिणा साक्षादे-
वैनं दाम्नोऽपोम्भनान्मुञ्चति॥, इति ॥

दाम रज्जुः। बन्धके दामनि दत्ते सति प्रत्यक्षत एव बन्धमोक्षो भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके
त्रयोदशोऽनुवाकः ॥ १३ ॥

(अथ द्वितीयाष्टके चतुर्थप्रपाठके चतुर्दशोऽनुवाकः।)

नवोनवो भवति जायमानोऽह्नां केतुरुष-
सामित्यग्रे। भागं देवेभ्यो वि दधात्यायन्प्र
चन्द्रमास्तिरति दीर्घमायुः। यमादित्या अꣳ-
शुमाप्याययन्ति यमक्षितमक्षितयः पिबन्ति।
तेन नो राजा वरुणो बृहस्पतिरा प्याययन्तु
भुवनस्य गोपाः। प्राच्यां दिशि त्वमिन्द्रासि
राजोतोदीच्यां वृत्रहन्वृत्रहाऽसि। यत्र यन्ति
स्रोत्यास्तत् (१) जितं ते दक्षिणतो वृषभ
एषि हव्यः। इन्द्रो जयाति न परा जयाता
अधिराजो राजसु राजयाति। विश्वा हि
भूयाः पृतना अभिष्टीरुपसद्यो नमस्यो यथाऽ-
सत्। अस्येदेव प्र रिरिचे महित्वं दिवः पृथि-
व्याः पर्यन्तरिक्षात्। स्वराडिन्द्रो दम आ
विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय। अभि त्वा
शूर नोनुमोऽदुग्धा इव धेनवः। ईशानम्

( २ ) अस्य जगतः सुवर्दृशमीशानमिन्द्र तस्थुषः । त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्ववतः । यद्द्याव इन्द्र ते शतꣳ शतं भूमीरुत स्युः । न त्वा वज्रिन्त्सहस्रꣳ सूर्या अनु न जातमष्ट रोदसी । पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ( ३ ) । सोतुर्बाहुभ्याꣳ सुयतो नार्वा । रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम । उदग्ने शुचयस्तव वि ज्योतिषोदु त्यं जातवेदसꣳ सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण । चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषः ( ४ ) च । विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः । जुषन्तां युज्यं पयः । विश्वे देवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम् ( ५ ) ॥

( याज्यानुवाक्याभिधानम् )

( तदीशांनमद्रिंस्तस्युर्षस्त्रिं८शच्चं । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

देवा मंनुष्यां देवासुरा अब्रुवन्देवासुरास्तेषां गायत्री प्रजापंतिस्ता यत्राग्ने गोभिश्चित्रयां मारुतं देवां वसव्या अग्ने मारुतं देवां वसव्या देवाः शर्मण्याः सर्वांणि त्वष्टां हतपुंत्रो देवा वै राजन्यांन्नवोनवश्चतुर्दश ॥ १४ ॥

देवा मंनुष्याः प्रजां पशून्देवां वसव्याः परिदध्यादि-

दमस्म्यष्टाचत्वारिं८शत् ॥ ४८ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके चतुर्थः प्रपाठकः ॥ ४ ॥

( अथ द्वितीयाष्टके चतुर्थप्रपाठके चतुर्दशोऽनुवाकः । )

नवोंनव इति नवः—नवः । भवति । जायमानः । अह्नांम् । केतुः । उषसांम् । एति । अग्रें । भागम् । देवेभ्यः । वीर्ति । दधाति । आयन्नित्यां—यन् । प्रेति । चन्द्रमाः । तिरति । दीर्घम् । आयुः । यम् । आदित्याः । अ८शुम् । आप्याययन्तीत्यां—प्याय-यन्ति । यम् । अक्षितम् । अक्षितयः । पिबन्ति । तेनं । नः । राजां । वरुणः । बृहस्पतिः । एति । प्यायन्तु । भुवनस्य । गोपा इति गो—पाः ।

प्राच्याम् । दिशि । त्वम् । इन्द्र । असि । राजा । उत । उदीच्याम् । वृत्रहन्निति वृत्र—हन् । वृत्रहेति वृत्र—हा । असि । यत्र । यन्ति । स्रोत्याः । तत् (१)। जितम् । ते । दक्षिणतः । वृषभः । एषि । हव्यः । इन्द्रः । जयाति । न । परेति । जयाते । अधिराज इत्यधि—राजः । राजस्विति राज—सु । राजयाति । विश्वाः । हि । भूयाः । पृतनाः । अभिष्टीः । उपसद्य इत्युप—सद्यः । नमस्यः । यथा । असत् । अस्य । इत् । एव । प्रेति । रिरिचे । महित्वमिति महि—त्वम् । दिवः । पृथिव्याः । परीति । अन्तरिक्षात् । स्वराडिति स्व—राट् । इन्द्रः । दमे । एति । विश्वगूर्त इति विश्व—गूर्तः । स्वरिः । अमत्रः । ववक्षे । रणाय । अभीति । त्वा । शूर । नोनुमः । अदुग्धाः । इव । धेनवः । ईशानम् (२)। अस्य । जगतः । सुवर्दृशमिति सुवः -दृशम् । ईशानम् । इन्द्र । तस्थुषः । त्वाम् । इत् । हि । हवामहे । साता । वाजस्य । कारवः । त्वाम् । वृत्रेषु । इन्द्र । सत्पतिमिति सत्--पतिम् । नरः । त्वाम् । काष्ठासु । अर्वतः । यत् । द्यावः । इन्द्र । ते । शतम् । शतम् । भूमीः । उत । स्युः । न । त्वा । वज्रिन् ।

सहस्रम् । सूर्यः । अन्विति । न । जातम् । अष्ट । रोदसी इति । पिब । सोमम् । इन्द्र । मन्दतु । त्वा । यम् । ते । सुषाव । हर्यश्वेति हरि—अश्व । अद्रिः (३)। सोतुः । बाहुभ्यामिति बाहु—भ्याम् । सुयत इति सु—यतः । न । अर्वा । रेवतीः । नः । सधमाद इति सध—मादः । इन्द्रे । सन्तु । तुविवाजा इति तुवि—वाजाः । क्षुमन्तः । याभिः । मदेम । उदिति । अग्ने । शुचयः । तव । वीति । ज्योतिषा । उदिति । उ । त्यम् । जातवेदसमिति जात—वेदसम् । सप्त । त्वा । हरितः । रथे । वहन्ति । देव । सूर्य । शोचिष्केशमिति शोचिः—केशम् । विचक्षणेति वि—चक्षण । चित्रम् । देवानाम् । उदिति । अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य । अग्नेः । एति । अप्राः । द्यावापृथिवी इति द्यावा—पृथिवी । अन्तरिक्षम् । सूर्यः । आत्मा । जगतः । तस्थुषः (४)। च । विश्वे । देवाः । ऋतावृध इत्यृत—वृधः । ऋतुभिरित्यृतु—भिः । हवनश्रुत इति हवन—श्रुतः । जुषन्ताम् । युज्यम् । पयः । विश्वे । देवाः । शृणुत । इमम् । हवम् । मे । ये । अन्तरिक्षे । ये । उपेति । द्यवि । स्थ । ये । अग्निजिह्वा इत्यग्नि—जिह्वाः ।

उत । वा । यजत्राः । आसद्येत्या—सद्य । अस्मिन् । बर्हिषि । मादयध्वम् ( ५ )॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके चतुर्थः प्रपाठकः ॥ ४ ॥

( अथ द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्दशोऽनुवाकः । )

त्रयोदशे चरुः प्रोक्तः शक्तिस्तम्भनिवारकः ॥

इत्थं काम्येष्टयः समाप्ताः । अथान्तिमानुवाके चतुर्दशे याज्यानुवाक्या वक्तव्याः ।

तत्र " यः पापयक्ष्मगृहीतः स्यात्तस्मा एतमादित्यं चरुं निर्वपेत् " इत्यत्र पुरोनुवाक्यामाह—

नवोनवो भवति जायमानोऽह्नां केतु-
रुषसामेत्यग्रे । भागं देवेभ्यो वि दधा-
त्यायन्प्र चन्द्रमास्तिरति दीर्घमायुः ।, इति ।

आदित्यस्य चन्द्रदीप्तिकारणत्वाच्चन्द्राभेदेनाऽऽदित्य इह स्तूयते । चन्द्रमा जायमानः प्रतिदिनमुदयं गच्छन्नवो नवो भवति । शुक्लप्रतिपद्येककलायुक्तः । द्वितीयायां कलाद्वययुक्तः, इत्येवं कलावृद्धिक्षयाभ्यां प्रतिदिनं नूतनत्वम् । चन्द्रवद्दी(न्द्रदी)प्तिकारणमभूत् । ( णभूत ) आदित्योऽपि प्रतिदिनं नूतनो भवति । स्वरूपे वृद्धिक्षयाभावेऽपि दक्षिणोत्तरगतिभ्यां नूतनत्वम् । स चाह्नां केतुश्चिह्नं, तस्मिन्नुदिते सत्यहरिदमिति ज्ञायमानत्वात् । उषसां प्रभातकालानामग्र उपक्रमे प्राच्यामुदयमेति, तदनुरोधेन प्रातरग्निहोत्रादीनां प्रवृत्तेर्देवेभ्यो भागं विदधाति । तादृशश्चन्द्रकलावृद्धिक्षयहेतुरादित्य इह कर्मण्यागच्छन्दीर्घमायुः प्रतिरति प्रकर्षेण ददातु ॥

( याज्यानुवाक्याभिधानम् )

तत्रैव याज्यामाह—

यमादित्या अꣳशुमाप्याययन्ति यमक्षितमक्षितयः पिबन्ति। तेन नो राजा वरुणो बृहस्पतिरा प्याययन्तु भुवनस्य गोपाः।, इति।

यं चन्द्रमसमंशुं स्थिरभूतैककलामात्रावशिष्टमादित्याः शुक्लपक्षे प्रतिदिनमेकैककलाप्रदानेनाऽऽप्याययन्ति। किं च, यमक्षितं पौर्णमास्यामक्षीणचन्द्रं कृष्णपक्षे प्रतिदिनं वह्न्यादयो देवाः स्वयमक्षितयः क्षयरहिताः पिबन्ति एकैकां कलामपक्षयन्ति। अत एव सोमोत्पत्तौ स्मर्यते—"प्रथमां पिबते वह्निः" इति। ज्योतिःशास्त्रप्रक्रियया त्वादित्यरश्मय एव स्वयमक्षितय एकैकां कलां पिबन्त्याच्छादयन्ति। तेन चन्द्रेणामृते( तमये )न राजा दीप्यमान आदित्यो वरुणो बृहस्पतिरित्येवमादयो भुवनस्य गोप्तारो देवा नोऽस्मान्रोगग्रस्तान्रोगं निवार्याऽऽप्याययन्तु॥

"यं कामयेतान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे" इत्यत्र राजेन्द्रहविषः पुरोनुवाक्यारूपां स्वराडिन्द्रहविषो याज्यारूपामुभयाकारामृचं पठति—

प्राच्यां दिशि त्वमिन्द्रासि राजोतोदीच्यां वृत्रहन्वृत्रहाऽसि। यत्र यन्ति स्रोत्यास्तज्जितं ते दक्षिणतो वृषभ एधि हव्यः।, इति।

हे इन्द्र त्वं प्राच्यां दिशि राजाऽधिपतिरसि। अपि च, हे वृत्रहन्नुदीच्यां वृत्रहा वैरिघातकोऽसि। किं च, स्रोत्या नद्यो यत्र यन्ति तत्सर्वं ते जितम्। नद्यो हि सर्वासु दिक्षु प्रवहन्ति। अतः सर्वत्र तव विजय इत्यर्थः। किं च, त्वं वृषभः कामानां वर्षयिता हव्यो होमयोग्यः सन्दक्षिणत एध्याहवनीयस्य दक्षिणभागे स्थितो भव। तत्र स्थित्वा हि ऋत्विग्भिर्हविर्दीयते॥

राजेन्द्रहविषो याज्या, अधिराजेन्द्रहविषः पुरोनुवाक्येत्युभयरूपामृचं पठति—

इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयाति। विश्वा हि भूयाः पृतना अभिष्टीरुपसद्यो नमस्यो यथाऽसत्।, इति।

---

१ ख. च. न चान्द्रे।

इन्द्रः सर्वत्र जयत्येव न तु क्वापि पराजयते, सर्वेषु राजस्वधिको राजा भूत्वा सर्वानन्यान्राजयति अराज्ञामपि राज्यप्रदानेन राजत्वं संपादयति। किं च, सर्वेषां राज्ञामुपसद्यः शरण्यो नमस्कारार्हश्च यथाऽसत्येन प्रकारेणासि तथा विश्वाः पृतनाः परकीयसेना अभिष्टीरभिभवितुं समर्थो भूयाः ॥

अधिराजेन्द्रहविषो याज्या, स्वराडिन्द्रहविषः पुरोनुवाक्येत्युभयरूपामृचं पठति—

**अस्येदेव प्र रिरिचे महित्वं दिवः पृथिव्याः पर्यन्तरिक्षात् । स्वराडिन्द्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय।,** इति।

इदेवेत्युभयं मिलित्वाऽवधारणे वर्तते। अपि च ननु चेत्यादिवन्निपातसमुदायस्यैकार्थत्वम्। प्ररिरिच इत्यत्र प्रशब्दोऽतिशब्दार्थे वर्तते। अस्येदेवास्येन्द्रस्यैव महित्वं महिमा परितो दिवः पृथिव्या अन्तरिक्षाच्च प्ररिरिचे सर्वतो लोकत्रयमतिरिच्य वर्तत इत्यर्थः। किं चेन्द्रो रणाय युद्धार्थमाववक्ष आभिमुख्येन वहति सेनां प्रापयति। कीदृश इन्द्रः, स्वराट्स्वयमेव राजा न तु परतन्त्रः, दमे गृहे विश्वगूर्तो विश्वानि सर्वाण्यायुधानि गूर्तान्युद्यतानि येनासौ विश्वगूर्तः। युद्धार्थं त्वरया निर्गन्तुं गृहेऽप्युद्यतायुध एव वर्तते, किमु वक्तव्यं रणभूमावित्यर्थः। स्वरिर्तुं परकीयसेनानामुपरि गन्तुं शीलमस्येति स्वरिः। अमत्रोऽस्माद्रोगास्क्षुद्रूपादन्नदानेन त्रायत इत्यमत्रः ॥

" य इन्द्रियकामो वीर्यकामः स्यात्तमेतया सर्वपृष्ठया याजयेत् " इत्यत्र राथन्तरेन्द्रहविषः पुरोनुवाक्या, रैवतेन्द्रहविषो याज्येत्युभयरूपामृचं पठति—

**अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः सुवर्दृशमीशानमिन्द्र तस्थुषः।,** इति।

अदुग्धा धेनवो यथा वत्सान्प्रत्यादरेण हम्भारवं कुर्वन्ति तथा शूरेन्द्र त्वामभितो नोनुमः पुनः पुनः स्तुमः। कीदृशं त्वाम्, अस्य जगतो जङ्गमस्य प्राणिजातस्येशानं तस्थुषः स्थावरस्यापीशानं सुवर्दृशं स्वर्गस्य प्रदर्शयितारम् ॥

राथन्तरेन्द्रहविषो याज्या, बार्हतेन्द्रहविषः पुरोनुवाक्येत्युभयरूपामृचं पठति—

त्वामिद्धि हवामहे साता वाजस्य कारवः। त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः।, इति।

हे इन्द्र कारवः कर्तारो वयं त्वामित्त्वामेव हवामह आह्वयामः। किंनिमित्तं, वाजस्य साताऽन्नस्य दाननिमित्तम्। अत एव सातावित्ति सप्तम्यन्ततया छन्दोगा अधीयते। वृत्रेषु वैरिषु प्राप्तेषु सत्पतिं सन्मार्गपालकं त्वामाह्वयामः। नरो मनुष्या वयं काष्ठासु सर्वासु दिक्षु अर्वतः शत्रुसेनागतानश्वान्दृष्ट्वा त्वामाह्वयामः। हि यस्मादेवं तस्माद्वीर्यदानेनास्मान्पालयेत्यर्थः॥

बार्हतेन्द्रहविषो याज्या, वैरूपेन्द्रहविषः पुरोनुवाक्येत्युभयरूपामृचं पठति—

यद्द्याव इन्द्र ते शतꣳ शतं भूमीरुत स्युः। न त्वा वज्रिन्त्सहस्रꣳ सूर्या अनु न जातमष्ट रोदसी।, इति।

हे इन्द्र यद्यपि शतं द्यावः स्युर्द्युलोकाः शतसंख्याका भवेयुः। अपि च भूमयोऽपि शतसंख्याका भवेयुः, तथाऽपि शतसंख्याकैरवान्तरविशेषैर्युक्ते ते द्यावापृथिव्यौ जातं त्वामनु नाष्ट जातमात्रं त्वामैश्वर्येणानुकर्तुं न व्याप्नुतो न शक्नुत इत्यर्थः। तथा यद्यपि सूर्याः सहस्रसंख्याकाः स्युस्तथाऽपि हे वज्रिंस्तेजसा त्वामनुकर्तुं न क्षमन्त इत्यभिप्रायः। वैरूपेन्द्रस्य याज्या, वैराजेन्द्रस्य पुरोनुवाक्येत्युभयरूपा कदा चनस्तरीरसीत्येषा नात्राऽऽम्नाता किं तु शाखान्तरवशा[1]द्याहर्तव्या। सा च प्रथमकाण्ड एव व्याख्याता॥

वैराजेन्द्रस्य याज्या, शाक्वरेन्द्रस्य पुरोनुवाक्येत्युभयरूपामृचं पठति—

पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः। सोतुर्बाहुभ्याꣳ सुयतो नार्वा।, इति।

हे इन्द्र त्वं सोमं पिब। स च पीतः सोमस्त्वा मन्दतु त्वां हर्षयतु। हरिनामका अश्वा यस्यासौ हर्यश्वः, हे हर्यश्व ते त्वदर्थमद्रिरुपांशुसवनादिरूपः पाषाणो यं सोमं सुषावाभिषुतवांस्त्वं(स्तं) पिबेति पूर्वत्रान्वयः।

१ ख. °शाद्याह°। २ क. घ. ङ. च. °कावश्वी य°।

कीदृशोऽद्रिः, सोतुरभिषोतुर्ऋत्विजो बाहुभ्यां सुयतः सुष्ठु नियमितः। अत एव नार्वा न त्वर्वाचीनो नियमनरहितः सोमं यत्र तत्र पातयित्वा विनाशयति। तादृशं सोमं पीत्वा वीर्यं देहीत्यभिप्रायः॥

शाक्करेन्द्रस्य याज्या, रैवतेन्द्रस्य पुरोनुवाक्येत्युभयरूपामृचं पठति—

रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः। क्षुमन्तो याभिर्मदेम, इति।

रेवत्यो धनवत्यः, सधमादोऽस्माभिः सह मादयन्त्यो हर्षयुक्ताः, तुविवाजा बहन्नोपेता आपो नोऽस्माकं स्वामिनीन्द्रे सन्तु अस्माकं सुखाय तिष्ठन्तु। याभिरद्भिः सह वयं क्षुमन्तः शब्दयन्त इन्द्रं स्तुवन्तो मदेम हृष्याम॥

"यश्चक्षुष्कामः स्यात्तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपाल१ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालम्" इत्यत्राऽऽग्नेये कर्मणि याज्यानुवाक्ययोः प्रतीके दर्शयति—

उदग्ने शुचयस्तव वि ज्योतिषा, इति।

उदग्ने शुचयस्तव शुक्रा इत्येषा पुरोनुवाक्या। सा च प्रथमकाण्डस्य तृतीयप्रपाठके व्याख्याता। वि ज्योतिषा बृहता भात्यग्निरित्येषा याज्या। सा तु प्रथमकाण्डस्य द्वितीयप्रपाठके व्याख्याता॥

सौर्ये कर्मणि पुरोनुवाक्यायाः प्रतीकं दर्शयति—

उदु त्यं जातवेदसम्, इति।

सेयं प्रथमकाण्डस्य चतुर्थप्रपाठके व्याख्याता॥

तत्रैव याज्यामाह—

सप्त त्वा हरितो रथे वहन्ति देव सूर्य। शोचिष्केशं विचक्षण, इति।

हे सूर्य देव त्वां सप्त हरितोऽश्वा रथे वहन्ति। कीदृशं त्वां, शोचिष्केशं शोचींषि दीप्यमानाः केशस्थानीया रश्मयो यस्य तादृशम्। हे विचक्षणेति सूर्यविशेषणम्॥

तत्रैव विकल्पितां याज्यामाह—

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरु-

१ ख. त्ववीचीं।

णस्याग्नेः। आऽप्रा द्यावापृथिवी अन्तरि-
क्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च, इति।

चित्रं रक्तश्वेतादिविविधवर्णं देवानां रश्मीनामनीकं सैन्यसदृशं मण्डलमुदगादुदेति। कीदृशं, मित्रादिदेवोपलक्षितस्य कृत्स्नस्य प्राणिजातस्येन्द्रियाधिष्ठातृत्वाच्चक्षुःस्थानीयम्। तन्मण्डलस्थः सूर्यो जगतो जङ्गमस्य तस्थुषः स्थावरस्य चाऽऽत्मा। स लोकत्रयमाप्राः सर्वतः पूरितवान्॥

"वैश्वदेवीꣳ सांग्रहणी निर्वपेद्ग्रामकामः" इत्यत्र पुरोनुवाक्यामाह—

विश्वे देवा ऋतावृध ऋतुभिर्हवन-
श्रुतः। जुषन्तां युज्यं पयः।, इति।

विश्वे देवा युज्यं योग्यं पयः क्षीरवत्सारभूतं हविर्जुषन्ताम्। कीदृशा देवाः, ऋतावृध ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारः, ऋतुभिर्हवनश्रुतस्तैस्तैर्ऋतुभिरुपलक्षिते कर्मण्याह्वानस्य श्रोतारः॥

तत्रैव याज्यामाह—

विश्वे देवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे
य उप द्यवि ष्ठ। ये अग्निजिह्वा उत वा
यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम्॥, इति॥

हे विश्वे देवा मे मदीयमिमं हवमाह्वानं शृणुत। ये यूयमन्तरिक्षे स्थान्तरिक्षलोके स्थिता ये चोप समीपे पृथिव्यां स्थिता ये च द्यवि द्युलोके स्थ ये चाग्निजिह्वा अग्निरेव जिह्वा येषां तेऽग्निजिह्वा अग्निद्वारेण हविषः स्वीकर्तार उत वाऽन्येऽपि वा यजत्रा यष्टव्यास्ते सर्वेऽपि अस्मिन्बर्हिषि यज्ञ आसद्योपविश्य मादयध्वं हृष्टा भवत यजमानं हर्षयध्वम्॥

अत्र विनियोगसंग्रहः—

"आदित्येष्टौ नवोद्वे तु प्राच्यामित्यादिकं त्रय(चाष्टक)म्।
राजादिगुणकेन्द्रस्य पुरोडाशसमूहके॥ १॥
आग्नेय उदविज्योद्वे उदु त्यं जातवेदसम्।
सप्त चित्रं त्रयं सौर्ये सांग्रहण्या उ(मु)भे इमे॥
विश्वे देवा इति प्रोक्ता मन्त्राः सप्तदशैव हि॥ २॥"

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्दशोऽनुवाकः॥ १४॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥

( अथ द्वितीयाष्टके पञ्चमः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्स्वस्रीयोऽसुराणां तस्य त्रीणि शीर्षाण्यासन्त्सोमपानꣳ सुरापानमन्नादनꣳ स प्रत्यक्षं देवेभ्यो भागमवदत्परोक्षमसुरेभ्यः सर्वस्मै वै प्रत्यक्षं भागं वदन्ति यस्मा एव परोक्षं वदन्ति तस्य भाग उदितस्तस्मादिन्द्रोऽबिभेदीदृङ्वै राष्ट्रं वि पर्यावर्तयतीति तस्य वज्रमादाय शीर्षाण्यच्छिनद्यत्सोमपानम् ( १ ) आसीत्स कपिञ्जलोऽभवद्यत्सुरापानꣳ स कलविङ्को यदन्नादनꣳ स तित्तिरिस्तस्याञ्जलिना ब्रह्महत्यामुपागृह्णात्ताꣳ संवत्सरमबिभस्तं भूतान्यभ्यक्रोशन्ब्रह्महन्निति स पृथिवीमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृहाणेति साऽब्र-

वीद्वरं वृणै खातात्पराभविष्यन्तीं मन्ये ततो मा परां भूवमिति पुरा ते ( २ ) संवत्सरादपि रोहादित्यंब्रवीत्तस्मात्पुरा संवत्सरात्पृथिव्यै खातमपि रोहति वारेंवृतः ह्यस्यै तृतीयं ब्रह्महत्यायै प्रत्यगृह्णात्तस्वकृतमिरिणमभवत्तस्मादाहिताग्निः श्रद्धादेवः स्वकृत इरिणे नाव स्येद्ब्रह्महत्यायै ह्येष वर्णः स वनस्पतीनुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृह्णीतेति तेऽब्रुवन्वरं वृणामहै वृक्णात् ( ३ ) पराभविष्यन्तो मन्यामहे ततो मा परा भूमेत्यावृश्चनाद्वो भूयांसः उत्तिष्ठानित्यब्रवीत्तस्मादावृश्चनाद्वृक्षाणां भूयांस उत्तिष्ठन्ति वारेंवृतः ह्येषां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्त्स निर्यासोऽभवत्तस्मान्निर्यासस्य नाऽऽश्यं ब्रह्महत्यायै ह्येष वर्णोऽथो खलु य एव लोहितो यो वाऽऽव्रश्चनान्निर्येषति तस्य नाऽऽश्यम् ( ४ ) काममन्यस्य स स्त्रीषंसादमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृह्णीतेति ता अब्रुवन्वरं वृणामहा ऋत्वियात्प्रजां विन्दामहै काममा विजनितोः सं भवामेति तस्माहत्वि-

यास्त्रियः प्रजां विन्दन्ते काममा विजनितोः संभवन्ति वारेवृतꣳ ह्यासां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्त्सा मलवद्वासा अभवत्तस्मान्मलवद्वाससा न सं वदेत ( ५ ) न सहाऽऽसीत नास्या अन्नमद्याद्ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्याऽऽस्तेऽथो खल्वाहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यदिति यां मलवद्वाससꣳ संभवन्ति यस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुख्यपगल्भो या स्नाति तस्या अप्सु मारुको या ( ६ ) अभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपमारी याऽऽङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन्या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुꣳ सृजति तस्या उद्बन्धुको या पर्णेन पिबति तस्या उन्मादुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय ( ७ )॥

( अग्नीषोमीयहविर्विध्युपोद्घात )

( यत्सोमपानं ते वृश्चणात्तस्य नाऽऽश्यं वदेत मार्हको या स्वर्वेण वा त्रीणि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ द्वितीयाष्टके पञ्चमः प्रपाठकः ।

---

( तत्र प्रथमोऽनुवाक । )

विश्वरूप इति विश्व—रूपः । वै । त्वाष्ट्रः । पुरोहित इति पुरः—हितः । देवानाम् । आसीत् । स्वस्रीयः । असुराणाम् । तस्य । त्रीणि । शीर्षाणि । आसन् । सोमपानमिति सोम—पानम् । सुरापानमिति सुरा—पानम् । अन्नादनमित्यन्न—अदनम् । सः । प्रत्यक्षमिति प्रति—अक्षम् । देवेभ्यः । भागम् । अवदत् । परोक्षमिति परः—अक्षम् । असुरेभ्यः । सर्वस्मै । वै । प्रत्यक्षमिति प्रति—अक्षम् । भागम् । वदन्ति । यस्मै । एव । परोक्षमिति परः—अक्षम् । वदन्ति । तस्य । भागः । उदितः । तस्मात् । इन्द्रः । अबिभेत् । ईदृङ् । वै । राष्ट्रम् । वीति । पर्यावर्तयतीति परि—आवर्तयति । इति । तस्य । वज्रम् । आदायेत्या—दाय । शीर्षाणि । अच्छिनत् । यत् । सोमपानमिति सोम—पानम् ( १ ) । आसीत् । सः । कपिञ्जलः । अभवत् । यत् । सुरा-

पानमिति सुरा—पानम् । मः । कलविङ्कः । यत् ।
अन्नादनमित्यन्न—अदनम् । सः । तित्तिरिः । तस्य ।
अञ्जलिना । ब्रह्महत्यामिति ब्रह्म—हत्याम् । उपेति ।
अगृह्णात् । ताम् । संवत्सरमिति सं—वत्सरम् ।
अबिभः । तम् । भूतानि । अभीति । अक्रोशन् ।
ब्रह्महन्निति ब्रह्म—हन् । इति । सः । पृथिवीम् ।
उपेति । असीदत् । अस्यै । ब्रह्महत्याया इति
ब्रह्म—हत्यायै । तृतीयम् । प्रतीति । गृहाण ।
इति । सा । अब्रवीत् । वरम् । वृणै । खातात् । परा-
भविष्यन्तीति परा—भविष्यन्ती । मन्ये । ततः ।
मा । परेति । भूवम् । इति । पुरा । ते ( २ ) ।
संवत्सरादिति सं—वत्सरात् । अपीति । रोहात् ।
इति । अब्रवीत् । तस्मात् । पुरा । संवत्सरादिति
सं—वत्सरात् । पृथिव्यै । खातम् । अपीति । रोह-
ति । वारेवृतमिति वारे—वृतम् । हि । अस्यै । तृती-
यम् । ब्रह्महत्याया इति ब्रह्म—हत्यायै । प्रतीति ।
अगृह्णात् । तत् । स्वकृतमिति स्व—कृतम् । इरि-
णम् । अभवत् । तस्मात् । आहिताग्निरित्याहित—
अग्निः । श्रद्धादेव इति श्रद्धा—देवः । स्वकृत इति
स्व—कृते । इरिणे । न । अवेति । स्येत् । ब्रह्मह-

त्याया इति ब्रह्म—हत्यायै । हि । एषः । वर्णः । सः । वनस्पतीन् । उपेति । असीदत् । अस्यै । ब्रह्महत्याया इति ब्रह्म—हत्यायै । तृतीयम् । प्रतीति । गृह्णीत । इति । ते । अब्रुवन् । वरम् । वृणामहै । वृक्णात् ( ३ ) । पराभविष्यन्त इति परा—भविष्यन्तः । मन्यामहे । ततः । मा । परेति । भूम । इति । आव्रश्चनादित्या—व्रश्चनात् । वः । भूयांसः । उदिति । तिष्ठान् । इति । अब्रवीत् । तस्मात् । आव्रश्चनादित्या—व्रश्चनात् । वृक्षाणाम् । भूयांसः । उदिति । तिष्ठन्ति । वारेवृतमिति वारे—वृतम् । हि । एषाम् । तृतीयम् । ब्रह्महत्याया इति ब्रह्म—हत्यायै । प्रतीति । अगृह्णन् । सः । निर्यास इति निः—यासः । अभवत् । तस्मात् । निर्यासस्येति निः—यासस्य । न । आश्यम् । ब्रह्महत्याया इति ब्रह्म—हत्यायै । हि । एषः । वर्णः । अथो इति । खलु । यः । एव । लोहितः । यः । वा । आव्रश्चनादित्या—व्रश्चनात् । निर्येषतीति निः—येषति । तस्य । न । आश्यम् ( ४ ) । कामम् । अन्यस्य । सः । स्त्रीषंसादमिति स्त्री—संसादम् । उपेति । असीदत् । अस्यै । ब्रह्महत्याया इति

ब्रह्म—हत्यायै । तृतीयम् । प्रतीति । गृह्णीत । इति । ताः । अब्रुवन् । वरम् । वृणामहै । ऋत्वियात् । प्रजामिति प्र—जाम् । विन्दामहै । कामम् । एति । विजनितोरिति वि—जनितोः । समिति । भवाम । इति । तस्मात् । ऋत्वियात् । स्त्रियः । प्रजामिति प्र—जाम् । विन्दन्ते । कामम् । एति । विजनितोरिति वि—जनितोः । समिति । भवन्ति । वारेवृतमिति वारे—वृतम् । हि । आसाम् । तृतीयम् । ब्रह्महत्याया इति ब्रह्म—हत्यायै । प्रतीति । अगृह्णन् । सा । मलवद्वासा इति मलवत्—वासाः । अभवत् । तस्मात् । मलवद्वाससेति मलवत्—वाससा । न । समिति । वदेत (५) । न । सह । आसीत । न । अस्याः । अन्नम् । अद्यात् । ब्रह्महत्याया इति ब्रह्म—हत्यायै । हि । एषा । वर्णम् । प्रतिमुच्येति प्रति—मुच्य । आस्ते । अथो इति । खलु । आहुः । अभ्यञ्जनमित्यभि—अञ्जनम् । वाव । स्त्रियाः । अन्नम् । अभ्यञ्जनमित्यभि—अञ्जनम् । एव । न । प्रतिगृह्यमिति प्रति—गृह्यम् । कामम् । अन्यत् । इति । याम् । मल-

वद्वाससमिति मलऽवत्—वाससम् । संभवन्तीति सं—भवन्ति । यः । ततः । जायते । सः । अभिशस्त इत्यभि—शस्तः । याम् । अरण्ये । तस्यै । स्तेनः । याम् । पराचीम् । तस्यै । ह्रीतमुखीति ह्रीत—मुखी । अपगल्भ इत्यप—गल्भः । या । स्नाति । तस्याः । अप्स्वित्यप्—सु । मारुकः । या ( ६ ) । अभ्यङ्क्त इत्यभि—अङ्क्ते । तस्यै । दुश्चर्मेति दुः—चर्मा । या । प्रलिखत इति प्र—लिखते । तस्यै । खलतिः । अपमारीत्यप—मारी । या । आङ्क्त इत्या—अङ्क्ते । तस्यै । काणः । या । दतः । धावते । तस्यै । श्यावदन्निति श्याव—दन् । या । नखानि । निकृन्तत इति नि—कृन्तते । तस्यै । कुनखी । या । कृणत्ति । तस्यै । क्लीबः । या । रज्जुम् । सृजति । तस्याः । उद्बन्धुक इत्युत्—बन्धुकः । या । पर्णेन । पिबति । तस्याः । उन्मादुक इत्युत्—मादुकः । या । खर्वेण । पिबति । तस्यै । खर्वः । तिस्रः । रात्रीः । व्रतम् । चरेत् । अञ्जलिना । वा । पिबेत् । अखर्वेण । वा । पात्रेण । प्रजाया इति प्र—जायै । गोपीथाय ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ द्वितीयकाण्डे पञ्चमः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
द्वितीयादिचतुर्थान्तैस्त्रिभिरेतैः प्रपाठकैः ।
उक्ताः काम्येष्टयः काण्डे द्वितीये परतस्तु यत् ॥ २ ॥
आद्ये दर्शपूर्णमासमन्त्रव्याख्यानमीरितम् ।
विधयो मन्त्रसंबद्धा बहवः प्रतिपादिताः ॥ ३ ॥
तच्छेषविधयो वाच्या व्याख्येया हौत्रमन्त्रकाः ।
*अतोऽनुब्राह्मणं त्वत्र वर्ण्यते पाठकद्वये ॥ ४ ॥
प्रपाठके पञ्चमेऽनुवाका द्वादश संस्थिताः ।
आध्वर्यवं पूर्वपट्के याज्या उत्तम ईरिताः ॥ ५ ॥
हौत्रमन्त्रविधिव्याख्यायारादिशायमन्तरे ।
अग्नीषोमीयहविषो विधिस्तत्राऽऽद्ययोर्द्वयोः ॥ ६ ॥

तत्र द्वितीयानुवाके पौर्णमासीगतमग्नीषोमीयपुरोडाशं विधित्सुस्तदुपोद्घातत्वेन प्रथमानुवाके कांचिदाख्यायिकामाह—

विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्स्वस्रीयोऽसुराणां तस्य त्रीणि शीर्षाण्यासन्त्सोमपानꣳ सुरापानमन्नादनꣳ स प्रत्यक्षं देवेभ्यो भागमवदत्परोक्षमसुरेभ्यः सर्वस्मै वै प्रत्यक्षं भागं वदन्ति यस्मा एव परोक्षं वदन्ति तस्य भाग उदितस्तस्मादिन्द्रोऽबिभेदीदृङ्वै राष्ट्रं वि पर्यावर्तयतीति तस्य वज्रमादाय शीर्षाण्यच्छिनद्यत्सोमपा-

---

* प्रकृतब्राह्मणमिति ख पुस्तकस्थपाठान्तरम् ।

१ ख. ट्के हौत्राभिप्राय उत्तरे ।

नमासीत्स कपिञ्जलोऽभवद्यत्सुरापानꣳ स कलविङ्को यदन्नादनꣳ स तित्तिरिः, इति।

विश्वानि बहुविधानि रूपाणि यस्यासौ विश्वरूपः। त्रिभिः शिरोभिरुपेतत्वाद्विश्वरूपत्वम्। यो विश्वरूपनामकस्त्वष्टुः पुत्रः स देवानां पुरोहितो न तु शरीरसंबन्धी, असुराणां तु भागिनेयः। स च सात्त्विकेन शिरसा सोमं पिबति। राजसेनान्नमत्ति। तामसेन सुरां पिबति। स च यज्ञमण्डपेषु गत्वा सर्वेषां श्रोत्रप्रत्यक्षं यथा भवति तथा देवेभ्यो हविर्भागो युक्त इति वदति। सर्वेषां परोक्षं यथा भवति तथा रहस्य ऋत्विग्भिः सहायं हविर्भागोऽसुरेभ्यो युक्तोऽतस्तानेवोद्दिश्य प्रयच्छतेति स एवं वदति। तेषामृत्विजां तस्मिन्परोक्षवादे विश्वास उत्पन्नः। तस्य परोक्षवादस्य हृदयपूर्वकत्वात्। लोकेऽपि तवायं भाग इति सर्वस्मै पुरुषाय प्रीतिमुत्पादयितुं तत्समीपे सर्वे वदन्ति। हृदयपूर्वकत्वाभावान्न स उदितो भवति। परोक्षं यदर्थं तु भाग उच्यते तस्यैव भागो हृदयपूर्वकत्वादुदितो भवति। एवं वृत्तान्तं श्रुत्वा तस्माद्विश्वरूपादिन्द्रोऽबिभेत्। किमिति, ईदृक्त्वामिद्रोहं सर्वथा कृत्वा राष्ट्रं विपर्यावर्तयतीति। अस्मत्तोऽपनीयासुरेभ्यः समर्पणं विपर्यावृत्तिः। ततस्तस्य द्रोहिणः शिरःसु छिन्नेषु तानि शिरांसि पक्षित्रयरूपेणोत्पन्नानि॥

तस्येन्द्रस्य प्रत्यवायं जनापवादं च दर्शयति—

तस्याञ्जलिना ब्रह्महत्यामुपागृह्णात्ताꣳ संवत्सरमबिभस्तं भूतान्यभ्यक्रोशन्ब्रह्महन्निति, इति।

तस्यासुरस्य वधेन निष्पन्ना या ब्रह्महत्या तामञ्जलिना स्वी चकार। पापिनां शिक्षायामीश्वरेण नियुक्तानां यमचित्रगुप्तादीनां पुरतोऽञ्जलिं कृत्वा निर्भयः सन्ब्रह्महत्या मया बुद्धिपूर्वकमेव कृतेत्येवमङ्गी चकारेत्यर्थः। प्रायश्चित्तमकृत्वा संवत्सरं निरन्तरं ब्रह्महत्यामङ्गीकृत्यैव तस्थौ। आत्मतत्त्वज्ञानेन पापलेपाभावाद्धीत्यभावस्तस्य युक्तः। अत एव कौषीतकिन इन्द्रवाक्यमेतदामनन्ति—"मामेव विजानीयात्त्रिशीर्षाणं त्वाष्ट्रमहमहनमरुन्मुखान्यतीन्त्सालावृकेभ्यः प्रायच्छम्" इत्यादि। दुरिताभावेऽपि सर्वप्राणिनस्तमिन्द्रं ब्रह्महन्नित्येवं संबोध्याभितस्तस्याऽऽक्रोशं कृतवन्तः॥

---

१ ख. तस्य विश्वरूपस्य। २ ख. °न्मा विजानीयात्त्रिशी°।

ततस्तस्य जनापवादस्य परिहारायेन्द्रेणानुष्ठितमुपायविशेषं दर्शयति—

स पृथिवीमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृहाणेति साऽब्रवीद्वरं वृणै खातात्पराभविष्यन्ती मन्ये ततो मा परा भूवमिति पुरा ते संवत्सरादपि रोहादित्यब्रवीत्तस्मात्पुरा संवत्सरात्पृथिव्यै खातमपि रोहति वारेवृतश्ह्यस्यै तृतीयं ब्रह्महत्यायै प्रत्यगृह्णात्तत्स्वकृतमिरिणमभवत्तस्मादाहिताग्निः श्रद्धादेवः स्वकृत इरिणे नाव स्येद्ब्रह्महत्यायै ह्येष वर्णः, इति।

उपासीददुपेत्य प्रार्थितवान्। खातात्पराभविष्यन्ती मन्ये, जनाः स्वेच्छया तत्र तत्र भूमिं खनन्ति तदुपद्रवात्पराभूता पीडिता भविष्यामीति मनसा चिन्तयामि। खातप्रदेशः संपूरणमन्तरेण पांसुप्रक्षेपात्तृणाद्युत्पत्तेर्वाऽपिरोहात्पूरितो भूयादिति वरः। तदिदमस्यै वारेवृतमस्याः पृथिव्याः खातपूरणं वरेण लब्धम्। पृथिव्याः स्वीकृतस्तृतीयो ब्रह्महत्याया भागः स्वकृतमिरिणमभवत्। इतस्तत आनीय प्रक्षिप्तं न भवतीति स्वतःसिद्धमूषरक्षेत्रमासीत्। यस्मादिरिणं ब्रह्महत्यायाः स्वरूपं तस्मादाहिताग्निः श्रद्धादेवस्तस्मिन्निरिणे कदाचिदपि न तिष्ठेत्। यद्वा, देवयजनत्वेन नाध्यवस्येत्। श्रद्धैव देवो यस्यासौ श्रद्धावानित्यर्थः॥

एकस्य ब्रह्महत्याभागस्य परिहारोपायमुक्त्वाऽपरस्य तं दर्शयति—

स वनस्पतीनुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृह्णीतेति तेऽब्रुवन्वरं वृणामहै वृक्णात्पराभविष्यन्तो मन्यामहे ततो मा परा भूमेत्याव्रश्चनाद्वो भूयाꣳस उत्तिष्ठानित्यब्रवीत्तस्मादाव्रश्चना-

१ ख. संवत्सरमात्रेण। २ घ ङ. च. °क्षिप्ते न।

वृक्षाणां भूयाꣳस उत्तिष्ठन्ति वारेवृ-
तꣳ ह्येषां तृतीयं ब्रह्महत्यायै प्रत्य-
गृह्णन्त्स निर्यासोऽभवत्तस्मान्निर्यासस्य
नाऽऽश्यं ब्रह्महत्यायै ह्येष वर्णोऽथो खलु
य एव लोहितो यो वाऽऽव्रश्चनान्निर्येषति
तस्य नाऽऽश्यं काममन्यस्य, इति।

वृक्णाच्छेदनात्। आव्रश्चनाच्छिन्नप्रदेशाद्भूयांसो बहङ्कुरा उत्तिष्ठन्त्विति वरः। वृक्षान्निर्गत्य घनीभूतो रसो निर्यासः। ब्रह्महत्यायाः स्वरूपत्वान्निर्यासस्य स्वरूपं न भोज्यं भवति। अपि च पक्षान्तरमस्ति, न सर्वोऽपि निर्यासो निषिद्धः किंतु यो लोहितवर्णो यश्च छिन्नवृक्षप्रदेशान्निर्गतस्तदेवो-भयं निषिद्धम्। अन्यस्य तु निर्यासस्य स्वरूपमाश्यमिच्छायां सत्यामशितुं योग्यम्॥

त्रिषु ब्रह्महत्याभागेषु द्वयोः परिहारमुक्त्वा तृतीयस्यावशिष्टस्य परिहारं दर्शयति—

स स्त्रीषꣳसादमुपासीददस्यै ब्रह्महत्यायै
तृतीयं प्रति गृह्णीतेति ता अब्रुवन्वरं वृणा-
महा ऋत्वियात्प्रजां विन्दामहै काममा
विजनितोः संभवामेति तस्मादृत्विया-
त्स्त्रियः प्रजां विन्दन्ते काममा विज-
नितोः सं भवन्ति वारेवृतꣳ ह्यासां तृतीयं
ब्रह्महत्यायै प्रत्यगृह्णन्त्सा मलवद्वासा
अभवत्तस्मान्मलवद्वाससा न सं वदेत
न सहाऽऽसीत नास्या अन्नमद्याद्ब्रह्महत्यायै
ह्येषा वर्णं प्रतिमुच्याऽऽस्तेऽथो खल्वा-
हुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जन-
मेव न प्रतिगृह्यं काममन्यदिति, इति।

स्त्रियः सम्यक्सीदन्ति विश्रम्भेणोपविशन्ति यस्यां सभायामिति स्त्रीसभाविशेषः स्त्रीषंसादः। ऋतिवयाद्दतुसंवन्धाद्वीर्यात्प्रथमसंभोगादेव गर्भे जातेऽपि कामर्मुदिश्याऽऽविजनितोरा प्रसवात्पुरुषेण संगच्छेमहि। गर्भोपद्रवः प्रत्यवायश्च निषिद्धदिनकृतोऽस्माकं मा भूदिति वरः।

अत एव याज्ञवल्क्यस्मृतिः—

"यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन्" इति।

यो ब्रह्महत्यायास्तृतीयो भागः सा मलवद्वासा रजस्वला योषिदभवत्। यस्मादियं ब्रह्महत्याया रूपं शरीरे कञ्चुकवत्प्रतिमुच्याऽऽस्ते तस्मात्तया सह संभाषणं न कुर्यात्। तया सहैकस्मिन्गृहे वासो न कर्तव्यः। तत्स्वामिकं तत्स्पृष्टं वाऽन्नं नाश्नीयात्। अपिचाभिज्ञाः केचिदेवमाहुः—स्त्रियाः शृङ्गारोपयोगित्वेनाभ्यञ्जनमेवान्नस्थानीयं, तदीयं तैलादिकमेव न गृह्णीयात्। तया वा स्वशरीराभ्यञ्जनं न कारयेत्। अन्यदन्नं सत्यामिच्छायां भोक्तव्यमिति॥

प्रसङ्गाद्रजस्वलाव्रतानि विधत्ते—

यां मलवद्वाससꣳ संभवन्ति यस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुख्यपगल्भो या स्नाति तस्या अप्सु मारुको याऽभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपमारी याऽऽङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन्या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुꣳ सृजति तस्या उद्बन्धुको या पर्णेन पिबति तस्या उन्मादुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय॥, इति॥

(अग्नीषोमीयपुरोडाशविधि)

अभिशस्तो मिथ्यापवादयुक्तः। यामरण्ये, मलवद्वाससः संभवन्तीत्यनुवर्तते। पराचीमुच्चारणभीत्या लज्जया वा पराङ्मुखीम्। सभायामवाङ्मुखो वक्तुमशक्तो हीतमुख्यपगल्भ इत्युच्यते। मारुको मरणशीलः। दुश्चर्मा कुष्ठी। प्रलिखते भित्तौ चित्रादिकं करोति। खलतिः केशशून्यः। अपमारी दुर्मरणयुक्तः। काणः कुण्ठिताक्षः। श्यावदन्मलिनदन्तः। कृणत्ति तृणादि च्छिनत्ति। उद्बन्धुको रज्जुं बद्ध्वा मरणशीलः। खर्वेण वह्निपक्वेन शरावादिना। खर्वो वामनः। यस्मादुक्ता दोषा वर्तन्ते तस्मात्तत्परिहाराय रजस्वलाव्रतं संभवादिवर्जनरूपं नियममाचरेत्। भोजनेऽञ्जलिरदग्धशरावादिर्वा साधनमस्तु। व्रताचरणमुत्पत्स्यमानायाः प्रजाया रक्षणार्थं भवति॥

अत्र मीमांसा।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

"न संवदेत मलवद्वाससेत्यपि पूर्ववत्।
पुमर्थः स्यात्क्रतौ क्वापि संवादस्याप्रसक्तितः॥"

दर्शपूर्णमासप्रकरणे श्रूयते—"मलवद्वाससा न संवदेत" इति। अस्य निषेधस्य प्रकरणात्क्रत्वङ्गत्वमिति चेन्न। अप्रसक्तप्रतिषेधप्रसङ्गात्। "यस्य व्रत्येऽहन्पत्न्यनालम्भुका भवति। तामपरुध्य यजेत" इति रजस्वलाया निःसारणान्न क्रतौ संवादप्रसक्तिः। तस्मात्केवलपुरुषार्थस्यास्य प्रकरणादुत्कर्षः[1]॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः॥ १॥

(अथ द्वितीयाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः।)

त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाऽहरत्तस्मिन्निन्द्र उपहवमैच्छत तं नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्तस्य यदत्यशिष्यत तत्त्वष्टाऽऽहवनीय-

१ क. घ. ङ. च. °वल पुरुषार्थत्व स्यात्। अस्य।

मुप प्रावर्तयत्स्वाहेन्द्रशत्रुर्वर्धस्वेति यदवर्तय-
त्तद्वृत्रस्य वृत्रत्वं यदब्रवीत्स्वाहेन्द्रशत्रुर्वर्धस्वेति
तस्मादस्य (१) इन्द्रः शत्रुरभवत्स संभवं-
न्नग्नीषोमावभि समभवत्स इषुमात्रमिषुमात्रं
विष्वङ्ङवर्धत स इमाँल्लोकानवृणोद्यदिमाँल्लो-
कानवृणोत्तद्वृत्रस्य वृत्रत्वं तस्मादिन्द्रोऽबिभेत्स
प्रजापतिमुपाधावच्छत्रुर्मेऽजनीति तस्मै वज्रꣳ
सिक्त्वा प्रायच्छदेतेन जहीति तेनाभ्यायत
तावब्रूतामग्नीषोमौ मा (२) प्र हाराव मन्तः
स्व इति मम वै युवꣳ स्थ इत्यब्रवीन्मामभ्ये-
तमिति तौ भागधेयमैच्छेतां ताभ्यामेतमग्नी-
षोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्ता-
वब्रूतामभि संदष्टौ वै स्वो न शक्नुव ऐतुमिति
स इन्द्र आत्मनः शीतरूरावजनयत्तच्छीतरू-
रयोर्जन्म य एवꣳ शीतरूरयोर्जन्म वेद (३)
नैनꣳ शीतरूरौ हतस्ताभ्यामेनमभ्यनयत्तस्मा-
ज्जञ्जभ्यमानादग्नीषोमौ निरक्रामतां प्राणा-
पानौ वा एनं तदजहितां प्राणो वै दक्षोऽपानः
क्रतुस्तस्माज्जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू
इति प्राणापानावेवाऽऽत्मन्धत्ते सर्वमायुरेति स

देवता वृत्रान्निर्हूय वार्त्रघ्नꣳ हविः पूर्णमासे निरवपद्घ्नन्ति वा एनं पूर्णमास आ (४) अमावास्यायां प्याययन्ति तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायां तत्सꣳस्थाप्य वार्त्रघ्नꣳ हविर्वज्रमादाय पुनरभ्यायत ते अब्रूतां द्यावापृथिवी मा प्र हारावयोर्वै श्रित इति ते अब्रूतां वरं वृणावहै नक्षत्रविहिताऽहमसानीत्यसावब्रवीच्चित्रविहिताऽहमितीयं तस्मान्नक्षत्रविहिताऽसौ चित्रविहितेयं य एवं द्यावापृथिव्योः (५) वरं वेदैनं वरो गच्छति स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन्ते देवा वृत्रꣳ हत्वाऽग्नीषोमावब्रुवन्हव्यं नो वहतमिति तावब्रूतामपतेजसौ वै त्यौ वृत्रे वै त्ययोस्तेज इति तेऽब्रुवन्क इदमच्छैतीति गौरित्यब्रुवन्गौर्वाव सर्वस्य मित्रमिति साऽब्रवीत् (६) वरं वृणै मय्येव सतोभयेन भुनजाध्वा इति तद्गौराऽहरत्तस्माद्गवि सतोभयेन भुञ्जत एतद्वा अग्नेस्तेजो यद्घृतमेतत्सोमस्य यत्पयो य एवमग्नीषोमयोस्तेजो वेद तेजस्व्येव भवति ब्रह्मवादिनो वदन्ति किंदेवत्यं पौर्णमासमिति

प्राजापत्यमिति ब्रूयात्तेनेन्द्रं ज्येष्ठं पुत्रं निरवासायदिति तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति ( ७ )॥

( अस्य मा वेदाऽऽ द्यावापृथिव्योरब्रवीदिति तस्माच्चत्वारि च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

( अथ द्वितीयाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाक । )

त्वष्टा । हतपुत्र इति हत—पुत्रः । वीन्द्रमिति वि—इन्द्रम् । सोमम् । एति । अहरत् । तस्मिन् । इन्द्रः । उपहवमित्युप—हवम् । ऐच्छत । तम् । न । उपेति । अह्वयत । पुत्रम् । मे । अवधीः । इति । सः । यज्ञवेशसमिति यज्ञ—वेशसम् । कृत्वा । प्रासहेति प्र—सहा । सोमम् । अपिबत् । तस्य । यत् । अत्यशिष्यतेत्यति—अशिष्यत । तत् । त्वष्टा । आहवनीयमित्या—हवनीयम् । उप । प्रेति । अवर्तयत् । स्वाहा । इन्द्रशत्रुरितीन्द्र—शत्रुः । वर्धस्व । इति । यत् । अवर्तयत् । तत् । वृत्रस्य । वृत्रत्वमिति वृत्र—त्वम् । यत् । अब्रवीत् । स्वाहा । इन्द्रशत्रुरितीन्द्र—शत्रुः । वर्धस्व । इति । तस्मात् । अस्य (१) । इन्द्रः । शत्रुः । अभवत् । सः । संभवन्निति सं—

अभवन्। अग्नीषोमावित्यग्नी—सोमौ। अभि। समिति। अभवत्। सः। इषुमात्रमिषुमात्रमितीषुमा-त्रम्—इषुमात्रम्। विष्वङ्। अवर्धत। सः। इमान्। लोकान्। अवृणोत्। यत्। इमान्। लोकान्। अवृणोत्। तत्। वृत्रस्य। वृत्रत्वमिति वृत्र—त्वम्। तस्मात्। इन्द्रः। अबिभेत्। सः। प्रजापतिमिति प्रजा—पतिम्। उपेति। अधावत्। शत्रुः। मे। अजनि। इति। तस्मै। वज्रम्। सिक्त्वा। प्रेति। अयच्छत्। एतेन। जहि। इति। तेन। अभीति। आयत। तौ। अब्रूताम्। अग्नीषोमावित्यग्नी—सोमौ। मा (२)। प्रेति। हाः। आवम्। अन्तः। स्वः। इति। मम। वै। युवम्। स्थः। इति। अब्रवीत्। माम्। अभि। एतम्। इतम्। इति। तौ। भागधेयमिति भाग—धेयम्। ऐच्छेताम्। ताभ्याम्। एतम्। अग्नीषोमीयमित्यग्नी—सोमीयम्। एकादशकपालमित्येकादश—कपालम्। पूर्णमासे इति पूर्ण—मासे। प्रेति। अयच्छत्। तौ। अब्रूताम्। अभीति। संदष्टाविति सं—दष्टौ। वै। स्वः। न। शक्नुवः। ऐतुमित्या—एतुम्। इति। सः। इन्द्रः। आत्मनः। शीतरूरावीति शीत—रूरौ।

अजनयत् । तत् । शीतरूरयोरिति शीत—रूरयोः । जन्म । यः । एवम् । शीतरूरयोरिति शीत—रूरयोः । जन्म । वेद ( ३ ) । न । एनम् । शीतरूराविति शीत—रूरौ । हतः । ताभ्याम् । एनम् । अभीति । अनयत् । तस्मात् । जञ्जभ्यमानात् । अग्नीषोमावित्यग्नी—सोमौ । निरिति । अक्रामताम् । प्राणापानाविति प्राण—अपानौ । वै । एनम् । तत् । अजहिताम् । प्राण इति प्र—अनः । वै । दक्षः । अपान इत्यप—अनः । क्रतुः । तस्मात् । जञ्जभ्यमानः । ब्रूयात् । मयि । दक्षक्रतू इति दक्ष—क्रतू । इति । प्राणापानाविति प्राण—अपानौ । एव । आत्मन् । धत्ते । सर्वम् । आयुः । एति । सः । देवताः । वृत्रात् । निर्हूयेति निः—हूय । वार्त्रघ्नमिति वार्त्र—घ्नम् । हविः । पूर्णमास इति पूर्ण—मासे । निरिति । अवपन् । घ्नन्ति । वै । एनम् । पूर्णमास इति पूर्ण—मासे । एति ( ४ ) । अमावास्यायामित्यमा—वास्यायाम् । प्याययन्ति । तस्मात् । वार्त्रघ्नी इति वार्त्र—घ्नी । पूर्णमास इति पूर्ण—मासे । अन्विति । उच्येते इति । वृधन्वती इति वृधन्—वती । अमावास्यायामित्यमा—वास्यायाम् । तत् ।

सꣳस्थाप्येति सं—स्थाप्य । वार्त्रघ्नमिति वार्त्र—घ्नम् । हविः । वज्रम् । आदायेत्या—दाय । पुनः । अभीति । आयत । ते इति । अब्रूताम् । द्यावा-पृथिवी इति द्यावा—पृथिवी । मा । प्रेति । हाः । आवयोः । वै । श्रितः । इति । ते इति । अब्रूताम् । वरम् । वृणावहै । नक्षत्रविहितेति नक्षत्र—विहिता । अहम् । असानि । इति । असौ । अब्रवीत् । चित्र-विहितेति चित्र—विहिता । अहम् । इति । इयम् । तस्मात् । नक्षत्रविहितेति नक्षत्र—विहिता । असौ । चित्रविहितेति चित्र—विहिता । इयम् । यः । एवम् । द्यावापृथिव्योरिति द्यावा—पृथिव्योः (५) । वरम् । वेद । एति । एनम् । वरः । गच्छति । सः । आभ्याम् । एव । प्रसूत इति प्र—सूतः । इन्द्रः । वृत्रम् । अहन् । ते । देवाः । वृत्रम् । हत्वा । अग्नी-षोमावित्यग्नी—सोमौ । अब्रुवन् । हव्यम् । नः । वहतम् । इति । तौ । अब्रूताम् । अपतेजसावित्य-प—तेजसौ । वै । त्यौ । वृत्रे । वै । त्ययोः । तेजः । इति । ते । अब्रुवन् । कः । इदम् । अच्छ । एति । इति । गौः । इति । अब्रुवन् । गौः । वाव । सर्वस्य । मित्रम् । इति । सा । अब्रवीत् ( ६ ) ।

वर॑म् । वृ॒णै॒ । मयि॑ । ए॒व । म॒ता । उ॒भये॑न । भु॒न॒जा॒ध्वै॒ । इति॑ । तत् । गोः । ए॒ति॒ । अह॑रत् । तस्मा॑त् । गवि॑ । स॒ता । उ॒भये॑न । भु॒ञ्जते॒ । ए॒तत् । वै । अ॒ग्नेः । तेजः॑ । यत् । घृ॒तम् । ए॒तत् । सोम॑स्य । यत् । पयः॑ । यः । ए॒वम् । अ॒ग्नीषोम॑योरित्य॒ग्नी—सोम॑योः । तेजः॑ । वेद॑ । ते॒ज॒स्वी । ए॒व । भ॒व॒ति । ब्र॒ह्म॒वा॒दिन॒ इति॑ ब्र॒ह्म—वा॒दिनः॑ । व॒द॒न्ति॒ । किं॒दे॒व॒त्य॑मिति॒ किं—दे॒व॒त्य॑म् । पौ॒र्ण॒मा॒समिति॑ पौ॒र्ण—मा॒सम् । इति॑ । प्रा॒जा॒प॒त्यमिति॑ प्रा॒जा—प॒त्यम् । इति॑ । ब्रू॒या॒त् । तेन॑ । इन्द्र॑म् । ज्ये॒ष्ठम् । पु॒त्रम् । नि॒रवा॑साययदिति॑ निः—अवा॑सायय॒त् । इति॑ । तस्मा॑त् । ज्ये॒ष्ठम् । पु॒त्रम् । धने॑न । नि॒रव॑साययन्तीति॑ निः—अव॑साययन्ति ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

( अथ द्वितीयकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः । )

उपोद्घाते विश्वरूपवधः सम्यक्समीरितः ॥

अथ द्वितीयानुवाकेऽग्नीषोमीयपुरोडाशं विधित्सुरादौ तस्योपोद्घातस्य विध्युपयोगं दर्शयति—

त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाऽहरत्तस्मिन्निन्द्र उपहवमैच्छत तं नोपाह्वयत पुत्रं मेऽवधीरिति

स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्तस्य यदत्यशिष्यत तत्त्वष्टाऽऽहवनीयमुप प्रावर्तय-त्स्वाहेन्द्रशत्रुर्वर्धस्वेति यदवर्तयत्तद्वृत्रस्य वृत्र-त्वं यदब्रवीत्स्वाहेन्द्रशत्रुर्वर्धस्वेति तस्माद-स्येन्द्रः शत्रुरभवत्स संभवन्नग्नीषोमावभि सम-भवत्स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत स इमाँल्लोकानवृणोद्यदिमाँल्लोकानवृणोत्तद्वृत्रस्य वृत्रत्वं तस्मादिन्द्रोऽबिभेद् , इति।

यस्मात्कारणादस्योत्पत्त्यर्थमाहुतिमवर्तयत्तस्मात्कारणाद्वर्तयत्येतदर्थमिति व्युत्पत्त्या वृत्रत्वं संपन्नम्। यस्मात्कारणात्पष्ठीसमासस्वरं विसृज्य बहुव्रीहि स्वरमुच्चारितवान्, तस्मात्कारणादिन्द्रः शातयिता यस्येति व्युत्पत्त्या वृत्रस्या-स्येन्द्रो घातकोऽभूत्। शेषं पूर्वप्रपाठके व्याख्यातम्॥

तस्य वधोपायं दर्शयति—

स प्रजापतिमुपाधावच्छत्रुर्मेऽजनीति तस्मै वज्रꣳ सिक्त्वा प्रायच्छदेतेन जहीति तेनाभ्यायत , इति।

इन्द्रो मम कश्चिच्छत्रुर्जात इति वदन्प्रजापतिमसेवत। तस्मा इन्द्राय स प्रजापतिर्वज्रं सिक्त्वा वृत्रमुद्दिश्य कृत्याभिमन्त्रितजलेन प्रोक्ष्यैतेन जहीति वदन्प्रायच्छत्। जहि मारयेत्यर्थः। तेन वज्रेण सहितः स इन्द्र एनं वृत्रं हन्तु-मभिलक्ष्याऽऽयताऽऽगतवान्॥

इत्थमुपोद्घातं तदुपयोगं चोक्त्वाऽग्नीषोमीयपुरोडाशविधिमर्थवादेनोन्न-यति—

तावब्रूतामग्नीषोमौ मा प्र हाराववमन्तः स्व इति मम वै युवꣳ स्थ इत्यब्रवीन्मामभ्येतमिति तौ भागधेयमैच्छेतां ताभ्यामेतमग्नीषोमी-यमेकादशकपालं पूर्णमासे प्रायच्छत्, इति।

१ क. घ. ङ. च. शाता। २ क. घ ङ. च. 'अ वृ'।

हे इन्द्र मा प्रहाः, वृत्रं मा प्रहर । आवमन्तः स्वः, आवामुभावेतस्य मुखे तिष्ठावः। तज्ज्ञात्वा स इन्द्रोऽब्रवीत्—युवां मम स्थो वै खल्विति तस्मान्मामभ्येतं मामभिलक्ष्याऽऽगच्छतम् [इति]। ततोऽग्नीषोमौ त्वत्सकाशमागतयोरावयोः किं भागधेयमिति पप्रच्छतुः । स चेन्द्रः पूर्णमासे योऽग्नीषोमीयपुरोडाशः स युवयोर्भाग इति दत्तवान् । अग्नीषोमीयमेकादशकपालं निर्वपेदिति विधिरत्र द्रष्टव्यः ॥

अग्नीषोमयोर्निर्गमनप्रकारं दर्शयति—

तावब्रूतामभि संदष्टौ वै स्वो न शक्नुव ऐतुमिति स इन्द्र आत्मनः शीतरूरावजनयत्तच्छीतरूरयोर्जन्म य एवꣳ शीतरूरयोर्जन्म वेद नैनꣳ शीतरूरौ हतस्ताभ्यामेनमभ्यनयत्तस्माज्जञ्जभ्यमानादग्नीषोमौ निरक्रामताम्, इति।

वृत्रस्य मुखे दन्तपङ्क्तिभ्याममितः सम्यग्दष्टावेव वर्तावहे । तस्मादागन्तुं न शक्नुव इति उक्त इन्द्रस्तयोरागमनाय स्वात्मनः सकाशाच्छीतज्वरं तदनन्तरभाविसंतापं चोभावुत्पादितवान् । तदानीं शीतरूरशब्दाभिधेययोर्ज्वरतापयोर्जन्म समुत्पन्नम् । तज्जन्मवेदिनं न शीतरूरौ हतो न मारयतः । ततः स इन्द्रस्ताभ्यां शीतरूराभ्यामायुधसदृशाभ्यामेनं वृत्रमभिलक्ष्य प्रयुक्ताभ्यामनयदेनं वृत्रं संयोजितवान् । तदा शीतज्वरसंतापाभ्यां जञ्जभ्यमानान्मुखविदारणं कुर्वतस्तस्माद्वृत्रादग्नीषोमौ निर्गतौ ॥

प्रसङ्गान्मन्त्रमुत्पाद्य विनियुङ्क्ते—

प्राणापानौ वा एनं तदजहितां प्राणो वै दक्षोऽपानः क्रतुस्तस्माज्जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति प्राणापानावेवाऽऽत्मन्धत्ते सर्वमायुरेति , इति।

अग्नीषोमौ यदा निर्गतौ तदानीं प्राणापानावेवैनं वृत्रं त्यक्तवन्तौ तयोश्च प्राणापानयोः क्रमेण दक्षः क्रतुरित्येव नामनी । यस्मात्कारणादेते तयोर्नामनी तस्मात्कारणात्क्रतुकाले जञ्जभ्यमानो मुखविदारणरूपं गात्रविनामं कुर्वन्यजमानो मयि दक्षक्रतू इति मन्त्रं ब्रूयात् । तिष्ठतामिति मन्त्रवाक्यशे-

षस्याध्याहारः। तेन मन्त्रपाठेन प्राणापानावेव स्वात्मनि स्थिरौ धारितवान्भवति। ततोऽपमृत्युपरिहारेण सर्वमायुः प्राप्नोति ॥

अथानेन वृत्रवधप्रसङ्गेनाऽऽज्यभागमन्त्रयुगलयोः कालभेदेन व्यवस्था विधत्ते—

स देवता वृत्रान्निर्हूय वार्त्रघ्नꣳ हविः पूर्णमासे निरवपद्घ्नन्ति वा एनं पूर्णमास आऽमावास्यायां प्याययन्ति तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम्, इति।

स इन्द्रोऽग्नीषोमप्रमुखा वृत्रमुखे स्थिताः सर्वा देवता वृत्रान्निर्हूय निःसार्य वृत्रहननहेतुभूतं हविराज्यभागद्रव्यरूपं पूर्णमासे संपादितवान्। लोकेऽप्येनं वृत्रमावरणात्मकं वृत्रान्धकाररूपेणावस्थितं शत्रुं पूर्णिमादिने ज्योत्स्नया विनाशयन्ति। अमावास्यायां ज्योत्स्नाया अभावाद्वृत्ररूपमन्धकारमाप्याययन्ति सर्वतो वर्धयन्ति। यस्मादेवं तस्माद्वृत्रहननशब्दलाञ्छिते ऋचावाज्यभागयोः पूर्णमासे पुरोनुवाक्ये कर्तव्ये। वृधिधातुयुक्ते ऋचावमावास्यायां पुरोनुवाक्ये कर्तव्ये। अग्निर्वृत्राणि जङ्घनत्त्वꣳ राजोत वृत्रहेत्यनयोर्वृत्रहननप्रतीतिरस्ते ऋचौ वार्त्रघ्न्यौ। कविविप्रेण वावृधे वर्धयामो वचोविद इत्येते ऋचौ वृधिधातुयुक्तत्वाद्वृधन्वत्यौ ॥

प्रासङ्गिकीमाज्यभागव्यवस्थां विधाय प्रकृतं वृत्रवधप्रकारं दर्शयति—

तत्सꣳस्थाप्य वार्त्रघ्नꣳ हविर्वज्रमादाय पुनरभ्यायत ते अब्रूतां द्यावापृथिवी मा प्र हारावयोर्वै श्रित इति ते अब्रूतां वरं वृणावहै नक्षत्रविहिताऽहमसानीत्यसावब्रवीच्चित्रविहिताऽहमितीयं तस्मान्नक्षत्रविहिताऽसौ चित्रविहितेयं य एवं द्यावापृथिव्योर्वरं वेदैनं वरो गच्छति स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन्, इति।

स इन्द्रो वृत्रहननहेतुभूतमाज्यभागरूपं हविः संपूर्णं कृत्वा पूर्ववद्वज्रमादाय पुनरपि वृत्रमभिलक्ष्य हन्तुमागतवान्। तदानीं द्यावापृथिव्याविन्द्रमब्रूताम्—अयं वृत्रो भूमिमारभ्य द्युलोकपर्यन्तं व्याप्याऽऽवयोराश्रितो वर्तते तस्मान्म-

(दस्य)दीयमेनं न प्रहरेति । तत इन्द्रस्यानङ्गीकारमवलोक्य प्रहारमप्यनुज्ञातु-मुत्कोचत्वेन वरं वृतवत्यौ । नक्षत्रैर्विहिताऽलंकृता स्यामिति दिवो वरः । मनुष्यपशुवृक्षनगनदीसमुद्रादिरूपेण विचित्रेण विहिताऽलंकृता स्यामिति पृथिव्या वरः । तेन वरेण ते तथैव स्याताम् । एतद्वराभिज्ञोऽपि स्वाभीष्टं वरं प्राप्नोति । ततः स इन्द्रो द्यावापृथिवीभ्यामनुज्ञातो वृत्रं हतवान् ॥

अथाभिहितस्याग्नीषोमीयपुरोडाशस्य देवौ प्रशंसति—

ते देवा वृत्रꣳ हत्वाऽग्नीषोमावब्रुवन्हव्यं नो वहतमिति तावब्रूतामपतेजसौ वै त्यौ वृत्रे वै त्ययोस्तेज इति तेऽब्रुवन्क इदमच्छैतीति गौरित्यब्रुवन्गौर्वाव सर्वस्य मित्रमिति साऽब्रवीद्वरं वृणै मय्येव सतोभयेन भुनजाध्वा इति तद्गौराऽहरत्तस्माद्गवि सतोभयेन भुञ्जत एतद्वा अग्नेस्तेजो यद्घृतमेतत्सोमस्य यत्पयो य एवमग्नीषोमयोस्तेजो वेद तेजस्व्येव भवति, इति ।

इन्द्रयुक्ताः पार्श्ववर्तिनः सर्वे देवा वृत्रं हत्वा तन्मुखान्निःसृतावग्नीषोमौ प्रति हव्यमस्मदर्थे वहतमित्यब्रुवन् । ततस्तावग्नीषोमौ तान्देवान्प्रत्येवमब्रूताम्—त्यौ तथाविधौ वृत्रेण चिरं दंशनादपगततेजस्कावेव संपन्नौ, त्ययोस्तथाविधयोस्तेजः सामर्थ्यं वृत्र एव स्थितमिति । ते देवा अब्रुवन्परस्परं को नामेदं तेज आहर्तुं गच्छतीति । तत्र बुद्धिमन्तो गोः सर्वमित्रत्वेन वैराभावाद्गौरेव वृत्रशरीरे गत्वा तेजः समानेष्यतीत्युक्तवन्तः । साऽपि गौरुत्कोचत्वेन वरमेवमयाचत—अनयोः संबन्धि घृतपयोरूपं तेजो वृत्रशरीरादानेष्यामि, आनीतं च तन्मय्येव सर्वदा तिष्ठतु, मय्येव स्थितेन तेनोभयेन तदा तदा स्वीकृतेन भोजनं निर्वर्तयध्वमिति । तमिमं वरं लब्ध्वा तत्तेजो गौरानयत् । तस्माद्वरवृतत्वाल्लोकेऽपि निरन्तरं गवि तिष्ठतैव तेजसा घृतपयोरूपेणोभयेन तदा तदा स्वीकृतेन सर्वे भोजनं निष्पादयन्ति । तत्र यद्घृतमेतदेवाग्नेस्तेजो यत्पय एतदेव सोमस्य तेजस्तदुभयवेदनेन तेजस्वी भवतीति ॥

तदिदमग्नीषोमीयपुरोडाशरूपं पौर्णमासकर्म प्रजापतिसंबन्धित्वेनेन्द्रसंबन्धित्वेन च प्रशंसति—

१ ख. अथ विदि' । २ ख 'मन्त. केचन गो ।

ब्रह्मवादिनो वदन्ति किंदेवत्यं पौर्णमास-
मिति प्राजापत्यमिति ब्रूयात्तेनेन्द्रं ज्येष्ठं
पुत्रं निरवासाययदिति तस्माज्ज्येष्ठं
पुत्रं धनेन निरवसाययन्ति ॥ , इति ॥

नात्र प्रजापतेर्हविर्भोक्तृत्वेन पौर्णमासदेवतात्वं किं तु तत्कर्मस्रष्टृत्वेन । तच्च पूर्वकाण्ड उदाहृतम्—" प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यं च " इत्यादि । स च प्रजापतिस्तेन पौर्णमासकर्मणा स्वकीयं ज्येष्ठं पुत्रमिन्द्रं निरवासाययन्निःशेषवित्तदानेन स्थिरनिवासमकरोत् । एतदपि पूर्वकाण्ड एव स्पष्टमुदाहृतम्—" तेनेन्द्रं निरवासाययत्तेनेन्द्रः परमां काष्ठामगच्छत् " इति । यथा प्रजापतिर्यज्ञान्ससर्ज तथेन्द्रोऽप्यग्नीषोमौ वृत्रान्निःसार्य ताभ्यामिमं पुरोडाशं दत्तवानिति अस्ति प्रजापतेरिवेन्द्रस्यापि संबन्धः । यस्मात्प्रजापतिरिन्द्रं निरवासाययत्तस्माल्लोकेऽपि ज्येष्ठं पुत्रं धनेन निरवसाययन्ति निःशेषमायुषोऽवसानं धनेन युक्तो यथा प्राप्नोति तथा कुर्वन्तीत्यर्थः ॥

अथ मीमांसा ।

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

" अग्नीषोमीय आग्नेयात्पूर्वो नो वाऽस्तु पूर्वता ।
ब्राह्मणक्रमतो मैवं मन्त्रक्रमबलत्वतः ॥
स्मृतिक्रमादनुष्ठानं मन्त्राणां स्मारकत्वतः ।
प्राबल्यं ब्राह्मणस्यास्ति विधिनाऽपि कृतार्थता ॥ "

अग्नीषोमीययागस्तैत्तिरीयब्राह्मणे पञ्चमप्रपाठके द्वितीयानुवाके समाम्नातः—" ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् " इति । आग्नेययागस्तु षष्ठप्रपाठके तृतीयानुवाक आम्नातः—"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति " इति । तत्रानुष्ठान[1]स्य ब्राह्मणोक्तविध्यधीनत्वादग्नीषोमीयस्य[2] प्रथममनुष्ठानमिति प्राप्ते ब्रूमः—मन्त्रकाण्डे पूर्वं पठिता आग्नेयमन्त्राः । तथा हि—हौत्रकाण्ड आज्यभागमन्त्रानुवाकादुत्तरस्मिन्ननुवाके प्रथममग्निर्मूर्धेत्यादिके आग्नेय्यौ याज्यानुवाक्ये आम्नाते । ततः " प्रजापते न त्वदेतानि " इत्यादिके प्राजापत्ये । ततोऽग्नीषोमा सवेदसेत्यादिके अग्नीषोमीये । आध्वर्यवकाण्डेऽग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्यामि-

१ क. ध. ङ. °नस्योक्त° । २ क ध. ङ. °स्य

त्याग्नेयः पूर्वमाम्नातः । यजमानकाण्डेऽप्यग्नेरहं देवयज्ययाऽन्नादो भूयासमित्याम्नाय पश्चादग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमित्याम्नायते । मन्त्रक्रमश्च प्रबलः । मन्त्रैः स्मृत्वा पश्चादनुष्ठेयत्वात् । ब्राह्मणं त्वप्राप्तपदार्थविधिनाऽपि चरितार्थम् । अतोऽनुष्ठानस्मरणायैवोत्पन्नान्मन्त्रान्बाधितुं नालमिति मन्त्रक्रमेणाऽऽग्नेयस्यैव प्रथममनुष्ठानम् ॥

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

" जज्ञभ्यमानमन्त्रोक्तिः पुंसो धर्मः क्रतोरुत ।
वाक्यादाद्यः प्रक्रियया द्वितीयस्त्वविरुद्धया ॥ "

दर्शपूर्णमासप्रकरणे श्रूयते—" प्राणो वै दक्षोऽपानः क्रतुस्तस्माज्जज्ञभ्यमानो ब्रूयान्मयि दक्षक्रतू इति प्राणापानावेवाऽऽत्मन्धत्ते सर्वमायुरेति " इति । गात्रविनामेन विदारितमुखः पुरुषो जज्ञभ्यमानः, तस्य वाक्यान्मन्त्रोक्तिः प्रतीयते । वाक्यं च प्रकरणाद्बलीयः । तस्मात्केवलं पुंधर्म इति चेन्नैवम् । क्रतावपि जज्ञभ्यमानपुरुषसंभवेन वाक्यप्रकरणयोर्विरोधाभावे सत्युभाभ्यां क्रतुयुक्तपुरुषसंस्कारत्वावगमात् ॥

तत्रैव प्रथमपादे चिन्तितम्—

" वार्त्रघ्न्यौ पौर्णमासे स्तो वृधन्वत्यौ तु दर्शगे ।
इति प्रधानशेषत्वमुक्तं किंवा व्यवस्थितिः ॥
क्रमेण प्रापिता मैत्रावश्चत्वारोऽप्याज्यभागयोः ।
क्रमाद्वाक्यं बलीयोऽत एषां दर्शादिशेषता ॥
न मुख्ये सोम एकोऽस्ति नाऽऽधारत्वादिकालयोः ।
दर्शादेरव्यवस्थित्या प्राप्तौ वाक्याद्व्यवस्थितिः ॥ "

दर्शपूर्णमासप्रकरणे श्रूयते—" तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम् " इति । तत्रेदं वार्त्रघ्नीयुगलं वृधन्वतीयुगलं च हौत्रकाण्ड आज्यभागयोः क्रमेऽग्निर्वृत्राणि जङ्घनदित्यनुवाकेनाऽऽम्नातम् । उदाहृतेन तु ब्राह्मणवाक्येन दर्शपूर्णमासयागयोस्तद्विधिरवगम्यते । तत्र वाक्यस्य प्रबलत्वादेषां मन्त्राणां दर्शपूर्णमासयागाङ्गत्वं न त्वाज्यभागाङ्गत्वमिति प्राप्ते ब्रूमः— "अग्निर्वृत्राणि जङ्घनत्" इत्याग्नेयी प्रथमा वार्त्रघ्नी । "त्वं सोमासि सत्पतिः" इति सौम्या द्वितीया वार्त्रघ्नी । "अग्निः प्रत्नेन मन्मना" इत्याग्नेयी प्रथमा वृधन्वती । "सोमगीर्भिष्ट्वा वयम्" इति सौम्या द्वितीया वृधन्वती । तत्र मुख्ययोर्दर्शपूर्ण-

१ ख. ग. °त्याग्नेयस्य प° । २ क घ. ङ च °त्वाज्यपग° । ३ क घ ङ. °मुतास्मिन्वाव्य° । ४ क. घ. ङ. मन्त्रा श्रुत्या नोऽन्या° । ५ ख °न जन्म° ।

( अमावास्याया सानाय्ययागविधि )

मामयोराग्नेयपुरोडाशसद्भावादाग्नेयीद्वयस्य विकल्पेन पुरोनुवाक्यात्वं कथंचि-द्भवतु । सौम्ययोस्तु तन्न संभवति । सोमदेवताया अभावात् । नह्यग्नीषोमीयेऽपि केवलः सोमो विद्यते । किं च, पौर्णमास्याममावास्यायामिति सप्तमीभ्यामाधारत्वं गम्यते । तच्च यागवाचित्वे यागस्य मुख्यत्वान्न संभवति । कालस्य तूपसर्जनत्वात्तद्वाचित्वं युक्तम् । किं च, प्रयाजमन्त्रानुवाकस्यानन्तरमेवायमनुवाकः पठितः । स चाऽऽज्यभागयोरङ्गयोः क्रमो न तु मुख्ययोर्दर्शपूर्णमासयोः । तस्मान्न मन्त्रचतुष्टयस्य मुख्ययागाङ्गत्वम् । किं तु आज्यभागाङ्गत्वम् । नन्वेतत्क्रमेणैव लब्धं तत्राप्याग्नेये प्रथम आज्यभागे मन्त्रोऽप्याग्नेयः, सौम्ये द्वितीये सौम्य इत्येषा व्यवस्था लिङ्गेनैव लभ्यते । बाढम् । तथाऽपि वार्त्रघ्नीयुगलं पूर्णमासे वृधन्वतीयुगलममावास्यायामित्येषा व्यवस्था पूर्वमप्राप्ता ब्राह्मणवाक्येन विधीयत इति न वैयर्थ्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

( अथ द्वितीयाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

इन्द्रं वृत्रं जघ्निवाꣳसं मृधोऽभि प्रावेपन्त स एतं वैमृधं पूर्णमासेऽनुनिर्वाप्यमपश्यत्तं निरवपत्तेन वै स मृधोऽपाहत यद्वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति मृध एव तेन यजमानोऽप हत इन्द्रो वृत्रꣳ हत्वा देवताभिश्चेन्द्रियेण च व्यार्ध्यत स एतमाग्नेयमष्टाकपालममावास्यायामपश्यदैन्द्रं दधि ( १ ) तं निरवपत्तेन वै स देवताश्चेन्द्रियं चावारुन्ध यदा-

१ क. घ. ङ. °वति । सौ° । २ ख. °क्येनाभिवी° । ३ ख. च. न तद्वैय° ।

ग्नेयोऽष्टाकपालोऽमावास्यायां भवत्यैन्द्रं दधि देवताश्चैव तेनेन्द्रियं च यजमानोऽव रुन्ध इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यं पृथिवीमनु व्यार्छत्तदोषधयो वीरुधोऽभवन्त्स प्रजापतिमुपाधावद्वृत्रं मे जघ्नुष इन्द्रियं वीर्यम् ( २ ) पृथिवीमनु व्यारत्तदोषधयो वीरुधोऽभूवन्निति स प्रजापतिः पशूनब्रवीदेतदस्मै सं नयतेति तत्पशव ओषधीभ्योऽध्यात्मन्त्समनयन्तत्प्रत्यदुहन्यत्समनयन्तत्सांनाय्यस्य सांनाय्यत्वं यत्प्रत्यदुहन्तत्प्रतिधुषः प्रतिधुक्त्वꣳ समनैषुः प्रत्यधुक्षन्न तु मयि श्रयत इत्यब्रवीदेतदस्मै ( ३ ) शृतं कुरुतेत्यब्रवीत्तदस्मै शृतमकुर्वन्निन्द्रियं वावास्मिन्वीर्यं तदश्रयन्तच्छृतस्य शृतत्वꣳ समनैषुः प्रत्यधुक्षञ्छृतमक्रन्न तु मा धिनोतीत्यब्रवीदेतदस्मै दधि कुरुतेत्यब्रवीत्तदस्मै दध्यकुर्वन्तदेनमधिनोत्तद्दध्नो दधित्वं ब्रह्मवादिनो वदन्ति दध्नः पूर्वस्यावदेयम् ( ४ ) दधि हि पूर्वं क्रियत इत्यनादृत्य तच्छृतस्यैव पूर्वस्याव द्येदिन्द्रियमेवास्मिन्वीर्यꣳ श्रित्वा दध्नोपरिष्टाद्धिनोति यथापूर्वमुपैति यत्पूती-

कैर्वा पर्णवल्कैर्वाऽऽतञ्च्यात्सौम्यं तद्यत्क्वलै रा-
क्षसं तद्यत्तण्डुलैर्वैश्वदेवं तद्यदातञ्चनेन मानुषं
तद्यद्दध्ना तत्सेन्द्रं दध्नाऽऽतनक्ति ( ५ ) सेन्द्र-
त्वायाग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य सं-
तत्या इन्द्रो वृत्रꣳ हत्वा परां परावतमगच्छ-
दपाराधमिति मन्यमानस्तं देवताः प्रैषमैच्छ-
न्त्सोऽब्रवीत्प्रजापतिर्यः प्रथमोऽनुविन्दति तस्य
प्रथमं भागधेयमिति तं पितरोऽन्वविन्दन्त-
स्मात्पितृभ्यः पूर्वेद्युः क्रियते सोऽमावास्यां
प्रत्याऽगच्छत्तं देवा अभि समगच्छन्तामा वै
नः ( ६ ) अद्य वसु वसतीतीन्द्रो हि देवानां
वसु तदमावास्याया अमावास्यत्वं ब्रह्मवादिनो
वदन्ति किंदेवत्यꣳ सांनाय्यमिति वैश्वदेव-
मिति ब्रूयाद्विश्वे हि तद्देवा भागधेयमभि सम-
गच्छन्तेत्यथो खल्वैन्द्रमित्येव ब्रूयादिन्द्रं वाव
ते तद्भिषज्यन्तोऽभि समगच्छन्तेति ( ७ ) ॥

दधि मे जघ्नुषं इन्द्रियं वीर्यमित्यब्रवीदेतदस्मा अवदेयं तनक्ति नो द्विचत्वारिꣳशच्च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अमावास्याया सांनाय्ययागविधि: )

( अथ द्वितीयाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

इन्द्रम् । वृत्रम् । जघ्निवाꣳसम् । मृधः । अभि । प्रेति । अवेपन्त । सः । एतम् । वैमृधम् । पूर्णमास इति पूर्ण—मासे । अनुनिर्वाप्यमित्यनु—निर्वाप्यम् । अपश्यत् । तम् । निरिति । अवपत् । तेन । वै । सः । मृधः । अपेति । अहत । यत् । वैमृधः । पूर्णमास इति पूर्ण—मासे । अनुनिर्वाप्य इत्यनु—निर्वाप्यः । भवति । मृधः । एव । तेन । यजमानः । अपेति । हते । इन्द्रः । वृत्रम् । हत्वा । देवताभिः । च । इन्द्रियेण । च । वीति । आर्ध्यत । सः । एतम् । आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । अमावास्यायामित्यमा—वास्यायाम् । अपश्यत् । ऐन्द्रम् । दधि ( १ ) । तम् । निरिति । अवपत् । तेन । वै । सः । देवताः । च । इन्द्रियम् । च । अवेति । अरुन्ध । यत् । आग्नेयः । अष्टाकपाल इत्यष्टा—कपालः । अमावास्यायामित्यमा—वास्यायाम् । भवति । ऐन्द्रम् । दधि । देवताः । च । एव । तेन । इन्द्रियम् । च । यजमानः । अवेति । रुन्धे । इन्द्रस्य । वृत्रम् । जघ्नुषः । इन्द्रियम् । वीर्यम् । पृथिवीम् । अनु । वीति । आर्छत् । तत् ।

ओषधयः। वीरुधः। अभवन्। सः। प्रजापतिमिति प्रजा—पतिम्। उपेति। अधावत्। वृत्रम्। मे। जघ्नुषः। इन्द्रियम्। वीर्यम् (२)। पृथिवीम्। अनु। वीति। आरत्। तत्। ओषधयः। वीरुधः। अभूवन्। इति। सः। प्रजापतिरिति प्रजा—पतिः। पशून्। अब्रवीत्। एतत्। अस्मै। समिति। नयत। इति। तत्। पशवः। ओषधीभ्य इत्योषधि—भ्यः। अधीति। आत्मन्। समिति। अनयन्। तत्। प्रतीति। अदुहन्। यत्। समनयन्निति सम्—अनयन्। तत्। सांनाय्यस्येति सां—नाय्यस्य। सांनाय्यत्वमिति सांनाय्य—त्वम्। यत्। प्रत्यदुहन्निति प्रति—अदुहन्। तत्। प्रतिधुष इति प्रति—धुषः। प्रतिधुक्त्वमिति प्रतिधुक्—त्वम्। समिति। अनैषुः। प्रतीति। अधुक्षन्। न। तु। मयि। श्रयते। इति। अब्रवीत्। एतत्। अस्मै (३)। शृतम्। कुरुत। इति। अब्रवीत्। तत्। अस्मै। शृतम्। अकुर्वन्। इन्द्रियम्। वाव। अस्मिन्। वीर्यम्। तत्। अश्रयन्। तत्। शृतस्य। शृतत्वमिति शृत—त्वम्। समिति। अनैषुः। प्रतीति। अधुक्षन्। शृतम्। अक्रन्। न। तु। मा। धिनोति। इति।

अब्रवीत् । एतत् । अस्मै । दधि । कुरुत । इति । अब्र-
वीत् । तत् । अस्मै । दधि । अकुर्वन् । तत् ।
एनम् । अधिनोत् । तत् । दध्नः । दधित्वमिति
दधि—त्वम् । ब्रह्मवादिन इति ब्रह्म—वादिनः ।
वदन्ति । दध्नः । पूर्वस्य । अवदेयमित्यव—देयम् ।
( ४ ) । दधि । हि । पूर्वम् । क्रियते । इति । अनादृ-
त्येयना—दृत्य । तत् । शृतस्य । एव । पूर्वस्य ।
अवेति । द्येत् । इन्द्रियम् । एव । अस्मिन् । वीर्यम् ।
श्रित्वा । दध्ना । उपरिष्टात् । धिनोति । यथापूर्व-
मिति यथा—पूर्वम् । उपेति । एति । यत् । पूतीकैः ।
वा । पर्णवल्कैरिति पर्ण—वल्कैः । वा । आतञ्च्या-
दित्या—तञ्च्यात् । सौम्यम् । तत् । यत् । क्वलैः ।
राक्षसम् । तत् । यत् । तण्डुलैः । वैश्वदेवमिति वैश्व—
देवम् । तत् । यत् । आतञ्चनेनेत्या—तञ्चनेन । मानु-
षम् । तत् । यत् । दध्ना । तत् । सेन्द्रमिति स—
इन्द्रम् । दध्ना । एति । तनक्ति ( ५ )। सेन्द्रत्वायेति
सेन्द्र—त्वाय । अग्निहोत्रोच्छेषणमित्यग्निहोत्र—उच्छे-
षणम् । अभ्यातनक्तीत्यभि—आतनक्ति । यज्ञस्य ।
संतत्या इति सं—तत्यै । इन्द्रः । वृत्रम् । हत्वा ।
पराम् । परावतमिति परा—वतम् । अगच्छत् '

अपेति । अराधम् । इति । मन्यमानः । तम् । देवताः । प्रैषमिति प्र—एषम् । ऐच्छन् । सः । अब्रवीत् । प्रजापतिरिति प्रजा—पतिः । यः । प्रथमः । अनुविन्दतीत्यनु—विन्दति । तस्य । प्रथमम् । भागधेयमिति भाग—धेयम् । इति । तम् । पितरः । अन्विति । अविन्दन् । तस्मात् । पितृभ्य इति पितृ—भ्यः । पूर्वेद्युः । क्रियते । सः । अमावास्यामित्यमा—वास्याम् । प्रति । एति । अगच्छत् । तम् । देवाः । अभि । समिति । अगच्छन्त । अमा । वै । नः ( ६ ) । अद्य । वसु । वसति । इति । इन्द्रः । हि । देवानाम् । वसु । तत् । अमावास्याया इत्यमा—वास्यायाः । अमावास्यत्वमित्यमावास्य—त्वम् । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । किंदेवत्यमिति किं—देवत्यम् । सांनाय्यमिति सां—नाय्यम् । इति । वैश्वदेवमिति वैश्व—देवम् । इति । ब्रूयात् । विश्वे । हि । तत् । देवाः । भागधेयमिति भाग—धेयम् । अभीति । समगच्छन्तेति सम्—अगच्छन्त । इति । अथो इति । खलु । ऐन्द्रम् । इति । एव । ब्रूयात् । इन्द्रम् । वाव । ते ।

तत् । भिषज्यन्तः । अभि । समितिं । अगच्छन्त ।
इतिं ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अथ द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः । )

द्वितीयेऽग्नीषोमयागोऽभिहितः पूर्णिमादिने ॥
अथ तृतीयेऽमावास्यायां सानाय्ययागो वक्तव्यः ।

तत्र प्रथमं तावत्पौर्णमास्यामनुनिर्वाप्यं वैमृधं विधित्सुः प्रस्तौति—

इन्द्रं वृत्रं जघ्निवाꣳसं मृधोऽभि प्रावेपन्त स एतं वैमृधं पूर्णमासेऽनुनिर्वाप्यमपश्यत्तं निरवपत्तेन वै स मृधोऽपाहत, इति।

अथ य इन्द्रो वृत्रं हतवांस्तमिन्द्रं मृधो वृत्रपक्षपातिनो वैरिणोऽभितः समागत्य प्रकर्षेण भयमुत्पाद्याकम्पयन्त । विनाशिता मृधो वैरिणो येन देवेनासौ विमृत् । स देवो यस्यैकादशकपालस्य पुरोडाशस्य सोऽयं वैमृधः । तं पुरोडाशं पूर्णमासयागेऽनुनिर्वाप्यं प्रधानकर्मणः पश्चान्निर्वापयोग्यमपश्यत् ॥

अथ विधत्ते—

यद्वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति मृध एव तेन यजमानोऽप हते, इति।

अथ सांनाय्यनामकमैन्द्रं दधि विधातुं प्रस्तौति—

इन्द्रो वृत्रꣳ हत्वा देवताभिश्चेन्द्रियेण च व्यार्ध्यत स एतमाग्नेयमष्टाकपालममावास्यायामपश्यदैन्द्रं दधि तं निरवपत्तेन वै स देवताश्चेन्द्रियं चावारुन्ध, इति।

इन्द्रो वृत्रवधेन भीतो दूरे पलायमानः स्वकीयाभिर्देवताभिश्च स्वकीयेन सामर्थ्येन च व्यृद्धो वियुक्तोऽभूत् ॥

---

१ ख. विधातुं । २ ख. ति । इ° ।

(अमावास्यायां सानाय्ययागविधिः)

अथ विधत्ते—

यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवत्यैन्द्रं दधि देवताश्चैव तेनेन्द्रियं च यजमानोऽव रुन्धे, इति।

अत्राऽऽग्नेयो न विधीयते। षष्ठे प्रपाठके यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवतीति कालद्वये विधानात्। अत ऐन्द्राग्नविध्युन्नयनायायमर्थवादः—यदा केवलेनाप्याग्नेयेन देवतानामिन्द्रियस्य चावरोधो भवति तदानीमैन्द्राग्नेन तदवरोध इति किमु वक्तव्यमिति। अनयोः स्तुत्या तद्विधिरुन्नीयते। शाखान्तरे समानप्रकरणे स्पष्टं तद्विधानात्। ऐन्द्रदधिविधिस्त्वसंदिग्ध एव॥

तमेतं विधिं स्तोतुं सांनाय्यनिर्वचनं दर्शयति—

इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यं पृथिवीमनु व्यार्छत्तदोषधयो वीरुधोऽभवन्त्स प्रजापतिमुपाधावद्वृत्रं मे जघ्नुष इन्द्रियं वीर्यं पृथिवीमनु व्यारत्तदोषधयो वीरुधोऽभूवन्निति स प्रजापतिः पशूनब्रवीदेतदस्मै सं नयतेति तत्पशव ओषधीभ्योऽध्यात्मन्त्समनयन्तत्प्रत्यदुहन्यत्समनयन्तत्सांनाय्यस्य सांनाय्यत्वं यत्प्रत्यदुहन्तत्प्रतिधुषः प्रतिधुक्त्वम्, इति।

जघ्नुषो हतवतः। व्यार्छद्विविधत्वेन प्राप्नोत्। ओषधिवीरुधोर्भेदः पूर्वाचार्यैर्दर्शितः—

"ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः" इति।

तदेतदिन्द्रियसामर्थ्यस्यौषध्यादिरूपत्वं प्रजापतेरग्रे कथितवान्। स च प्रजापतिरेतदिन्द्रियसामर्थ्यमिन्द्रार्थं सम्यक्प्रापयतेति पशूनब्रवीत्। तत्सामर्थ्यं पशव ओषधीभ्यः सकाशादानीय स्वात्मन्यधि स्वशरीरे सम्यक्स्थापितवन्तः। पुनः स्वनिष्ठं तद्वीर्यं क्षीरादिरूपमिन्द्रं प्रति दुग्धवन्तः। यस्मात्पशवः समनयंस्तस्मात्सांनाय्यस्य गोरसस्य सम्यगानयनेन संपन्नमितिव्युत्पत्त्या सांना-

१ ख. °न्द्राग्नमेकादशकपालवि°।

य्यनाम भवति। यस्मादिन्द्रं प्रति दुग्धवन्तस्तस्मात्प्रतिधुषः प्रतिदिनं दुह्यमानस्य क्षीरस्य प्रतिधुगिति नाम संपन्नम् ॥

अथ शृतनामनिर्वचनं दर्शयति—

समनैषुः प्रत्यधुक्षन्न तु मयि श्रयत
इत्यब्रवीदेतदस्मै शृतं कुरुतेत्यब्रवीत्त-
दस्मै शृतमकुर्वन्निन्द्रियं वावास्मिन्वीर्यं
तदश्रयन्तच्छृतस्य शृतत्वम् , इति।

भोः प्रजापते त्वदाज्ञया पशवः समनैषुः प्रत्यधुक्षंश्च क्षीररूपं तद्वीर्यं मयि न श्रयते पाकाभावान्मदुदरे तन्न जीर्यतीत्यर्थमुक्तवान्[1]। ततः प्रजापतिः पशून्प्रति शृतं पक्वं कुरुतेत्यब्रवीत्। तथा कृते सति तदिन्द्रियसामर्थ्यं[2] पक्वं पयोऽस्मिन्निन्द्रोदरे सम्यगाश्रितमभूत्। यँ(त)स्माच्छ्रा[3] पाक इत्यस्माच्छ्रिञो वा शृतमिति नाम निष्पन्नम् ॥

अथ दधिनामनिर्वचनं दर्शयति—

समनैषुः प्रत्यधुक्षञ्छृतमकन्न तु मा धिनोती-
त्यब्रवीदेतदस्मै दधि कुरुतेत्यब्रवीत्तदस्मै दध्य-
कुर्वन्तदेनमधिनोत्तद्दध्नो दधित्वम् , इति।

संनयनप्रतिदोहनशृतत्वानि संपन्नान्येव, किं तु तच्छृतं मां तु न धिनोति न प्रीणयतीत्युक्ते प्रजापतिरातञ्चनकर्तृन्प्रति दधि कुरुतेत्यब्रवीत्। तच्च दधिकृतं सदेनमिन्द्रमधिनोदप्रीणयत्। तस्माद्दधिनाम संपन्नम्। अत्रेन्द्रं दधीति विधिर्विस्पष्ट एव। शृतनामनिर्वचनार्थवादेनेन्द्रं पय इति विधिमुन्नयेत्। अन्यथा वक्ष्यमाणशृतावदानविचारानुदयप्रसङ्गात् ॥

तमेव विचारमभिप्रेत्य पूर्वपक्षमुपन्यस्यति—

ब्रह्मवादिनो वदन्ति दध्नः पूर्वस्यावदे-
यं दधि हि पूर्वं क्रियत इति , इति।

यस्मात्पूर्वेदिने रात्रौ दधि क्रियते तस्माज्जुह्वामवदानेऽवदीयमाने[5] दध्नः स्वरूपमेव पूर्वमवदेयम् ॥

---

१ ख °ति पाककर्तृन्प्र°। २ ख. °मर्थ्यरूप प°। ३ ख यस्मात्पक्व श्रित च तस्मा°। ४ ख. मा न। ५ ख. °दानकाले द°।

( अमावास्याया सानाय्ययागविधिः )

तमेवं पूर्वपक्षं दर्शयित्वा सिद्धान्तं विधत्ते—

अनादृत्य तच्छृतस्यैव पूर्वस्याव द्येदि-
न्द्रियमेवास्मिन्वीर्यꣳ श्रित्वा दध्नोप-
रिष्टाद्धिनोति यथापूर्वमुपैति , इति।

तत्पूर्वं दध्यवदानमनादृत्य क्षीरस्यैव स्वरूपं पूर्वमवदेयम् । तथा सत्यस्मिन्यजमान इन्द्रियरूपमेव क्षीरमवस्थाप्योपरिष्टाद्दध्ना प्रीणयति । क्षीरं पूर्वभावि दधि पश्चाद्भावीत्येवमुत्पत्तिक्रममपि प्राप्तवान्भवति ॥

अथाऽऽतञ्चनं विधत्ते—

यत्पूतीकैर्वा पर्णवल्कैर्वाऽऽतञ्च्यात्सौम्यं
तद्यत्क्वलै राक्षसं तद्यत्तण्डुलैर्वैश्वदेवं
तद्यदातञ्चनेन मानुषं तद्यद्दध्ना तत्सेन्द्रं
दध्नाऽऽ तनक्ति सेन्द्रत्वाय , इति।

सोमवल्लीसमानाया लतायाः खण्डाः पूतीकाः । पलाशवृक्षस्यांशाः पर्णवल्काः। प्रौढबदरफलानि क्वलाः। ईषदम्लतक्रमातञ्चनम् । पूतीकादिभिरातञ्चनं सोमादीनां प्रियम्। तथा सत्येन्द्रप्रीत्यै दध्नाऽऽतञ्च्यात् ॥

दध्नाऽऽतञ्चनस्योपर्यग्निहोत्रार्थयवागूशेषे(ष)णातञ्चनं विधत्ते—

अग्निहोत्रोच्छेषणमभ्यातनक्ति
यज्ञस्य संतत्यै , इति।

दर्शयागस्याग्निहोत्रेण सहाविच्छेदः संततिः ॥

अथ पिण्डपितृयज्ञं विधत्ते—

इन्द्रो वृत्रꣳ हत्वा परां परावतमगच्छदपारा-
धमिति मन्यमानस्तं देवताः प्रैषमैच्छन्त्सोऽ-
ब्रवीत्प्रजापतिर्यः प्रथमोऽनुविन्दति तस्य
प्रथमं भागधेयमिति तं पितरोऽन्वविन्दन्त-
स्मात्पितृभ्यः पूर्वेद्युः क्रियते , इति।

वृत्रवधेनासुराणामपराधं कृतवानस्मीति मन्यमान इन्द्रो भीतोऽत्यन्तं दूर-

१ ख. °शाकाष्टस्या° । २ ख. सोमप्रि° ।

मगच्छत् । तमिन्द्रं प्रति देवता आह्वानमैच्छन् । देवतानां मध्ये योऽन्विष्य प्रथममिन्द्रं लभते तस्य प्रथमं भागो दीयत इति प्रजापतिनोक्ताः पितरः प्रथममिन्द्रं यस्मादलभन्त तस्मात्पितृभ्यः पूर्वेद्युः पिण्डपितृयज्ञं कुर्यात् । दर्शयागदेवतानाममावास्यायामारम्भः प्रतिपदि तद्यागः । पितॄणां त्वमावास्यायामेव पिण्डदानम् ॥

ननु ब्राह्मणग्रन्थे प्रथमकाण्डस्य तृतीयप्रपाठकेऽन्त्यानुवाके महता प्रपञ्चेन पिण्डपितृयज्ञो विहितः । बाढम् । एवं तर्हि सांनाय्यप्रशंसार्थमत्र तदनुवादोऽस्तु । तामेव स्तुतिं द्योतयितुममावास्यानिर्वचनं दर्शयति—

सोऽमावास्यां प्रत्याऽगच्छत्तं देवा अभि समगच्छन्तामा वै नोऽद्य वसु वसतीतीन्द्रो हि देवानां वसु तद-मावास्याया अमावास्यत्वम् , इति ।

पितृभिरन्विष्य लब्धः स इन्द्रोऽमावास्यायां पलायनदेशात्प्रतिनिवृत्य समागतः । ते देवास्तमिन्द्रमभिमुखीकर्तुं संप्राप्ताः परस्परमिदमब्रुवन्—अद्य नोऽस्माकं वसु श्रेष्ठं धनममा वसति सह तिष्ठति, सर्वेषां साधारणत्वेन वर्तत इत्यर्थः । किं तद्वस्त्विति तदुच्यते—इन्द्रः खलु सर्वेषां देवानां वसु श्रेष्ठं धनं, तस्मिन्वर्तमाने सति स्वामिलाभात् । यस्माद्देवा एवमुक्तवन्तस्तस्मादमा वसत्यत्रेति व्युत्पत्त्याऽमावास्यानाम संपन्नम् ॥

ऐन्द्रं दधीति विधिवाक्ये सांनाय्यस्य यदैन्द्रत्वमुक्तं तदेव पूर्वोत्तरपक्षाभ्यां द्रढयति—

ब्रह्मवादिनो वदन्ति किंदेवत्य१ सांनाय्यमिति वैश्वदेवमिति ब्रूयाद्विश्वे हि तद्देवा भागधेयमभि समगच्छन्तेत्यथो खल्वैन्द्रमित्येव ब्रूयादिन्द्रं वाव ते तद्भिषज्यन्तोऽभि समगच्छन्तेति॥, इति ॥

पितृभिरानीयमानमिन्द्रमभिमुखीकर्तुं सर्वेऽपि देवा यदा समागच्छंस्तदा तत्सांनाय्यलक्षणं भागमभिलक्ष्यैव समागच्छन्निति सांनाय्यं वैश्वदेवमिति केषांचित्पक्षः । अथोशब्दः पक्षान्तरार्थः । भीत्या दूरदेशं गतमिन्द्रं भिषज्यन्त

१ क घ ङ च °तिपदि निर्वर्ल स° ।

एव भयनिवारणेन समाधित्सन्त एव ते देवास्त्विन्द्रं समागताः, न तु सांनाय्यलिप्सया । तस्मात्सांनाय्यमैन्द्रमित्येव बुद्धिमान्ब्रूयात् ॥

अत्र मीमांसा ।

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

" संस्थाप्य पौर्णमासीं तामनु वैमृध ईरितः ।
द्वयोरङ्गमुतैकस्य द्वयोः स्यात्प्रक्रियावशात् ॥
उत्पत्तिवाक्यतः पूर्णमाससंयोगभासनात् ।
तस्यैवाङ्गं न दर्शस्य प्रक्रिया वाक्यबाधिता ॥ "

दर्शपूर्णमासप्रकरणे श्रूयते—" संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति " इति । तत्रेयं वैमृधेष्टिः प्रकरणबलात्प्रयाजादिवदुभयोरपि दर्शपूर्णमासयोरङ्गमिति चेन्न । वाक्यस्य प्रबलत्वात् । न च संस्थाप्येति पौर्णमास्याः समाप्त्यभिधानात्तदङ्गत्वमयुक्तमिति वाच्यम् । दर्शसाधारणाङ्गसमाप्त्यभिप्रायेणोपपत्तेः । तस्मादुत्पत्तिवाक्यादेककर्तृकत्ववाचिक्त्वाप्रत्ययाच्च पूर्णमासस्यैवाङ्गम् ॥

द्वितीयाध्याये तृतीयपादे चिन्तितम्—

" दर्शपूर्णिमयोः प्रोक्त आग्नेयः केवलोऽप्यसौ ।
दर्शे यदिति वाक्याभ्यां कर्मान्यद्वाऽनुवादगीः ॥
अभ्यासादन्यकर्मत्वं द्विर्दर्शेऽसौ प्रयुज्यताम् ।
एकत्वं प्रत्यभिज्ञानादनूक्त्यैन्द्राग्नसंस्तुतिः ॥ "

" यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति " इति कालद्वये विहितम्, " यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति " इति एकस्मिन्काले पुनर्विहितम्, तत्राविशेषपुनःश्रुतिलक्षणेनाभ्यासेन प्रयाजानामिव भेदः । तथा सत्याग्नेययागस्य दर्शकाले द्विः प्रयोग इति चेन्न । प्रत्यभिज्ञानादाग्नेयस्यैकत्वे सत्येककालवाक्यस्यानुवादत्वात् । न चानुवादो व्यर्थः । विधेयैन्द्राग्नस्तुत्यर्थत्वात् । यद्यप्याग्नेयोऽष्टाकपालोऽमावास्यायां भवति, तथाऽपि न केवलेनाग्निना साधुर्भवति । इन्द्रसहितोऽग्निः समीचीनतरः । तस्मादैन्द्राग्नः कर्तव्य इति विधेयस्तुतिः । प्रयाजवैषम्यं तूक्तमेवानुसंधेयम् । तस्मादनुवादः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

१ ख. °मासस्य स° । २ ख °येण तदुप° । ३ ख. °पूर्णमासप्रो° ।

(अथ द्वितीयाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः।)

ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति तेन पूर्णमासः सेन्द्र ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रा य एवं विद्वान्दर्शपूर्णमासौ यजते सेन्द्रावेवैनौ यजते श्वःश्वोऽस्मा ईजानाय वसीयो भवति देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एताम् (१) इष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुं तां पौर्णमासꣳ सꣳस्थाप्यानु निरवपन्ततो देवा अभवन्पराऽसुरा यो भ्रातृव्यवान्त्स्यात्स पौर्णमासꣳ सꣳस्थाप्यैतामिष्टिमनु निर्वपेत्पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याऽऽग्नावैष्णवेन देवताश्च यज्ञं च भ्रातृव्यस्य वृङ्क्ते मिथुनात्पशून्त्सारस्वताभ्यां यावदेवास्यास्ति तत् (२) सर्वं वृङ्क्ते पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याꣳ हत्वा भ्रातृव्यं नाऽऽप्याययति साकंप्रस्थायीयेन यजेत पशुकामो यस्मै वा अल्पेनाऽऽहरन्ति नाऽऽत्मना तृप्यति

नान्यस्मै ददाति यस्मै महता तृप्यत्यात्मना
ददात्यन्यस्मै महता पूर्णꣳ होतव्यं तृप्त एवैन-
मिन्द्रः प्रजया पशुभिस्तर्पयति दारुपात्रेण
जुहोति न हि मृन्मयमाहुतिमानश औदुम्ब-
रम् ( ३ ) भवत्यूर्गवा उदुम्बर ऊर्क्पशव
ऊर्जैवास्मा ऊर्जं पशूनव रुन्धे नागतश्रीर्महेन्द्रं
यजेत त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राज-
न्यस्तेषां महेन्द्रो देवता यो वै स्वां देवताम-
तियजते प्र स्वायै देवतायै च्यवते न परां
प्राप्नोति पापीयान्भवति संवत्सरमिन्द्रं यजेत
संवत्सरꣳ हि व्रतं नाति स्वा ( ४ ) एवैनं
देवतेज्यमाना भूत्या इन्धे वसीयान्भवति संव-
त्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टा-
कपालं निर्वपेत्संवत्सरमेवैनं व्रत्रं जघ्निवाꣳ-
समग्निर्व्रतपतिर्व्रतमा लम्भयति ततोऽधि कामं
यजेत ( ५ ) ॥

( एता तदौदुम्बरꣳ स्वा त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

ब्रह्मवादिन इति ब्रह्म--वादिनः । वदन्ति । सः । तु । वै । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यजेत । यः । एनौ । सेन्द्राविति स—इन्द्रौ । यजेत । इति । वैमृधः । पूर्णमास इति पूर्ण—मासे । अनुनिर्वाप्य इत्यनु—निर्वाप्यः । भवति । तेन । पूर्णमास इति पूर्ण—मासः । सेन्द्र इति स—इन्द्रः । ऐन्द्रम् । दधि । अमावास्यायामित्यमा—वास्यायाम् । तेन । अमावास्येत्यमा—वास्या । सेन्द्रेति स—इन्द्रा । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यजते । सेन्द्राविति स—इन्द्रौ । एव । एनौ । यजते । श्वःश्व इति श्वः—श्वः । अस्मै । ईजानाय । वसीयः । भवति । देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । एताम् ( १ ) । इष्टिम् । अपश्यन् । आग्नावैष्णवमित्याग्ना—वैष्णवम् । एकादशकपालमित्येकादश—कपालम् । सरस्वत्यै । चरुम् । सरस्वते । चरुम् । ताम् । पौर्णमासमिति पौर्ण—मासम् । सꣳस्थाप्येति सं—स्थाप्य । अनु । निरिति । अवपन् । ततः । देवाः । अभवन् । परेति । असुराः । यः ।

भ्रातृव्यवानिति भ्रातृव्य—वान् । स्यात् । सः ।
पौर्णमासमिति पौर्ण—मासम् । सःस्थाप्येति सं—
स्थाप्य । एताम् । इष्टिम् । अनु । निरिति । वपेत् ।
पौर्णमासेनेति पौर्ण—मासेन । एव । वज्रम् । भ्रातृ-
व्याय । प्रहृत्येति प्र—हृत्य । आग्नावैष्णवेनेत्याग्ना—
वैष्णवेन । देवताः । च । यज्ञम् । च । भ्रातृव्यस्य ।
वृङ्क्ते । मिथुनान् । पशून् । सारस्वताभ्याम् ।
यावत् । एव । अस्य । अस्ति । तत् (२) । सर्वम् ।
वृङ्क्ते । पौर्णमासीमिति पौर्ण—मासीम् । एव । यजेत ।
भ्रातृव्यवानिति भ्रातृव्य—वान् । न । अमावास्या-
मित्यमा—वास्याम् । हत्वा । भ्रातृव्यम् । न । एति ।
प्यायति । साकंप्रस्थायीयेनेति साकं—प्रस्थायीयेन ।
यजेत । पशुकाम इति पशु—कामः । यस्मै । वै ।
अल्पेन । आहरन्तीत्या—हरन्ति । न । आत्मना ।
तृप्यति । न । अन्यस्मै । ददाति । यस्मै । महता ।
तृप्यति । आत्मना । ददाति । अन्यस्मै । महता ।
पूर्णम् । होतव्यम् । तृप्तः । एव । एनम् ।
इन्द्रः । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः ।
तर्पयति । दारुपात्रेणेति दारु—पात्रेण । जुहोति ।

न । हि । मृन्मयमिति मृत्—मयम् । आहुतिमित्या—हुतिम् । आनशे । औदुंम्बरम् (३) । भवति । ऊर्क् । वै । उदुम्बरः । ऊर्क् । पशवः । ऊर्जा । एव । अस्मै । ऊर्जम् । पशून् । अवेति । रुन्धे । न । अगतश्रीरित्यगत—श्रीः । महेन्द्रमिति महा—इन्द्रम् । यजेत । त्रयः । वै । गतश्रिय इति गत—श्रियः । शुश्रुवान् । ग्रामणीरिति ग्राम—नीः । राजन्यः । तेषाम् । महेन्द्र इति महा—इन्द्रः । देवता । यः । वै । स्वाम् । देवताम् । अतियजत इत्यति—यजते । प्रेति । स्वायै । देवतायै । च्यवते । न । पराम् । प्रेति । आप्नोति । पापीयान् । भवति । संवत्सरमिति सं—वत्सरम् । इन्द्रम् । यजेत । संवत्सरमिति सं—वत्सरम् । हि । व्रतम् । न । अतीति । स्वा (४) । एव । एनम् । देवता । इज्यमाना । भूत्यै । इन्धे । वसीयान् । भवति । संवत्सरस्येति सं—वत्सरस्य । परस्तात् । अग्नये । व्रतपतय इति व्रत—पतये । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपेत् । संवत्सरमिति सं—वत्सरम् । एव । एनम् । वृत्रम् । जघ्निवाꣳसम् । अग्निः ।

व्रतप॑तिरि॒ति॑ व्र॒त—प॒तिः॒। व्र॒तम्। ए॒ति॑। ल॒म्भ॒यति॑। तत॑ः। अधी॒ति॑। काम॑म्। य॒जेत (५)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

(अथ द्वितीयकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः।)

---

उक्ते वैमृधसांनाय्ये द्वितृतीयानुवाकके ॥
अथ चतुर्थ आग्नावैष्णवादयो वक्तव्याः।
तत्राऽऽदौ तावत्पूर्वोक्तानुवाकयोर्दर्शपूर्णमासयोः प्रशंसामाह—

ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति तेन पूर्णमासः सेन्द्र ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रा य एवं विद्वान्दर्शपूर्णमासौ यजते सेन्द्रावेवैनौ यजते श्वःश्वोऽस्मा ईजानाय वसीयो भवति, इति।

एतौ दर्शपूर्णमासयागाविन्द्रसहितौ यो यजते स एव दर्शपूर्णमासयाजी न त्वन्यः। तयोश्च यागयोः सेन्द्रत्वं वैमृधसांनाय्याभ्यां संपद्यते। एवं विदुषः सेन्द्रयागेनो(णो)त्तरोत्तरदिने धनाधिक्यं भवति ॥

अथ पौर्णमास्यां काम्यमनुनिर्वाप्यमिष्ट्यन्तरं विधातुं प्रस्तौति—

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतामिष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुं तां पौर्णमासꣳ सꣳस्थाप्यानु निरवपन्ततो देवा अभवन्पराऽसुराः, इति।

देवानां यज्ञं दृष्ट्वा तथैवानुचरतामसुराणां देवसमानं विजयं दृष्ट्वा देवास्तानसुरानत्यश्रयित्वाऽनुष्ठितेनानुनिर्वाप्येण स्वयं विजयं प्राप्ता असुराश्च पराभूताः॥

---

१ ख. 'नुतिष्ठता'।

अथ विधत्ते—

यो भ्रातृव्यवान्त्स्यात्स पौर्णमासꣳ सꣳस्था-प्यैतामिष्टिमनु निर्वपेत्पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याऽऽग्नावैष्णवेन देवताश्च यज्ञं च भ्रातृव्यस्य वृङ्क्ते मिथुनान्पशून्त्सारस्वताभ्यां यावदेवास्यास्ति तत्सर्वं वृङ्क्ते, इति।

पौर्णमासेन प्रधानयागेन वज्रप्रहारः। अग्निः सर्वा देवता विष्णुर्यज्ञ इत्युक्तत्वात्तदीयहविषा वैरिणो देवता यज्ञं क्रतुं च विनाशयति। सारस्वतयोः स्त्रीपुरुषदेवत्वात्तदीयहविर्भ्यां मिथुनानां पशूनां वर्जनम्। एतावता भ्रातृव्यस्य यावद्वित्तमस्ति तत्सर्वं नाशितं भवति॥

यदुक्तं सूत्रकारेण—"पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यां पितृयज्ञमेवामावास्यायां क्रियते" [इति], तदेतद्विधत्ते—

पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याꣳ हत्वा भ्रातृव्यं नाऽऽप्याययति, इति।

द्वितीयानुवाके वृत्रप्रसङ्ग इदमुक्तम्—"घ्नन्ति वा एनं पूर्णमास आऽमावास्यायां प्याययन्ति" इति। तस्मादत्रापि पूर्णमासानुष्ठानेन भ्रातृव्यं हत्वा दर्शयागपरित्यागेन भ्रातृव्यस्याऽऽप्यायनं परित्यक्तवान्भवति॥

अथ दर्शपूर्णमासस्य गुणविकृतिरूपं कंचिद्यागं विधत्ते—

साकंप्रस्थायीयेन यजेत पशुकामो यस्मै वा अल्पेनाऽऽहरन्ति नाऽऽत्मना तृप्यति नान्यस्मै ददाति यस्मै महता तृप्यत्यात्मना ददात्यन्यस्मै महता पूर्णꣳ होतव्यं तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति, इति।

दधिक्षीरपूर्णाभिश्चतसृभिः कुम्भीभिर्ब्राह्मणात्तनाभिः साकमध्वर्योः प्रस्थानं होमस्थानं प्रति प्रस्थानं यस्मिन्यागे सोऽयं साकंप्रस्थायीयो यागस्तेन पशुकामो यजेत। तत्र महता क्षीरद्रव्येण पूर्णं हविर्होतव्यम्। लोके च यस्मै

१ ख. कुरुते।

राज्ञे करप्रदायिन्यः प्रजा अल्पेन प्रमाणेन धनमाहरन्ति स राजा न स्वयं तृप्यति नाप्यन्यस्मै दातुं शक्नोति। यस्मै तु महता प्रमाणेन धनमाहरन्ति स राजा स्वयं तृप्यति चान्यस्मै दातुमपि च प्रभवति। तस्मादत्रापि महता प्रमाणेन पूर्णस्य द्रव्यस्य होमे सति स्वयं तृप्त इन्द्रः प्रजया पशुभिश्चैनं यजमानं तर्पयति। तद्यागप्रकारः सूत्रकारेण स्पष्टीकृतः—"साकंप्रस्थायीयेन यजेत पशुकाम इत्यमावास्या विक्रियते द्वौ सायंदोहावेवं प्रातः सायं सायंदोहाभ्यां प्रचरन्ति प्रातः प्रातर्दोहाभ्यां सर्वत्र प्रातः" इति॥

क्षीरश्रपणपात्राणां मृन्मयत्वाद्धोमेऽपि तत्प्रसक्तिं वारयितुं विधत्ते—

दारुपात्रेण जुहोति न हि मृन्मयमाहुतिमानशे, इति।

यस्मान्मृन्मयपात्रमाहुतिं व्याप्तुं नार्हति तस्माद्दारुपात्रेण होमः। न ह्यत्र जुह्वामवदानमस्ति, पूर्णस्य होतव्यत्वात्। अतो हविष्परणक्षमेण जुहुयात्॥

दारुविशेषं विधत्ते—

औदुम्बरं भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनव रुन्धे, इति।

प्रथमप्रपाठक औदुम्बरो यूपो भवतीत्यत्रैतद्व्याख्यातम्। अत्र सूत्रम्—"पात्रसंसादनकाले चत्वार्यौदुम्बरपात्राणि प्रयुनक्ति तेषां जुहूवत्कल्पः" इति। "यावत्यः कुम्भ्यस्तावन्तो ब्राह्मणा दक्षिणत उपवीतिन उपोत्थाय कुम्भीभ्यः पात्राणि पूरयित्वा तैरेवाध्वर्यु जुह्वन्त(त)मनु जुह्वति स्विष्टकृदिडाक्षाश्च न विद्यन्ते" इति च॥

अधिकारिभेदेन सांनाय्यस्य देवताव्यवस्थां विधत्ते—

नागतश्रीर्महेन्द्रं यजेत त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्यस्तेषां महेन्द्रो देवता यो वै स्वां देवतामतियजते प्र स्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान्भवति, इति।

शुश्रुवान्वेदत्रयाभिज्ञः। वेदत्रयस्य च श्रीरूपत्वात्तदभिज्ञः प्राप्तश्रीर्भवति। श्रीरूपत्वं चैवमाम्नायते—"अहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रयिविदा विदुः। ऋचः सामानि यजूꣳषि। सा हि श्रीरमृता सताम्" इति। ग्रामाध्यक्षो ग्रामणीः। राज्ञः पुत्रो राजन्यः। तयोः प्राप्तश्रीकत्वं प्रसिद्धम्। तेषामेव त्रयाणां महेन्द्रो देवता। एवं सति यः पुरुषः स्वकीयां देवतामतिक्रम्य यजते।

एतेषु कश्चिदिन्द्रं यजति । अन्यो वा महेन्द्रं यजति । तादृशः स्वकीयदेवतायाः प्रच्युतः सन्परकीयां देवतां न प्राप्नोति । तद्देवताशापेन पापीयान्दरिद्रश्च भवति॥

अगतश्रियः सर्वदेवेन्द्रप्राप्तौ विशेषं विधत्ते—

संवत्सरमिन्द्रं यजेत संवत्सर॑ हि व्रतं नाति स्वैवैनं देवतेज्यमाना भूत्या इन्धे वसीयान्भवति , इति ।

संवत्सरमतिक्रम्य यस्माद्व्रतं नानुष्ठेयं भवति तस्मादगतश्रीः संवत्सरमिन्द्रं यजेत । एवं सति स्वकीयैव देवताऽन्यस्मिन्संवत्सर इज्यमाना सती भूत्यर्थं यजमानं प्रकाशयति । ततोऽयं धनवत्तरो भवति ॥

अगतश्रियः कांचिदिष्टिं विधत्ते—

संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाश-मष्टाकपालं निर्वपेत्संवत्सरमेवैनं वृत्रं जघ्नि-वा॑समग्निर्व्रतपतिर्व्रतमा लम्भयति , इति ।

व्रतपालकोऽग्निर्महेन्द्रयागाधिकारनिवारकपापरूपं वृत्रं संवत्सरेन्द्रानुष्ठानेन हतवन्तं यजमानं महेन्द्रयागानुष्ठानरूपं व्रतं प्रापयति ॥

व्रतपतेष्टेरूर्ध्वमगतश्रिय इन्द्रमहेन्द्रयोरैच्छिकत्वं विधत्ते—

ततोऽधि कामं यजेत॥, इति ॥

अत्र मीमांसा ।

तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्—

" आक्रामन्सह कुम्भीभिरस्मिञ्छेषक्रिया न वा ।
जुह्वाऽवदानात्प्रकृताविव शेषक्रियोचिता ॥
कुम्भीषु शेषासंसिद्धेः साकंप्रस्थाय(य्य)कर्मणि ।
न स्विष्टकृदिदं(डं) कार्यमग्नीधे स्रुक्प्रदानतः ॥ "

"साकंप्रस्थायीयेन यजेत पशुकामः" इति विहिते कर्मणि श्रूयते—" सह-कुम्भीभिरभिक्रामन् " इति । तत्र चतसृभिर्दधिपयःकुम्भीभिः सहाऽऽहवनीयदेशेऽभिक्रमणमात्रं श्रुतम् । न तु तत्र कुम्भीभिर्होमः श्रुतः । तथा सत्यस्य कर्मणः सांनाय्यविकृतित्वाज्जुह्वा कुम्भीभ्योऽवदाय जुहुयात् । हुतशेषेण च

१ क. घ. ङ च. 'रूर्ध्वं ग' । २ ख 'रस्ति शेष' । ३ ख. 'र्यमामीध्रत्तु' । ४ क. घ. ङ च. 'मखिलस्य प्रदा' । ५ क. घ. ङ च 'मन्तीति । ख. 'मञ्जुहोतीति । ६ क. घ. ङ. च. 'ज्जुह्वा कु' ।

स्विष्टकृदादिकं सांनाय्यशेषेणैव कर्तव्यमिति प्राप्ते ब्रूमः—नात्र कुम्भीषु हुतशेषः सांनाय्यं इव जुह्वाऽवदानाभावात्। अग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नित्युक्तत्वाज्जुहूपभृतोः प्रत्तत्वादभिक्रमणस्य होमार्थत्वाच्च कुम्भीभिरेव दधिपयसोर्होमे सति कुम्भीमात्रमवशिष्यते, न हुतहविःशेषः। तत्र कुतः शेषकर्म कार्यम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

( अथ द्वितीयाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः। )

नासोमयाजी सं नयेदनागतं वा एतस्य पयो योऽसोमयाजी यदसोमयाजी सं नयेत्परिमोष एव सोऽनृतं करोत्यथो परैव सिच्यते सोमयाज्येव सं नयेत्पयो वै सोमः पयः सांनाय्यं पयसैव पय आत्मन्धत्ते वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमाः ( १ ) अभ्युदेति त्रेधा तण्डुलान्वि भजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमग्निरेवास्मै प्रजां प्र जनयति वृद्धामिन्द्रः प्र यच्छति

१ ख. ॰त्यवज्जुह्वा तदव॰। २ ख. ॰पक्वा॰।

यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतिं तिष्ठति न द्वे ( २ ) यजेत यत्पूर्वया संप्रति यजेतोत्तरया छम्बट्कुर्याद्यदुत्तरया संप्रति यजेत पूर्वया छम्बट्कुर्यान्नेष्टिर्भवति न यज्ञस्तदनु ह्रीतमुख्यपगल्भो जायत एकामेव यजेत प्रगल्भोऽस्य जायतेऽनादृत्य तद्द्वे एव यजेत यज्ञमुखमेव पूर्वयाऽऽलभते यजेत उत्तरया देवता एव पूर्वयाऽवरुन्ध इन्द्रियमुत्तरया देवलोकमेव ( ३ ) पूर्वयाऽभिजयति मनुष्यलोकमुत्तरया भूयसो यज्ञक्रतूनुपैत्येषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोकेऽर्धुकं भवति दाक्षायणयज्ञेन सुवर्गकामो यजेत पूर्णमासे सं नयेन्मैत्रावरुण्याऽऽमिक्षयाऽमावास्यायां यजेत पूर्णमासे वै देवानाꣳ सुतस्तेषामेतमर्धमासं प्रसुतस्तेषां मैत्रावरुणी वशाऽमावास्यायामनूबन्ध्या यत् ( ४ ) पूर्वेद्युर्यजते वेदिमेव तत्करोति यद्वत्सानपाकरोति सदोहविर्धाने एव सं मिनोति यद्यजते देवैरेव सुत्याꣳ सं पादयति स एतमर्धमासꣳ सधमादं

देवैः सोमं पिबति यन्मैत्रावरुण्याऽऽमिक्षयाऽमावास्यायां यजते यैवासौ देवानां वशाऽनूबन्ध्यां सो एवैषैतस्य साक्षाद्वा एष देवानभ्यारोहति य एषां यज्ञम् ( ५ ) अभ्यारोहति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति यद्यवविध्यति पापीयान्भवति यदि नावविध्यति सदृङ्ख्याद्व्रत्काम एतेन यज्ञेन यजेत क्षुरपविर्ह्येष यज्ञस्ताजक्पुण्यो वा भवति प्र वा मीयते तस्यैतद्व्रतं नानृतं वदेन्न मा॑ंसमश्नीयान्न स्त्रियमुपेयान्नास्य पल्पूलनेन वासः पल्पूलयेयुरेतद्धि देवाः सर्वं न कुर्वन्ति ( ६ )॥

( चन्द्रमा द्वे देवलोकमेव यद्यज्ञ पल्पूलयेयुः षट् च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

( अथ द्वितीयाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाक । )

न । असोमयाजीत्यसोम—याजी । समिति । नयेत् । अनागतमित्यना—गतम् । वै । एतस्य । पयः । यः । असोमयाजीत्यसोम—याजी । यत् । असोमयाजीत्यसोम—याजी । संनयेदिति सं—नयेत् ।

परिमोष इति परि—मोषः । एव । सः । अनृतम् । करोति । अथो इति । परेति । एव । सिच्यते । सोमयाजीति सोम—याजी । एव । समिति । नयेत् । पयः । वै । सोमः । पयः । सांनाय्यमिति सां—नाय्यम् । पयसा । एव । पयः । आत्मन् । धत्ते । वीति । वै । एतम् । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । अर्धयति । वर्धयति । अस्य । भ्रातृव्यम् । यस्य । हविः । निरुप्तमिति निः—उप्तम् । पुरस्तात् । चन्द्रमाः (१) । अभीति । उदेतीत्युत्—एति । त्रेधा । तण्डुलान् । वीति । भजेत् । ये । मध्यमाः । स्युः । तान् । अग्नये । दात्रे । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । कुर्यात् । ये । स्थविष्ठाः । तान् । इन्द्राय । प्रदात्र इति प्र—दात्रे । दधन् । चरुम् । ये । अणिष्ठाः । तान् । विष्णवे । शिपिविष्टायेति शिपि—विष्टाय । शृते । चरुम् । अग्निः । एव । अस्मै । प्रजामिति प्र—जाम् । प्रजनयतीति प्र—जनयति । वृद्धाम् । इन्द्रः । प्रेति । यच्छति । यज्ञः । वै । विष्णुः । पशवः । शिपिः । यज्ञे । एव । पशुषु । प्रतीति । तिष्ठति । न । द्वे इति (२) । यजेत । यत् । पूर्वया । संप्रतीति सं—प्रति ।

यजेत। उत्तरयेत्युत्—तरया। छम्बट्। कुर्यात्।
यत्। उत्तरयेत्युत्—तरया। संप्रतीति सं—प्रति।
यजेत। पूर्वया। छम्बट्। कुर्यात्। न। इष्टिः।
भवति। न। यज्ञः। तत्। अन्विति। ह्रीतमुखीति
ह्रीत—मुखी। अपगल्भ इत्यप—गल्भः। जायते।
एकाम्। एव। यजेत। प्रगल्भ इति प्र—गल्भः।
अस्य। जायते। अनादृत्येत्यना—दृत्य। तत्। द्वे
इति। एव। यजेत। यज्ञमुखमिति यज्ञ—मुखम्।
एव। पूर्वया। आलभत इत्या—लभते। यजते।
उत्तरयेत्युत्—तरया। देवताः। एव। पूर्वया। अव-
रुन्ध इत्यव—रुन्धे। इन्द्रियम्। उत्तरयेत्युत्—त-
रया। देवलोकमिति देव—लोकम्। एव (३)।
पूर्वया। अभिजयतीत्यभि—जयति। मनुष्यलोक-
मिति मनुष्य—लोकम्। उत्तरयेत्युत्—तरया। भूय-
सः। यज्ञक्रतूनिति यज्ञ—क्रतून्। उपेति। एति।
एषा। वै। सुमना इति सु—मनाः। नाम। इष्टिः।
यम्। अद्य। ईजानम्। पश्चात्। चन्द्रमाः। अ-
भीति। उदेतीत्युत्—एति। अस्मिन्। एव।
अस्मै। लोके। अर्धुकम्। भवति। दाक्षायणयज्ञे-
नेति दाक्षायण—यज्ञेन। सुवर्गकाम इति सुवर्ग—

कामः । यजेत । पूर्णमास इति पूर्ण—मासे । समितिं । नयेत् । मैत्रावरुण्येति मैत्रा—वरुण्या । आमिक्षया । अमावास्यायामित्यमा—वास्यायाम् । यजेत । पूर्णमास इति पूर्ण—मासे । वै । देवानाम् । सुतः । तेषाम् । एतम् । अर्धमासमित्यर्ध—मासम् । प्रसुत इति प्र—सुतः । तेषाम् । मैत्रावरुणीति मैत्रा—वरुणी । वशा । अमावास्यायामित्यमा—वास्यायाम् । अनूबन्ध्येत्यनु—बन्ध्या । यत् ( ४ ) । पूर्वेद्युः । यजते । वेदिम् । एव । तत् । करोति । यत् । वत्सान् । अपाकरोतीत्यप—आकरोति । सदोहविर्धाने इति सदः—हविर्धाने । एव । समितिं । मिनोति । यत् । यजते । देवैः । एव । सुत्याम् । समितिं । पादयति । सः । एतम् । अर्धमासमित्यर्ध—मासम् । सधमादमिति सध—मादम् । देवैः । सोमम् । पिबति । यत् । मैत्रावरुण्येति मैत्रा—वरुण्या । आमिक्षया । अमावास्यायामित्यमा—वास्यायाम् । यजते । या । एव । असौ । देवानाम् । वशा । अनूबन्ध्येत्यनु—बन्ध्या । सो इति । एव । एषा । एतस्य । साक्षादिति स—अक्षात् । वै । एषः । देवान् । अभ्यारोहतीत्यभि—आरोहति । यः । ए-

षाम्। यज्ञम् (५)। अभ्यारोहतीत्यभि—आरोहति। यथा। खलु। वै। श्रेयान्। अभ्यारूढ इत्यभि—आरूढः। कामयते। तथा। करोति। यदि। अवविध्यतीत्यव—विध्यति। पापीयान्। भवति। यदि। न। अवविध्यतीत्यव—विध्यति। सद्दङ्डिति स—दङ्। व्याघ्रकाम इति व्याघ्र—कामः। एतेन। यज्ञेन। यजेत। क्षुरपविरिति क्षुर—पविः। हि। एषः। यज्ञः। ताजक्। पुण्यः। वा। भवति। प्रेति। वा। मीयते। तस्य। एतत्। व्रतम्। न। अनृतम्। वदेत्। न। माꣳसम्। अश्नीयात्। न। स्त्रियम्। उपेति। इयात्। न। अस्य। पल्पूलनेन। वासः। पल्पूलयेयुः। एतत्। हि। देवाः। सर्वम्। न। कुर्वन्ति (६)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके पञ्चमप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

( अथ द्वितीयकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाक. । )

द्विधा चतुर्थे पुंभेदात्प्रोक्ता सांनाय्यदेवता॥
अथ पञ्चमेऽभ्युदयेष्ट्यादयो वक्तव्याः॥
तत्र तावत्सांनाय्याधिकारिणं विविनक्ति—

नासोमयाजी सं नयेदनागतं वा एतस्य पयो योऽसोमयाजी यदसोमयाजी सं नयेत्परिमोष

एव सोऽनृतं करोत्यथो परैव सिच्यते सोमयाज्येव सं नयेत्पयो वै सोमः पयः सांनाय्यं पयसैव पय आत्मन्धत्ते, इति।

सोमयागात्पुरा दर्शयागी सांनाय्यं नानुतिष्ठेत् । असोमयाजिनः पयोऽनागतमप्राप्तम् । सोमस्यौषधिरसत्वेन तदभावे सत्योषधिरसविशेषस्य पयसः सुतरामभावात् । एवं सति यद्यसोमयाजी संनयेत्तर्ह्यसौ परिमोष एव तस्कर एव सन्ननृतं करोत्यन्याय्यं करोति । अपि च वह्नौ सिच्यमानं तत्सांनाय्यमन्याय्यत्वात्परैव सिच्यते विनाश्यत एव । तस्मात्सोमयाज्येव संनयेत् । न चास्येतरवत्पयोऽनागतं, सोमस्यौषधिरसत्वेन पयोरूपत्वात् । सांनाय्यमपि तथाविधम् । अतः सोमयाजी सोमरूपेण पयसा सह सांनाय्यरूपं पय आत्मनि धारयति ॥

अथाभ्युदयेष्टिं विधत्ते—

वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्वि भजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमग्निरेवास्मै प्रजां प्र जनयति वृद्धामिन्द्रः प्र यच्छति यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रति तिष्ठति, इति।

चतुर्दश्याममावास्येयमिति भ्रान्त्या संदिहानो रात्रावेव हवींषि निर्वपेत् । तथा च श्रुत्यन्तरेमाम्नायते—"यदि बिभीयादभि मोदेष्यतीति महारात्रे हवींषि निर्वपेत्फलीकृतैस्तण्डुलैरुपासीतार्धे दधि हविरातञ्चनस्य निदध्यादर्धं न यद्युदियात्तेनाऽऽतञ्च्य प्रचरेद्यदि नाभ्युदियात्तेन ब्राह्मणान्भोजयेत्" इति । अयमर्थः—यदि चतुर्दश्यां प्रातरग्निहोत्रादूर्ध्वममावास्याभ्रान्त्या

१ ख °याजी सा° । २ क घ ङ °रमेवमा° । ३ क. घ. ङ च. °ते–म° । ४ क. घ. ङ. च °दर्धोन य° । ५ क. घ. ङ. च. °द्यदु न ।

वत्सानपाकृत्य सायं दुग्ध्वा दध्यर्थमातञ्चनं विधाय पश्चात्तिथौ संदिहानो मां प्रति चन्द्रोऽभ्युदेष्यतीति भीतो भवेत्तदा रात्रिमध्ये हवींषि निरुप्य फलीकरणान्तं विधाय तादृशैस्तण्डुलैर्युक्तश्चन्द्रोदयं प्रतीक्षेत । तत्पूर्वातञ्चनेन निष्पन्नस्य दध्नोऽर्धमुत्तरस्यां रात्रौ पुनरातञ्चनार्थमवस्थापयेत् । इतस्त्वर्धं न पृथगवस्थापयेत्, किं तु तण्डुलैः सह पुरतोऽवस्थाप्य चन्द्रोदयं प्रतीक्षेत । यदि चन्द्रोऽभ्युदियात्तदानीं पृथगवस्थापितेनार्धेन परेद्युर्मुख्यामावास्यायां रात्रौ सायंदोहमातच्य निष्पन्नेन दध्ना प्रतिपदि प्रातः प्रचरेत् । यदि तु न चन्द्रोऽभ्युदियात्तदा तण्डुलैर्दध्यर्धेन च दर्शकर्म निष्पाद्य पृथगवस्थापितार्धान्तरेण ब्राह्मणान्भोजयेदिति । एवं स्थिते सति यस्य यजमानस्य रात्रावेव फलीकृततण्डुलपर्यन्तं हविर्निरुप्तं संपादितं भवति । ततः प्रतीक्ष्यमाणश्चन्द्रमाः पूर्वस्या दिशि अभ्युदेति । चन्द्र एतं यजमानं प्रजया पशुभिश्च व्यर्धयत्येवास्य भ्रातृव्यं च वर्धयति । अतोऽभ्युदय निमित्तीकृत्यैतत्तण्डुलान्मध्यमस्थविष्ठाणिष्ठरूपैस्त्रेधा भिन्नांस्तान्पूर्वदेवताभ्यो विभजेत् । विभज्य च दात्रादिगुणकाग्न्यादिदेवताभ्यो हविः कुर्यात् ॥

यदुक्तं सूत्रकारेण—" द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत यः कामयेतर्द्नुयामित्युक्त्वाऽऽहैकामेव यजेत " इति । अस्यायमर्थः—पौर्णमास्यामन्वाधाय प्रतिपदि पौर्णमासयागं कृत्वा तदानीमेवान्वाधाय द्वितीयायां पुनः पौर्णमासयागं कुर्यात् । एवममावास्यायामपि । सेयमृद्धिकामस्येष्टिः सुमना इत्यभिधीयते । तामेतां सुमनसमिष्टिं पूर्वोत्तरपक्षाभ्यां विचार्य विधातुमादौ पूर्वपक्षी सिद्धान्तं निराकृत्य स्वपक्षं विधत्ते—

न द्वे यजेत यत्पूर्वया संप्रति यजेतोत्तरया छम्बट्कुर्याद्यदुत्तरया संप्रति यजेत पूर्वया छम्बट्कुर्यान्नेष्टिर्भवति न यज्ञस्तदनु ह्वीतमुख्यपगल्भो जायत एकामेव यजेत प्रगल्भोऽस्य जायते, इति ।

सिद्धान्तिना यदुच्यते द्वे यजेतेति तन्न युक्तम् । यदि तत्र पूर्वया पौर्णमास्या संप्रति यजेत सम्यगनुतिष्ठेत्तदानीमुत्तरया छम्बट्कुर्यात् । यदुत्तरा सम्यगनुष्ठिता तदा पूर्ववैयर्थ्यम् । तथा सति द्विरनुष्ठिता सेयमिष्टिरित्यपि वक्तुं न शक्यते, इष्टावधिकावृत्तेरविहितत्वात् । नाप्यग्निष्टोमादियज्ञ इति वक्तुं शक्यतेऽधिकप्रयोगे सत्यपि प्रातःसवनादीनामभावात् । अत उभयभ्रष्टत्वा-

१ क. घ. ङ. च °ह्वान इमा । २ ख °ज्ञवदिति ।

त्तदनुष्ठाता यजमानः सभायां ह्रीतमुखी भवति । तैः पृष्टः सन्नुत्तरं वक्तुं न प्रगल्भो भवेत् । तस्मादृद्धिकाम्यावृत्तिं परित्यज्यैकामेव पौर्णमासीममावास्यां च यजेत । तथा सत्यस्य यजमानस्य पुत्रोऽपि सभायां प्रगल्भो जायते किमु वक्तव्यमयमिति ॥

तमिमं पूर्वपक्षं निराकृत्य सिद्धान्तं विधत्ते—

अनादृत्य तद्द्वे एव यजेत यज्ञमुखमेव पूर्वयाऽऽलभते यजत उत्तरया देवता एव पूर्वयाऽवरुन्ध इन्द्रियमुत्तरया देवलोकमेव पूर्वयाऽभिजयति मनुष्यलोकमुत्तरया भूयसो यज्ञक्रतूनुपैत्येषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोकेऽर्धुकं भवति, इति ।

एकामेवेति यदुक्तं तदनादृत्य द्वे एव यजेत, तत्र पूर्वयेष्ट्या सम्यगनुष्ठितया यज्ञमुखरूपयज्ञोपक्रमस्याऽऽलम्भनं देवतावरोधो देवलोकजयश्चेति प्रयोजनत्रयं संपद्यते । उत्तरया सम्यगनुष्ठितया प्रकृतयज्ञसंपूर्तिरिन्द्रियावरोधो मनुष्यलोकजयश्चेति संपद्यन्ते त्रीणि प्रयोजनानि । अतो नैकस्या अपि वैयर्थ्यम् । नापीष्टियज्ञत्वयोरभावः, प्रत्येकमिष्टित्वेऽपि समूहितस्य प्रौढयज्ञत्वात् । अत एतदनुष्ठानेन भूयसो बहूनेकाहाहीनसत्ररूपान्यज्ञक्रतूनुपैति । किंचात्र द्वितीयायामिष्टवन्तं यजमानमभिलक्ष्य पश्चाच्चन्द्रमा अभ्युदेति तस्येयमिष्टिर्नाम्ना सुमना इत्युच्यते । वर्धिष्णुचन्द्रोदयस्य सौमनस्यहेतुत्वात् । ततोऽस्मिन्नेव लोके तस्य समृद्धिर्धनं भवति ॥

यथेयं सुमना नामेष्टिर्दर्शपूर्णमासयोर्गुणविकृतिस्तथैवान्यां गुणविकृतिं विधत्ते—

दाक्षायणयज्ञेन सुवर्गकामो यजेत , इति ।

एतस्य यज्ञस्य स्वरूपं सूत्रकारेण स्पष्टीकृतम्—" दाक्षायणयज्ञेन सुवर्गकामो द्वे पौर्णमास्यौ द्वे अमावास्ये यजेताऽऽग्नेयोऽष्टाकपालोऽग्नीषोमीय एकादशकपालः पूर्वस्यां पौर्णमास्यामाग्नेयोऽष्टाकपाल ऐन्द्रं दध्युत्तरस्यामाग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालः पूर्वस्याममावास्यायामाग्नेयोऽष्टाकपालो मैत्रावरुण्यामिक्षा द्वितीयोत्तरस्याम् " इति ॥

तत्रोत्तरस्यां पौर्णमास्यामुत्तरस्याममावास्यायां चैकैकं विधत्ते—

पूर्णमासे सं नयेन्मैत्रावरुण्याऽऽ-
मिक्षयाऽमावास्यायां यजेत, इति ॥

तत्रैन्द्रं दधिरूपं यदुत्तरस्मिन्पौर्णमासे सांनाय्यं तत्प्रशंसति—

पूर्णमासे वै देवानाꣳ सुतस्तेषा-
मेतमर्धमासं प्रसुतः , इति ।

यदैन्द्रं दध्यनुष्ठितं तेन पौर्णमास एव देवानां सोमोऽभिषुतो भवति । पयो वै सोमः पयः सांनाय्यमित्युक्तत्वात् । तेषां देवानां पौर्णमासीमारभ्यामावास्यापर्यन्तमर्धमासं नैरन्तर्येण सोमः प्रकर्षेण सुतो भवति । प्रतिदिनमनुष्ठिताभिः सोमविक्रतिभिर्या प्रीतिः सा तेन सांनाय्येन संपद्यत इत्यर्थः ॥

अथोत्तरस्याममावास्यायां विहितामामिक्षां प्रशंसति—

तेषां मैत्रावरुणी वशाऽमावास्यायामनूबन्ध्या यत्पूर्वेद्युर्यजते वेदिमेव तत्करोति यद्वत्सानपाकरोति सदोहविर्धाने एव सं मिनोति यद्यजते देवैरेव सुत्याꣳ सं पादयति स एतमर्धमासꣳ सधमादं देवैः सोमं पिबति यन्मैत्रावरुण्याऽऽमिक्षयाऽमावास्यायां यजते यैवासौ देवानां वशाऽनूबन्ध्या सो एवैषैतस्य , इति ।

येयममावास्यायामनुष्ठिता मैत्रावरुण्यामिक्षा सा तेषां देवानां वशाऽनूबन्ध्या संपद्यते । तत्कथमिति तदुच्यते—पूर्वेद्युः शुक्लप्रतिपादि यजत इति यत्तेन सौमिकीं वेदिमेव कृतवान्भवति । तस्मिन्नेव दिने पुनरेव वत्सानपाकरोतीति यत्तेन सदोहविर्धाने द्वौ मण्डपौ संपादितवान्भवति । द्वितीयायां प्रातराग्नेयेनाष्टाकपालेन यजत इति यत्तेन देवैरिष्यमाणां सुत्यामेव संपादितवान्भवति । स तादृशो यजमान एतमर्धमासं शुक्लपक्षं नैरन्तर्येण देवैः सधमादं सहर्षोपेतं सोमं पीतवान्भवति । तस्मादाग्नेयादूर्ध्वं तस्मिन्द्वितीयामावास्याकर्मणि मैत्रावरुण्याऽऽमिक्षया यजत इति यत्सौ एवाऽऽमिक्षा यजमानस्य वशा संपद्यते । काऽसौ वशेति तदुच्यते—सोमयागावसाने देवानामर्थं एव या वशाऽनूबन्ध्या क्रियते सैवेयमामिक्षेत्यर्थः ॥

१ क. °न पूर्णमा° । २ क. घ. ङ. च. शुक्लप्र° । ३ ख. द्वौ यागम° ।

दाक्षायणयज्ञानुष्ठानं प्रशंसति—

साक्षाद्वा एष देवानभ्यारोहति य एषां यज्ञमभ्यारोहति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति, इति।

यो यजमान एषां विधिवाक्योक्तानामग्न्यादीनां देवानां यज्ञमभ्यारोहति सम्यगनुतिष्ठति एष साक्षादेव तानग्न्यादिदेवानभ्यारोहति प्राप्नोति । बहुकालं(ल)व्यवधानमन्तरेणैव देवसदृशं भोगं प्राप्नोतीत्यर्थः । प्राप्य च यथा लोके श्रेयान्राजामात्यादिरुत्तमं पदमभ्यारूढः स्वकीयभृत्यानामग्रे ममेदं भोगसाधनमानयेति पुनः पुनः कामयते तथाऽयं यजमान आवृत्तयाजी पुनः पुनः फलसंपादनं करोति ॥

पूर्वं स्वर्गकामस्यायं यज्ञ उक्तः, इदानीं व्यावृत्कामस्य स एवोच्यते—

यद्यवविध्यति पापीयान्भवति यदि नावविध्यति सदृङ्व्यावृत्काम एतेन यज्ञेन यजेत क्षुरपविर्ह्येष यज्ञस्ताजक्पुण्यो वा भवति प्र वा मीयते, इति।

अन्येषु यज्ञेषु यद्यवविध्यति किंचिद्वैकल्यं करोति तदानीं पापीयान्भवति अन्ययजमानापेक्षयाऽतिनिकृष्टो भवति। यदि नावविध्यति वैकल्यं न करोति तदानीमन्यैः सदृङ्समान एव भवति न तु तेभ्य आधिक्यलक्षणा व्यावृत्तिः सिध्यति। अतो व्यावृत्काम एतेन दाक्षायणयज्ञेन यजेत । यस्मादेष यज्ञः क्षुरवद्वज्रवच्चातितीक्ष्णस्तस्मादेतदनुष्ठायी ताजक्पुण्यो वा भवति तदानीमेवेतरेभ्यो व्यावृत्त एव भवति। एतद्विरोधी ताजक्प्रमीयत एव। अथवा यजमान एव सम्यगनुष्ठानादुत्तमो भवति वैकल्यात्प्रमीयते वा ॥

अतो वैकल्यपरिहाराय व्रतविशेषान्विधत्ते—

तस्यैतद्व्रतं नानृतं वदेन्न माँसमश्नीयान्न स्त्रियमुपेयान्नास्य पल्पूलनेन वासः पल्पूलयेयुरेतद्धि देवाः सर्वं न कुर्वन्ति॥, इति॥

१ क. घ. च. °त्तयजे पु°।

पल्पूलनं वस्त्रशुद्धिसाधनमूषादि तेनास्य वासो न शोधयेयुः। यस्माद्देवाः पूज्या एतत्सर्वमनृतवदनादि न कुर्वन्ति तस्मादयमपि न कुर्यात्। अस्य दाक्षायणयज्ञस्याऽऽधानादूर्ध्वं दर्शपूर्णमासाभ्यां सह विकल्पो द्रष्टव्यः। तथाच सूत्रकार आह—"(+दर्शपूर्णमासयोः प्रक्रमे विकल्पते,एतेन दर्शपूर्णमासाभ्यां वा यजते, एतेन पञ्चदश वर्षाणीष्ट्वा वा विरमेद्यजेत वा ) संतिष्ठते दाक्षायणयज्ञः" इति॥

अत्र मीमांसा।

षष्ठाध्यायस्य पञ्चमपादे चिन्तितम्—

"इष्टिरभ्युदये दर्शात्कर्मान्यद्युत देवताः।
पूर्वास्त्याज्या विशिष्टस्य विधानादन्यकर्म तत्॥
प्रकृतप्रत्यभिज्ञानान्न कर्मान्तरचोदना।
देवताः प्राकृतास्त्यक्त्वा द्रव्यमन्याभ्य उच्यते॥"

दर्शपूर्णमासयोः श्रूयते—"यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्" इति। अयमर्थः—दर्शभ्रान्त्या केनचिच्चतुर्दश्यां हविर्निरुप्तं भवति। ततः प्रत्यूषे पूर्वस्यां दिशि चन्द्रमा अभ्युदेति तदा निरुप्तास्तण्डुलास्त्रेधा विभक्तव्याः। अखण्डिता ईषत्खण्डिता अतिसूक्ष्मकणाश्चेति त्रैविध्यम्। ते च त्रिविधा दात्रादिगुणविशिष्टेभ्योऽग्न्यादिभ्यो देवेभ्य इति। तत्रेदं प्रक्रान्तदर्शकर्मणोऽन्यत्कर्म। कुतः, कालापराधप्रायश्चित्तार्थं द्रव्यदेवताविशिष्टस्य कर्मणो विधीयमानत्वात्। तत इदं प्रायश्चित्तं कृत्वा परेद्युरनुष्ठेयमिति प्राप्ते ब्रूमः—हविर्निरुप्तमिति प्रकृतं यद्दर्शकर्म तत्परित्यज्य कर्मान्तरविधिकल्पने प्रकृतहानाप्रकृतागमौ प्रसज्येयाताम्। अतस्तस्मिन्नेव प्रकृते कर्मणि निरुप्तस्य हविषः पूर्वदेवताभ्यो दर्शसंबन्धिनीभ्योऽपनयोऽत्राभिधीयते। तण्डुलोपलक्षितं यद्धविर्दधिरूपं व्रीहिरूपं च पूर्वेद्युर्निरुप्तं तद्धविः पूर्वदेवतात्मनोऽग्नेरिन्द्राच्च विभजेदिति देवताहविषोः परस्परविभागोऽत्र विधीयते, न तु तण्डुलानां स्थविष्ठमध्यमाणिष्ठरूपत्रिविधो विभागो विधीयते तस्य प्राप्तत्वात्। ये मध्यमाः स्युरिति विनियोगभेदादर्थप्राप्तः स विभागः। ततः पूर्वदेवतास्त्यक्त्वा दातृ-

+ धनुश्चिह्नान्तर्गतग्रन्थस्थाने ख पुस्तके "सोऽय दर्शपूर्णमासयो प्रक्रमोऽनेन दर्शपूर्णमासाभ्यां यजेत तेन पञ्च वर्षाणीष्ट्वा विरमेद्यजेत वा" इति पाठान्तरम्।

१ क घ ङ. च. °वन मद्रकादि। २ घ प्रक्रमो। ३ ख. च. °ते न।

त्वादिगुणयुक्ताभ्यो वह्न्यादिदेवताभ्यः पूर्वं निरुप्तं हविः प्रदातव्यम् । ननु प्रतिपदि प्रातर्निर्वापकालो न तु दर्शे, तथाऽपि दर्शभ्रान्त्याऽपि चतुर्दश्यां निर्वापाभावान्निर्वापादूर्ध्वं चन्द्रोदयो न प्राप्नोति । नैष दोषः । दध्नो ह्यह-कालीनत्वेनार्थसिद्धेः (द्धे) पूर्वेद्युर्दोहनातञ्चने, तदभिप्रायेण निरुप्तमित्युच्यते । यद्वा व्रीहिनिर्वापोऽपि पूर्वेद्युर्विकल्पितः । तथा च श्रूयते—" यदि बिभीया-दभि मोदेष्यतीति महारात्रे हवींषि निर्वपेत् " इति । अयमर्थः—भ्रान्त्या प्रमादेन वा दर्शोऽयमित्यभिनिश्चितवतो मां प्रति चन्द्रोऽभ्युदेष्यतीति भीति-रस्ति तदा तस्मिन्नेव दिने महारात्रे सर्वाणि निर्वपेदिति । अतो निरुप्तस्यैव हविषोऽस्मिन्नेव कर्मणि कालव्यत्यासं निमित्तीकृत्य देवतान्तरसंयोगरूपः प्रयोगप्रकारभेद उपदिश्यते । ततो दर्शस्यैवायं नैमित्तिकः प्रयोगो न तु दर्श-लोपप्रायश्चित्तमिति नैमित्तिकं दर्शप्रयोगमनुष्ठाय पश्चात्स्वकाले नित्योऽपि दर्शप्रयोगोऽनुष्ठातव्यः ॥

तत्रैवान्यचिन्तितम्—

" ऊर्ध्वं चन्द्रोदये सेष्टिर्निर्वापात्पूर्वमप्युत ।
उक्तेराद्योऽन्तिमः पक्षो निरुप्तेत्यविवक्षया ॥ "

सा पूर्वोक्ताऽभ्युदयेष्टिर्हविर्निर्वापादूर्ध्वं चन्द्रोदये सति कर्तव्या, निरुप्तं हविरभ्युदेतीत्युक्तत्वादिति चेन्नैवम् । हविरभ्युदयस्य निमित्तत्वेन तद्विशे-षणस्य निर्वापस्याविवक्षितत्वात् । अन्यथा वाक्यभेदापत्तेः । यस्य हविर-भ्युदेति तत्र हविर्निरुप्तमित्येवं वाक्यभेदः । तस्मिन्निर्वापात्प्रागपि चन्द्रोदये सत्यविहितकाले कर्मोपक्रममात्रेणेयमिष्टिः कर्तव्या ॥

तत्रैवान्यचिन्तितम्—

" प्राक्प्राकृतीभ्यो निर्वापो वैकृतीभ्योऽथवाऽग्रिमः ।
तण्डुलोक्तेर्वैकृतीभ्यो हविर्मात्रोपलक्षणात् ॥ "

निर्वापात्प्राग्यदा चन्द्रोदयस्तदा चन्द्रोदयादूर्ध्वं क्रियमाणो निर्वापः प्राकृ-तीभ्यो देवताभ्यो युक्तः । कुतः, तण्डुलान्विभजेदिति वाक्येन तण्डुलीभा-वादूर्ध्वं प्राकृतदेवतापनयनश्रवणात् । निर्वापस्तु व्रीहीणामेवेति तस्मिन्काले प्राकृताग्न्यादिदेवता नापनीता इति प्राप्ते ब्रूमः—वैकृतीभ्यो दातृत्वादिगुण-युक्ताभ्यो निर्वापः कर्तव्यः । कुतः, तण्डुलशब्देन हविर्मात्रस्योपलक्षणात् । अन्यथा दधिपयसोरतण्डुलत्वेन देवतापनयो न स्यात् । हविर्मात्रविवक्षायां

१ क. घ. ङ. च. दर्श । २ ख. °या सति द° ।

तु व्रीहीणामपि हविष्ट्वेन प्राकृतदेवतासंबन्धमपनीय देवतान्तरसंबन्धस्य कर्तुं युक्तत्वाद्वैकृतीभ्यो निर्वपेत्।

तत्रैवान्यच्चिन्तितम्—

" प्राकृतीभ्योऽल्पनिर्वापेऽभ्युदये शिष्टतण्डुलान्।
प्राकृतीभ्यो वैकृतीभ्यस्तूष्णीं वा निर्वपेदिह ॥
प्राकृतीभ्यः प्रवृत्तत्वाद्वैकृतीभ्यो निमित्ततः।
शिष्टांशस्यापदार्थत्वादसंयोगादिहान्तिमः ॥ "

यदा प्राकृतीभ्यो मुष्टिमात्रे निरुप्ते सति चन्द्रोऽभ्युदेति तदा मुष्टित्रयरूपोऽवशिष्टांशः प्राकृतीभ्य एव निर्वप्तव्यः। कुतः, प्राकृतीनां प्रवृत्तत्वात्, इत्येकः पक्षः। चन्द्रोदये निमित्ते सति नैमित्तिकस्य पूर्वदेवतापनयस्यावश्यंभावाद्वैकृतीभ्योऽवशिष्टांशनिर्वाप इति द्वितीयः पक्षः। अस्तु प्राकृतदेवतापनयो निमित्ताधीनः। अन्यदेवतासंयोगस्त्वंशस्य न संभवति। अन्याश्च देवताः प्राकृतदेवतास्थाने निवेशनीयाः। प्राकृतीनां च निर्वापपदार्थसंबन्धः क्लृप्तो न पदार्थांशेन। ततस्तत्स्थानपतितानां वैकृतीनां च नांशसंयोगो युक्त इत्यस्यांशस्य प्राकृतीभ्योऽपनीतत्वाद्वैकृतीभिरसंयोगाच्च तूष्णीमेव निर्वाप इति राद्धान्तः।

तत्रैवान्यच्चिन्तितम्—

" सेष्टिः सांनाय्यिनो वा स्यादन्यस्यापि दधिश्रुतेः।
नान्यस्येत्यग्रिमोऽन्त्यः स्याद्देवमात्रविधानतः ॥ "

नहि सांनाय्यरहितस्य दधिपयसी विद्येते, तदभावे च दधन्यश्रृतं शृते चरुमिति विधिर्न संगच्छते। तस्मात्सांनाय्यिन एव सा पूर्वोक्ताऽभ्युदयेष्टिरिति चेन्मैवम्। अप्राप्ता देवता एवात्र विधीयन्ते। दधिपयसोरपि विधाने वाक्यं भिद्येत। ततस्तण्डुलवत्प्राप्तयोर्दधिपयसोरनूद्यमानतया विध्यभावादुदके चरुश्रपणसंभवाच्च सांनाय्यिवदन्यस्यापि सेष्टिरस्ति।

नवमाध्यायस्य द्वितीयपादे चिन्तितम्—

" शृतदध्नोः प्रणीतानां न धर्माः सन्ति वा नहि।
अपाकार्थत्वतः सन्ति पाकहेतुत्वसाम्यतः ॥ "

अभ्युदयेष्ट्यां शृते चरुं दधनि चरुमिति शृतदधिनी आम्नायेते। तयोः प्रणीताधर्मा न कर्तव्याः। हविःश्रपणार्थमुत्पन्ना उत्पवनादिधर्मसंस्कृता आपः प्रणीता उच्यन्ते। दधिपयसी तु श्रपणार्थं नोत्पन्ने। किं तु हविष्ट्वेन प्रदानार्थमुत्पन्ने। ततः साम्याभावान्नोत्पवनादयो धर्मास्तयोरिति चेन्मैवम्। अन्यार्थ-

मुत्पन्नयोरपि दधिपयसोरत्र चन्द्रोदयं निमित्तीकृत्य चरुश्रपणहेतुत्वं वाचनिकम्। ततः समानत्वात्तद्धर्माः सन्ति।

द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्—

" यद्दाक्षायणयज्ञेन स्वर्गकामो यजेत तत्।
कर्मान्तरं गुणो वोक्तदर्शादौ फलसिद्धये॥
गुणस्यास्याप्रसिद्धत्वात्कर्मभेदोऽत्र संज्ञया।
गुणो व्युत्पत्तिशेषाभ्यामावृत्त्याख्यो न नाम तत्॥"

दर्शपूर्णमासप्रकरणे श्रूयते—" दाक्षायणयज्ञेन सुवर्गकामो यजेत " इति। तत्र दाक्षायणशब्दवाच्यस्य कस्यचिल्लोके प्रसिद्ध्यभावादुद्भिदादिवद्यजिसामानाधिकरण्येन कर्मनामत्वादथैष ज्योतिरित्यादिवदपूर्वसंज्ञया कर्मविधिरिति चेन्न। दाक्षायणशब्दस्याऽऽवृत्तिवाचकत्वात्। तत्र शब्दनिर्वचनाद्वाक्यशेषाच्चावगम्यते। तथाहि—अयनमित्यावृत्तिरुच्यते। दक्षस्यैते दाक्षास्तेषामयनमिति तन्निर्वचनम्। दक्ष उत्साही पुनः पुनरावृत्तावनलस इत्यर्थः। तदीयानां प्रयोगाणामावृत्तिर्दाक्षायणशब्दार्थः। तथा चाऽऽवृत्त्या युक्तः प्रकृतो दर्शपूर्णमासात्मको यज्ञो दाक्षायणयज्ञः। आवृत्तिप्रकारस्तु " द्वे पौर्णमास्यौ द्वे अमावास्ये " इत्यादिवाक्यशेषादवगम्यते। ततो दध्यादिवत्प्रसिद्धत्वाद्दर्शपूर्णमासयोः प्रकृतयोरयं स्वर्गफलसिद्ध्यर्थमावृत्त्याख्यस्य गुणस्य विधिर्नतूद्भिदादिवत्कर्मनामधेयम्। एवं साकंप्रस्थायीयेन यजेत पशुकाम इत्यत्रापि द्रष्टव्यम्। अमावास्यायागे द्वौ द्वौ दोहौ संपाद्य चतसृणां दधिपयसोः कुम्भीनां सह प्रस्थापनं साकंप्रस्थायस्तद्युक्तो यागः साकंप्रस्थायीयः। तथा सति प्रकृते दर्शयागे पशुफलाय साकंप्रस्थायाख्यो गुणो विधीयते।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

" अनृतं न वदेदेष पुंधर्मो वाऽनुवादगीः।
सक्रतौ पुंसि शुद्धे वा क्रतौ यद्वा विधिः क्रतौ॥
अनृतोक्तेः पुमर्थत्वात्तन्निषेधे तथाविधः।
स्मार्तानुवादः पुंस्क्रत्वोः श्रुतिप्रक्रिययोर्वशात्॥
नाऽऽख्याते पुरुषस्योक्तिः क्रताविव प्रयाजवत्।
स्मार्तोक्तनियमादन्यः संयोगोऽतः क्रतौ विधिः॥"

दर्शपूर्णमासप्रकरणे श्रूयते—नानृतं वदेदिति। तत्र पुरुषधर्मत्वेनायं प्रतिषेधो विधीयते। कुतः, प्रतियोगिनोऽनृतवदनस्य पुंधर्मत्वात्तन्निषेधस्यापि पुरुषधर्मत्वेनैव विधातव्यत्वात्। वदेदित्येतदाख्यातं तावत्कर्तृवाचकं, तेनाऽऽ-

( दर्शपूर्णमासयोः सोमयागेन सह पौर्वापर्यविधिः )

ख्यातेन कर्तुः प्रतीयमानत्वात्। पुरुषस्याऽऽख्यातप्रत्ययवाच्यत्वे सति प्रकृत्यर्थस्य वदनस्य पुरुषधर्मत्वं युक्तम्। अन्यथा भिन्नविषयत्वेन बाधकत्वं न स्यात्। तस्मात्पुरुषवाचकाख्यातश्रुत्या प्रकरणं बाधित्वा पुरुषार्थोऽयं निषेधो विधीयते। अस्त्येव स्मार्तः प्रतिषेध इति चेत्। तर्हि तस्यैतच्छ्रुतिवाक्यं मूलमस्तु। तस्मात्पुरुषार्थ इत्येकः पूर्वः पक्षः। आख्यातभिन्नविषयत्वेन बाधकत्वं न स्यात्। आख्यातश्रुतेः प्रकरणस्य चाविरोधाय क्रतुयुक्तपुरुषधर्मोऽस्तु। नह्येतद्वाक्यं स्मृतेर्मूलं, भिन्नविषयत्वात्। स्मृतिश्चोपनयनमारभ्याऽऽमरणं पुरुषस्यानृतं प्रतिषेधति। तन्मध्यपातित्वात्क्रतावपि स्मार्तो निषेधः प्राप्त एव। तदुभयार्थोऽप्ययं प्रतिषेधो न विधीयते किं त्वनूद्यत इति द्वितीयः पूर्वः पक्षः। आख्यातेन भावनाऽभिधीयते। कर्ता तु तदविनाभूतोऽर्थात्प्रतीयते। अतः श्रुत्यभावात्केवलेन प्रकरणेन प्रयाजादिवदाराडुपकारकः क्रतावेव निविशते। न च तत्रापि विधीयते, किं तु सार्वत्रिकस्य निषेधस्य क्रतावपि प्राप्तत्वादनूद्यत एवेति तृतीयः पूर्वपक्षः। सत्यमेव वदेन्नानृतमिति योऽयं स्मार्तनियमरूपः पुरुषार्थः संयोगस्तस्मादन्यः क्रत्वर्थः संयोगः। अतोऽप्राप्तत्वाद्विधीयते। एतद्विध्यतिक्रमे क्रतोरेव वैगुण्यं न तु पुरुषस्य प्रत्यवायः। अतोऽत्र क्रतुगामि प्रायश्चित्तम्। पुरुषार्थनियमातिक्रमे तु पुरुषस्यैव प्रत्यवायो न तु क्रतोर्वैगुण्यम्। तत्र स्मार्तप्रायश्चित्तमिति विशेषः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

( अथ द्वितीयाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः। )

---

एष वै देवरथो यद्दर्शपूर्णमासौ यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामव स्यत्येतानि वा अङ्गापरूꣳषि संवत्सरस्य यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजतेऽङ्गापरूꣳष्येव संवत्सरस्य प्रति

दधात्येते वै संवत्सरस्य चक्षुषी यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजते ताभ्यामेव सुवर्गं लोकमनु पश्यति (१) एषा वै देवानां विक्रान्तिर्यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजते देवानामेव विक्रान्तिमनु वि क्रमत एष वै देवयानः पन्था यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजते य एव देवयानः पन्थास्तꣳ समारोहत्येतौ वै देवानाꣳ हरी यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजते यावेव देवानाꣳ हरी ताभ्याम् (२) एवैभ्यो हव्यं वहत्येतद्वै देवानामास्यं यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजते साक्षादेव देवानामास्ये जुहोत्येष वै हविर्धानी यो दर्शपूर्णमासयाजी सायंप्रातरग्निहोत्रं जुहोति यजते दर्शपूर्णमासावहरहर्हविर्धानिनाꣳ सुतो य एवं विद्वान्दर्शपूर्णमासौ यजते हविर्धान्यस्मीति सर्वमेवास्य बर्हिष्यं दत्तं भवति देवा वा अहः (३) यज्ञियं नाविन्दन्ते दर्शपूर्णमासावपुनन्तौ वा एतौ पूतौ मेध्यौ यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ

यजते पूतावेवैनौ मेध्यौ यजते नामा-
वास्यायां च पौर्णमास्यां च स्त्रियमुपेयाद्यदुपे-
यान्निरिन्द्रियः स्यात्सोमस्य वै राज्ञोऽर्धमासस्य
रात्रयः पत्नय आसन्तासाममावास्यां च पौर्ण-
मासीं च नोपैत् (४) ते एनमभि समनह्येतां
तं यक्ष्म आर्छद्राजानं यक्ष्म आरदिति तद्राज-
यक्ष्मस्य जन्म यत्पापीयानभवत्तत्पापयक्ष्मस्य
यज्जायाभ्यामविन्दत्तज्जायेन्यस्य य एवमेतेषां
यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा विन्दन्ति
स एते एव नमस्यन्नुपाधावत्ते अब्रूतां वरं वृणा-
वहा आवं देवानां भागधे असाव (५)
आवदधि देवा इज्यान्ता इति तस्मात्सदृशी-
नाः रात्रीणाममावास्यायां च पौर्णमास्यां च
देवा इज्यन्त एते हि देवानां भागधे भागधा
अस्मै मनुष्या भवन्ति य एवं वेद भूतानि
क्षुधमघ्नन्त्सद्यो मनुष्या अर्धमासे देवा मासि
पितरः संवत्सरे वनस्पतयस्तस्मादहरहर्मनुष्या
अशनमिच्छन्तेऽर्धमासे देवा इज्यन्ते मासि
पितृभ्यः क्रियते संवत्सरे वनस्पतयः फलं

गृह्णन्ति य एवं वेद हन्ति क्षुधं भ्रातृ-
व्यम् ( ६ ) ॥

( पश्यति ताभ्यामहैरेदसाव फल९ सप्त च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( अथ द्वितीयाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

एषः । वै । देवरथ इति देव—रथः । यत् । दर्श-
पूर्णमासाविति दर्श—पूर्णमासौ । यः । दर्शपूर्णमासा-
विति दर्श—पूर्णमासौ । इष्ट्वा । सोमेन । यजते ।
रथस्पष्ट इति रथ—स्पष्टे । एव । अवसान इत्यव—
साने । वरे । देवानाम् । अवेति । स्यति । एतानि ।
वै । अङ्गापरूꣳषीत्यङ्गा—परूꣳषि । संवत्सरस्येति
सं—वत्सरस्य । यत् । दर्शपूर्णमासाविति दर्श—पूर्ण-
मासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति
दर्श—पूर्णमासौ । यजते । अङ्गापरूꣳषीत्यङ्गा—प-
रूꣳषि । एव । संवत्सरस्येति सं—वत्सरस्य । प्रतीति ।
दधाति । एते इति । वै । संवत्सरस्येति सं—वत्स-
रस्य । चक्षुषी इति । यत् । दर्शपूर्णमासाविति
दर्श—पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्ण-

मासाविति दर्श—पूर्णमासौ । यजंते । ताभ्याम् । एव । सुवर्गमिति सुवः—गम् । लोकम् । अन्विति । पश्यति ( १ ) । एषा । वै । देवानाम् । विक्रान्तिरिति वि—क्रान्तिः । यत् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यजंते । देवानाम् । एव । विक्रान्तिमिति वि—क्रान्तिम् । अनु । वीति । क्रमते । एषः । वै । देवयान इति देव—यानः । पन्थाः । यत् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यजंते । यः । एव । देवयान इति देव—यानः । पन्थाः । तम् । समारोहतीति सम्—आरोहति । एतौ । वै । देवानाम् । हरी इति । यत् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यजंते । यौ । एव । देवानाम् । हरी इति । ताभ्याम् ( २ ) । एव । एभ्यः । हव्यम् । वहति । एतत् । वै । देवानाम् । आस्यम् । यत् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यजंते । साक्षादिति स—अक्षात् ।

एव । देवानाम् । आस्ये । जुहोति । एषः । वै । हविर्धानीति हविः—धानी । यः । दर्शपूर्णमासयाजीति दर्शपूर्णमास—याजी । सायंप्रातरिति सायं—प्रातः । अग्निहोत्रमित्यग्नि—होत्रम् । जुहोति । यजते । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । अहरहरित्यहः—अहः । हविर्धानिनामिति हविः—धानिनाम् । सुतः । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यजते । हविर्धानीति हविः—धानी । अस्मि । इति । सर्वम् । एव । अस्य । बर्हिष्यम् । दत्तम् । भवति । देवाः । वै । अहः ( ३ ) । यज्ञियम् । न । अविन्दन् । ते । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । अपुनन् । तौ । वै । एतौ । पूतौ । मेध्यौ । यत् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यः । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । यजते । पूतौ । एव । एनौ । मेध्यौ । यजते । न । अमावास्यायामित्यमा—वास्यायाम् । च । पौर्णमास्यामिति पौर्ण—मास्याम् । च । स्त्रियम् । उपेति । इयात् । यत् । उपेयादित्युप—इयात् । निरिन्द्रिय इति निः—इन्द्रियः । स्यात् । सोमस्य । वै । राज्ञः । अर्धमासस्येत्यर्ध—मासस्य ।

रात्रयः । पत्नयः । आसन् । तासाम् । अमावास्यामित्यमा—वास्याम् । च । पौर्णमासीमिति पौर्ण—मासीम् । च । न । उपेति । ऐत् ( ४ ) । ते इति । एनम् । अभि । समिति । अनह्येताम् । तम् । यक्ष्मः । आर्च्छत् । राजानम् । यक्ष्मः । आरत् । इति । तत् । राजयक्ष्मस्येति राज—यक्ष्मस्य । जन्म । यत् । पापीयान् । अभवत् । तत् । पापयक्ष्मस्येति पाप—यक्ष्मस्य । यत् । जायाभ्याम् । अविन्दत् । तत् । जायेन्यस्य । यः । एवम् । एतेषाम् । यक्ष्माणाम् । जन्म । वेद । न । एनम् । एते । यक्ष्माः । विन्दन्ति । सः । एते इति । एव । नमस्यन् । उपेति । अधावत् । ते इति । अब्रूताम् । वरम् । वृणावहै । आवम् । देवानाम् । भागधे इति भाग—धे । असाव ( ५ ) । आवत् । अधीति । देवाः । इज्यान्तै । इति । तस्मात् । सदृशीनाम् । रात्रीणाम् । अमावास्यायामित्यमा—वास्यायाम् । च । पौर्णमास्यामिति पौर्ण—मास्याम् । च । देवाः । इज्यन्ते । एते इति । हि । देवानाम् । भागधे इति भाग—धे । भागधा इति भाग—धाः । अस्मै । मनुष्याः । भवन्ति । यः । एवम् । वेद । भूतानि । क्षुधम् । अघ्नन् । सद्यः । म-

नुष्याः । अर्धमास इत्यर्ध—मासे । देवाः । मासि । पितरः । संवत्सर इति सं—वत्सरे । वनस्पतयः । तस्मात् । अहरहरित्यहः—अहः । मनुष्याः । अशनम् । इच्छन्ते । अर्धमास इत्यर्ध—मासे । देवाः । इज्यन्ते । मासि । पितृभ्य इति पितृ—भ्यः । क्रियते । संवत्सर इति सं—वत्सरे । वनस्पतयः । फलम् । गृह्णन्ति । यः । एवम् । वेद । हन्ति । क्षुधम् । भ्रातृव्यम् ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ द्वितीयकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः । )

पञ्चमेऽभ्युदयेष्ट्याद्यास्तिस्र इष्टय ईरिताः ॥
अथ षष्ठे दर्शपूर्णमासयोः सोमयागेन सह पौर्वापर्यं विधत्ते—

**एष वै देवरथो यद्दर्शपूर्णमासौ यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामव स्यति,** इति ।

दर्शपूर्णमासाविति यदस्त्येष एव देवानां रथो रथसदृशः । तथा सति प्रथमतो दर्शपूर्णमासाविष्ट्वा पश्चात्सोमेन यो यजते तस्यानुष्ठाने महत्सौकर्यं भवति । यथा लोके भूयो रथसंचरणेन महामार्गस्थकण्टकपाषाणादिषु क्षुण्णेषु मार्गो विस्पष्टो भवति अयमस्य ग्रामस्य मार्ग इति सुखेनाध्यवसातुं शक्यते । कण्टकाद्यभावात् । वरः श्रेष्ठश्चासौ भवति तादृशे मार्गे मनुष्या अनायासेन गन्तुं शक्नुवन्ति, तथा देवानां संबन्धिना दर्शपूर्णमासरथेन स्पष्टे सुखेनाध्यवसातुं शक्ये श्रेष्ठे मार्गे यजमानः सोमेन यष्टुमध्यवस्यति । दर्शपूर्णमासयो-

रिष्टिप्रकृतित्वात्तयोः प्रयोगे स्वाधीने सति तद्विकृतिभूताः सोमाङ्गभूताः प्रायणीयाद्याः साङ्गाः सुखेनानुष्ठातुं शक्यन्ते । अननुष्ठितयोस्तु दर्शपूर्णमासयोः सोमप्रकरणे दीक्षणीयादिकर्मस्वरूपमात्रस्योपदिष्टत्वात्तदङ्गानि प्रयाजादीन्यनुष्ठातुं न शक्यन्ते । तस्मादिष्टिपूर्वत्वं दर्शपूर्णमासयोर्बहुधा प्रशस्यते ॥

तत्र प्रथमं संवत्सरावयवत्वेन प्रशंसति—

एतानि वा अङ्गापरूꣳषि संवत्सरस्य यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजतेऽङ्गापरूꣳष्येव संवत्सरस्य प्रति दधाति , इति ।

यथा मनुष्यस्य हस्तपादादीन्यङ्गानि मणिबन्धकूर्परकक्षादिसंधिरूपाणि परूंषि पर्वाणि तथा संवत्सरस्य द्वादश दर्शा अङ्गानि द्वादश पौर्णमास्यः परूंषि, तद्विदित्वाऽनुष्ठाने तदुभयं[1] प्रतिदधाति सम्यगनुष्ठापयति ॥

अथ चक्षुष्ट्वेन प्रशंसति—

एते वै संवत्सरस्य चक्षुषी यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजते ताभ्यामेव सुवर्गं लोकमनु पश्यति , इति ॥

अथैन्द्रपराक्रमरूपेण[3] प्रशंसति—

एषा वै देवानां विक्रान्तिर्यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजते देवानामेव विक्रान्तिमनु वि क्रमते , इति ।

सर्वेभ्यः कामेभ्यो दर्शपूर्णमासाविति शाखान्तरे श्रुतत्वाद्युद्धजयहेतुत्वमप्यस्तीति पराक्रमरूपत्वम्[4] ॥

अथ स्वर्गमार्गत्वेन[5] प्रशंसति—

एष वै देवयानः पन्था यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजते य एव देवयानः पन्थास्तꣳ समारोहति, इति ।

---

१ च. °नेन त° । २ क घ ङ च °भये प्र° । ३ क घ ङ °थेन्द्र प° । च. °थेद प° । ४ क. घ ङ च °मेद्तुत्व° । ५ क. घ. ङ च °र्गत्व ।

देवा यान्ति गच्छन्ति अस्मिन्मार्गे सोऽयं देवयानः ॥

अथाश्वरूपेण प्रशंसति—

एतौ वै देवानाꣳ हरी यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजते यावेव देवानाꣳ हरी ताभ्यामेवैभ्यो हव्यं वहति , इति ।

एभ्योऽग्न्यादिदेवेभ्यस्ताभ्यामेव दर्शपूर्णमासाभ्यां यजमानः पुरोडाशं वहति ॥

अथ देवमुखत्वेन प्रशंसति—

एतद्वै देवानामास्यं यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजते साक्षादेव देवानामास्ये जुहोति , इति ।

साक्षाद्व्यवधानमन्तरेणैव यथा ब्राह्मणाय दत्तमन्नं पात्रहस्तव्यवधानेन मुखं प्रविशति तद्वदित्यर्थः ॥

अथ सोमयाजित्वसंपादनेन स्तौति—

एष वै हविर्धानी यो दर्शपूर्णमासयाजी सायंप्रातरग्निहोत्रं जुहोति यजते दर्शपूर्णमासावहरहर्हविर्धानिनाꣳ सुतो य एवं विद्वान्दर्शपूर्णमासौ यजते हविर्धान्यस्मीति सर्वमेवास्य बर्हिष्यं दत्तं भवति , इति ।

हवींषि सोमग्रहरूपाणि धीयन्त आसाद्यन्ते यस्मिन्मण्डपे तदिह[1] हविर्धानं तदस्यास्तीति हविर्धानी सोमयाजी। दर्शपूर्णमासयाजिनः सोमयाजित्वं कथमित्युच्यते—आधानानन्तरमेव प्रवृत्तं यदग्निहोत्रं तत्प्रतिदिनं सायंप्रातरनुतिष्ठति, पर्वणि पर्वणि च दर्शपूर्णमासौ यजते। तदुभयानुष्ठानेन हविर्धानिनां सोमदेवानां प्रतिदिनं सोमोऽभिषुतो भवति। सोमाभिषवणे या प्रीतिः सा देवानामत्र संपद्यते। अग्निहोत्रदर्शपूर्णमासप्रवृत्त्या तदनन्तरभाविनि सोमयागेऽपि प्रवर्तिष्यत इत्येव तन्निश्चेतुं शक्यत्वात् । तत्प्रवृत्तिक्रमश्च सूत्रकारेण[2] दर्शितः—" अथैकेषामग्नीनाधाय हस्तावत्रनिज्य संवत्सरमग्निहोत्रं हुत्वा

१ ख. 'दिद ह' । २ क. घ ङ. च. 'त्र द' ।

दर्शपूर्णमासावारभते ताभ्यां संवत्सरमिष्ट्वा सोमेन पशुना वा यजेत तत ऊर्ध्वमन्यानि कर्माणि कुरुते" इति। यो यजमान एवं देवानां भविष्यत्सोमयागविषयां प्रीतिं विद्वानहं हविर्धानी सोमयाजी भवामीति बुद्ध्वा दर्शपूर्णमासौ यजते। तत ऊर्ध्वमस्य यजमानस्य बर्हिषि सोमयागे दातव्यं यद्द्रविणं तत्सर्वं बर्हिष्यं दत्तं भवति॥

स्वल्पेऽपि कर्मण्यधिककर्मसंपादनवेदनेन फलाधिक्यप्राप्तिः पूर्वकाण्डे प्रजापतिर्यज्ञानसृजतेत्यनुवाके प्रपञ्चिता। अथ दर्शपूर्णमासकर्मणोस्तिथिविषयविधिमर्थवादेनोन्नयति—

देवा वा अहर्यज्ञियं नाविन्दन्ते दर्शपूर्णमासावपुनन्तौ वा एतौ पूतौ मेध्यौ यद्दर्शपूर्णमासौ य एवं विद्वान्दर्शपूर्णमासौ यजते पूतावेवैनौ मेध्यौ यजते, इति।

एतौ दर्शपूर्णमासौ यज्ञावर्हतीति यज्ञियं, तादृशमेकमप्यहर्देवा न लेभिरे। ततो विचार्य दर्शपूर्णमासावमावास्यां पौर्णमासीं च दिनद्वयमपुनञ्शोधितवन्तः, यज्ञियत्वं निश्चितवन्त इत्यर्थः। यस्मिन्दिने सूर्य एव दृश्यते चन्द्रमास्तु न दृश्यते सोऽयं दर्शः। अमावास्या च तादृशी। तस्यां तिथौ सूर्येण सहैव वसतश्चन्द्रमसो द्रष्टुमशक्यत्वात्। अतः सा तिथिः सूर्यमात्रदर्शनाद्दर्शनामाङ्कितस्य कर्मणो योग्या। यस्यां तिथौ चन्द्रमण्डलं संपूर्णं दृश्यते सा पौर्णमासी। सा चन्द्रमसः पूर्तेः पूर्णनामाङ्कितस्य कर्मणो योग्या। प्रतिपदादिषु चतुर्दश्यन्तासु तिथिषु चन्द्रमा लेशतो दृश्यते न पूर्णो नाप्यत्यन्तमदृष्टः। अतस्तयोः कर्मणोर्योग्या न भवन्ति। तस्मात्तावेवैतावुक्तौ तिथिविशेषा देवैरुक्तरीत्या शोधितौ सन्तौ यज्ञयोग्यौ संपन्नौ। अत्र दर्शपूर्णमासशब्दास्तिथिपरो न कर्मपरः। यस्त्वेवं तिथ्योः शुद्धिं विद्वान्कर्मद्वयं कुरुते सोऽयं शोधितौ यज्ञयोग्यौ तिथिविशेषावेव प्राप्य कृतवान्भवति। तस्मात्तयोस्तिथ्योः कुर्यादिति तात्पर्यार्थः॥

प्रसङ्गात्पुरुषार्थं कंचिन्नियमं विधत्ते—

नामावास्यायां च पौर्णमास्यां च स्त्रियमुपेयाद्यदुपेयान्निरिन्द्रियः स्यात्, इति॥

पूर्वोक्तयोस्तिथ्योर्यज्ञियत्वमाख्यायिकया प्रपञ्चयति—

सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्नय आसन्तासाममावास्यां च पौर्णमासीं च नोपैत्ते एनमभि समनह्येतां तं यक्ष्म आर्छद्राजानं यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म यत्पापीयानभवत्तत्पापयक्ष्मस्य यज्जायाभ्यामविन्दत्तज्जायेन्यस्य य एवमेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा विन्दन्ति स एते एव नमस्यन्नुपाधावत्ते अब्रूतां वरं वृणावहा आवं देवानां भागधे असावाऽऽवदधि देवा इज्यान्ता इति तस्मात्सदृशीनाः रात्रीणाममावास्यायां च पौर्णमास्यां च देवा इज्यन्त एते हि देवानां भागधे भागधा अस्मै मनुष्या भवन्ति य एवं वेद , इति ।

अर्धमासस्य शुक्लपक्षस्य रात्रय एको वर्गः, कृष्णपक्षस्य रात्रयः परो वर्गस्ते अमावास्यापौर्णमास्यावेनं सोममभिसमनह्येतामाभिमुख्येन संभोगाय गृहीतवत्यौ । बलात्कारेण भुज्यमानं तं सोममतिव्यवायेन क्षयव्याधिः प्राप्तवान् । एतच्च प्रजापतेस्त्रयस्त्रिंशद्दुहितर इत्यत्र व्याख्यातं तथैव व्याख्येयम् । आवामुभे एव देवानां हविर्भागधारिण्यौ भवाव आवयोरधिश्रित्याग्न्यादयो देवा इज्यन्तामित्यनयोर्वरः । एतयोर्भागधारित्वं जानते मनुष्याः सर्वेऽपि भागं धारयित्वा प्रयच्छन्ति ॥

अथ मनुष्यादिसाम्योपन्यासेनोक्तार्थमेव पुनः प्रशंसति—

भूतानि क्षुधमघ्नन्त्सद्यो मनुष्या अर्धमासे देवा मासि पितरः संवत्सरे वनस्पतयस्तस्मादहरहर्मनुष्या अशनमिच्छन्तेऽर्धमासे देवा इज्यन्ते मासि पितृभ्यः क्रियते संवत्सरे वनस्पतयः फलं गृह्णन्ति य एवं वेद हन्ति क्षुधं भ्रातृव्यम् ॥, इति ॥

( हौत्रविवक्षया सामिधेनीव्याख्यानम् )

भूतानि मनुष्याद्याः प्राणिनः। वनस्पतयः पनसाम्राद्याः। तेषां फलग्रहणमेव क्षुन्निवारणरूपां तृप्तिं सूचयति। एवं क्षुधो हननं यो वेद सोऽप्यन्नसमृद्धः क्षुद्रूपं शत्रुं सर्वदा हन्ति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः॥ ६॥

---

( अथ द्वितीयाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः। )

देवा वै नर्चि न यजुष्यश्रयन्त ते सामन्नेवाश्रयन्त हिं करोति सामैवाकर्हिं करोति यत्रैव देवा अश्रयन्त तत एवैनान्प्र युङ्क्ते हिं करोति वाच एवैष योगो हिं करोति प्रजा एव तद्यजमानः सृजते त्रिः प्रथमामन्वाह त्रिरुत्तमां यज्ञस्यैव तद्बर्समं ( १ ) नह्यत्यप्रस्रंसाय संततमन्वाह प्राणानामन्नाद्यस्य संतत्या अथो रक्षसामपहत्यै राथंतरीं प्रथमामन्वाह राथंतरो वा अयं लोक इममेव लोकमभि जयति त्रिर्वि गृह्णाति त्रय इमे लोका इमानेव लोकानभि जयति बार्हतीमुत्तमामन्वाह बार्हतो वा असौ लोकोऽमुमेव लोकमभि जयति प्र वः ( २ ) वाजा इत्यनिरुक्तां प्राजापत्यामन्वाह यज्ञो वै प्रजापतिर्यज्ञमेव प्रजापतिमा

रभते प्र वो वाजा इत्यन्वाहान्नं वै वाजोऽन्नमे-
वाव रुन्धे प्र वो वाजा इत्यन्वाह तस्मात्प्रा-
चीनꣳ रेतो धीयतेऽग्न आ याहि वीतय
इत्याह तस्मात्प्रतीचीः प्रजा जायन्ते प्र वो
वाजाः ( ३ ) इत्यन्वाह मासा वै वाजा अर्ध-
मासा अभिद्यवो देवा हविष्मन्तो गौर्घृताची
यज्ञो देवाञ्जिगाति यजमानः सुम्नयुरिदमसीद-
मसीत्येव यज्ञस्य प्रियं धामाव रुन्धे यं काम-
येत सर्वमायुरियादिति प्र वो वाजा इति
तस्यानूच्याग्न आ याहि वीतय इति संततमु-
त्तरमर्धर्चमा लभेत ( ४ ) प्राणेनैवास्यापानं
दाधार सर्वमायुरेति यो वा अरत्निꣳ सामि-
धेनीनां वेदारत्नावेव भ्रातृव्यं कुरुतेऽर्धर्चौ सं
दधात्येष वा अरत्निः सामिधेनीनां य एवं
वेदारत्नावेव भ्रातृव्यं कुरुत ऋषेर्ऋषेर्वा एता
निर्मिता यत्सामिधेन्यस्ता यदसंयुक्ताः स्युः
प्रजया पशुभिर्यजमानस्य वि तिष्ठेरन्नर्धर्चौ
सं दधाति सं युनक्त्येवैनास्ता अस्मै संयुक्ता
अवरुद्धाः सर्वामाशिषं दुह्रे ( ५ ) ॥

( हौत्रविवक्षया सामिधेनीव्याख्यानम् )

( बर्सं वो जायन्ते प्र वो वाजा लभेत दधाति स दर्श च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ द्वितीयाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाक । )

देवाः । वै । न । ऋचि । न । यजुंषि । अश्र-यन्त । ते । सामंन् । एव । अश्रयन्त । हिम् । करोति । साम । एव । अकः । हिम् । करोति । यत्र । एव । देवाः । अश्रयन्त । ततः । एव । एनान् । प्रेति । युङ्क्ते । हिम् । करोति । वाचः । एव । एषः । योगः । हिम् । करोति । प्रजा इति प्र—जाः । एव । तत् । यजमानः । सृजते । त्रिः । प्रथमाम् । अन्विति । आह । त्रिः । उत्तमामित्युंत्—तमाम् । यज्ञस्य । एव । तत् । बर्सम् ( १ ) । नह्यति । अप्रस्रंसायेत्यप्र—स्रंसाय । संततमिति सं—ततम् । अन्विति । आह । प्राणानामिति प्र—अनानाम् । अन्नाद्यस्येत्यंन्न—अद्यस्य । संतत्या इति सं—तत्यै । अथो इति । रक्षसाम् । अपहत्या इत्यप—हत्यै । राथंतरीमिति राथं—तरीम् । प्रथमाम् । अन्विति । आह । राथंतर इति राथं—तरः । वै । अयम् । लोकः । इमम् । एव । लोकम् । अभीति ।

जयति । त्रिः । वीति । गृह्णाति । त्रयः । इमे । लोकाः । इमान् । एव । लोकान् । अभीति । जयति । बार्हतीम् । उत्तमामित्युत्—तमाम् । अन्विति । आह । बार्हतः । वै । असौ । लोकः । अमुम् । एव । लोकम् । अभीति । जयति । प्रेति । वः (२)। वाजाः । इति । अनिरुक्तामित्यनिः—उक्ताम् । प्राजापत्यामिति प्राजा—पत्याम् । अन्विति । आह । यज्ञः । वै । प्रजापतिरिति प्रजा—पतिः । यज्ञम् । एव । प्रजापतिमिति प्रजा—पतिम् । एति । रभते । प्रेति । वः । वाजाः । इति । अन्विति । आह । अन्नम् । वै । वाजः । अन्नम् । एव । अवेति । रुन्धे । प्रेति । वः । वाजाः । इति । अन्विति । आह । तस्मात् । प्राचीनम् । रेतः । धीयते । अग्ने । एति । याहि । वीतये । इति । आह । तस्मात् । प्रतीचीः । प्रजा इति प्र—जाः । जायन्ते । प्रेति । वः । वाजाः (३)। इति । अन्विति । आह । मासाः । वै । वाजाः । अर्धमासा इत्यर्ध—मासाः । अभिद्यव इत्यभि—द्यवः । देवाः । हविष्मन्तः । गौः । घृताची । यज्ञः । देवान् । जिगाति । यजमानः । सुम्नयुरिति सुम्न—युः । इदम् । असि । इदम् । असि । इति । एव ।

यज्ञस्य । प्रियम् । धाम । अवेति । रुन्धे । यम् । कामयेत । सर्वम् । आयुः । इयात् । इति । प्रेति । वः । वाजाः । इति । तस्य । अनूच्येत्यनु—उच्य । अग्ने । एति । याहि । वीतये । इति । संततमिति सं—ततम् । उत्तरमित्युत्—तरम् । अर्धर्चमित्यर्ध—ऋचम् । एति । लभेत (४) । प्राणेनेति प्र—अनेन । एव । अस्य । अपानमित्यप—अनम् । दाधार । सर्वम् । आयुः । एति । यः । वै । अरत्निम् । सामिधेनीनामिति साम्—इधेनीनाम् । वेद । अरत्नौ । एव । भ्रातृव्यम् । कुरुते । अर्ध-र्चावित्यर्ध—ऋचौ । समिति । दधाति । एषः । वै । अरत्निः । सामिधेनीनामिति साम्—इधेनीनाम् । यः । एवम् । वेद । अरत्नौ । एव । भ्रातृव्यम् । कुरुते । ऋषेर्ऋषेरित्यृषेः—ऋषेः । वै । एताः । निर्मिता इति निः—मिताः । यत् । सामिधेन्य इति साम्—इधेन्यः । ताः । यत् । असंयुक्ता इत्यसं—युक्ताः । स्युः । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । यजमानस्य । वीति । तिष्ठेरन् । अर्ध-र्चावित्यर्ध—ऋचौ । समिति । दधाति । समिति । युनक्ति । एव । एनाः । ताः । अस्मै । संयुक्ता इति

सं—युक्ताः । अवंरुद्धा इत्यवं—रुद्धाः । सर्वाम् । आशिषमित्या—शिषंम् । दुहे ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

( अथ द्वितीयकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः । )

अनुवाकैः षड्भिरेतैराध्वर्यवमुदीरितम् ॥

अथोत्तरैरनुवाकैर्होत्रं विवक्षुरस्मिन्सप्तमेऽनुवाके तदनन्तरभाव्यष्टमे च सामिधेनीमन्त्रा व्याख्यायन्ते । ते च ब्राह्मणग्रन्थे तृतीयकाण्डे पञ्चमप्रपाठके समाम्नाताः ।

कल्पः(ल्पे) पुरस्तात्सामिधेनीना[१] होतेत्युपक्रम्यान्तराऽऽहवनीयमुत्करं च प्रतीचीनं गच्छञ्जपति कं प्रपद्ये तं प्रपद्य इत्यादिकमुक्त्वा सत्यं प्रपद्य इति वेति पक्षान्तरमुक्तम् ।

तत्पाठस्तु—

" सत्यं प्रपद्ये । ऋतं प्रपद्ये । अमृतं प्रपद्ये । प्रजापतेः प्रियां तनुवमनार्तां प्रपद्ये । इदमहं पञ्चदशेन वज्रेण । द्विषन्तं भ्रातृव्यमवक्रामामि । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः । भूर्भुवः सुवः । हिम् । " [ ब्रा० का० ३ प्र० ५ अ० १ ] इति ।

सत्यं यथार्थभूतमिदं कर्म प्रपद्ये प्रारभे । अस्मिन्कर्मणि वाचिकोऽपराधो मा भूदित्यर्थः । मनसा चिन्त्यमानमप्यूनं यथा भवति तथा प्रपद्ये । मानसोऽप्यपराधो मा भूदित्यर्थः । अमृतत्वहेतुभूतमिदं कर्म प्रपद्ये । अनेन कर्मणा देवत्वं प्राप्स्यनामित्यर्थः । देवेष्वप्यार्तिरहितां प्रजापतेः प्रियां तनुवं प्रजापतिशरीरमिदं कर्म प्रपद्ये । इदमिति हस्तेनाभिनयः । अहं होता पञ्चदशस्तोमसदृशेन वज्ररूपेणानेन कर्मणा द्विषन्तं शत्रुमवष्टभ्य पीडयामि । यः शत्रुरस्मान्मनसा द्वेष्टि यं च शत्रुं वयं मनसा द्विष्मस्तमुभयविधमवक्रामामीति पूर्वत्रान्वयः । भूर्भुवः सुवरित्येतन्नामका लोकास्तान्हिनोमि प्रीणयामीत्यर्थः ॥

कल्पः—" व्याहृतीरुक्त्वा त्रिरभिहिकृत्यानवानमभिहिकारादचमुपसंदधाति प्र वो वाजा अभिद्यव इत्येकादशेमाः सामिधेन्यः " इति ।

१ ख 'का पे लो' ।

(हौत्रविवक्षया सामिधेनीव्याख्यानम्)

अनवानमनुच्छ्वसन् ॥

तत्र प्रथमायाः पाठस्तु—

"प्र वो वाजा अभिद्यवः। हविष्मन्तो घृताच्या। देवाञ्जिगाति सुम्नयुः।" [ब्रा० का० ३ प्र० ५ अ० २] इति।

हे देवा वो युष्मदीया ऋत्विग्यजमानाः प्रवर्तन्ते। वाजा गमनशीला मासा अभिद्यवोऽभितः पूर्वपक्षरूपेणोत्तरपक्षरूपेण च दीप्यमाना अर्धमासा हविष्मन्तो हविर्भाजो देवाश्च घृताच्या यागसाधनभूतघृतप्रदया गवा सहानुकूलाः प्रवर्तन्तामित्यध्याहारः। किं चायं यज्ञो देवाञ्जिगाति प्राप्नोतु। यजमानस्य सुम्नयुः सुखेच्छुर्भवतु ॥

यदेतदुक्तं त्रिर्हिं करोतीति तदेतद्विधत्ते—

देवा वै नर्चि न यजुष्यश्रयन्त ते सामन्नेवाश्रयन्त हिं करोति सामैवाकर्हिं करोति यत्रैव देवा अश्रयन्त तत एवैनान्प्र युङ्क्ते हिं करोति वाच एवैष योगो हिं करोति प्रजा एव तद्यजमानः सृजते, इति।

देवाः पूर्वमृचि नाश्रयन्त यजुष्यपि नाश्रयन्त न संतुष्टा इत्यर्थः। किं तु सामन्येव संतुष्टाः। ततो हिमितिशब्दमुच्चारयेत्। तेन सामैव कृतं भवति। पञ्चकृत्वः सप्तकृत्वो वा साम्न आदौ हिंकारस्य विद्यमानत्वात्। तस्य हिमितिशब्दस्य त्रिरुच्चारणमभिप्रेत्य त्रिवारं विधिरत्र प्रशस्यते। यत्रैव देवा अश्रयन्त यत्रैव सामनि देवाः संतुष्टास्तत एव साम्न एनान्देवान्प्रयुङ्क्ते होता हि कुर्वन्प्रकर्षेण तोषयतीत्यर्थः। प्रथमोच्चारणेन साम कृतं भवति। तथा द्वितीयोच्चारणेन वाचो योगः संपद्यते। सामाश्रयभूताया ऋग्रूपाया वाचः संबन्धः संपद्यत इत्यर्थः। तृतीयोच्चारणं यदस्ति तेन यजमानः प्रजा एव सृष्टवान्भवति ॥

एकादशानां सामिधेनीनामाद्यन्तयोरावृत्तिं विधत्ते—

त्रिः प्रथमामन्वाह त्रिरुत्तमां यज्ञस्यैव तद्बर्सं नह्यत्यप्रस्रंसाय, इति।

"प्र वो वाजा अभिद्यवः" इत्येषा प्रथमा। "आ जुहोत दुवस्यत" इति वा

१ ख त्रिरभिंहि क°। २ क घ ङ. च. °दौ वि°। ३ ख °यं। यथा प्र°। ४ ख. °नामृचामा°।

"त्वं वरुण उत मित्र," इति वा द्वयोरन्यतरोत्तमा। तत्तेन प्रथमोत्तमयोस्त्रिरभ्यासेन यज्ञस्य वर्समन्तभागान्नह्यति बध्नाति । यथा लोके वस्त्रेण कम्बलेन वा व्रीहीन्वोढुकामोऽन्तद्वयं बध्नाति तद्वत् । तच्च बन्धनं स्रंसनराहित्याय भवति ॥

पूर्वस्यामृच्युत्तरार्धस्योत्तरस्यामृचि पूर्वार्धस्य च परस्पराविश्लेषं विधत्ते—

**संततमन्वाह प्राणानामन्नाद्यस्य संतत्या अथो रक्षसामपहत्यै, इति।**

तदेतत्संततोच्चारणं यजमानस्य प्राणानां संतत्यै भोज्यवस्तुसंतत्यै च संपद्यते। किं च राक्षसाः श्वासनिरोधेनापहता भवन्ति ॥

यस्याः प्रथमाया आवृत्तिर्विहिता तां स्वरूपेण विधत्ते—

**राथंतरीं प्रथमामन्वाह राथंतरो वा अयं लोक इममेव लोकमभि जयति, इति।**

कस्मिंश्चित्सामशाखाविशेषे "प्र वो वाजाः" इत्येतस्यामृचि रथंतरसाम्नो गीतत्वादियं राथंतरी। रथंतरसामयुक्तेन कर्मणा संपादयितुं शक्यत्वाद्भूलोकस्य राथंतरत्वम् ॥

यदुक्तं सूत्रकारेण—" तृतीयां सामिधेनीं त्रिर्विगृह्णाति " इति, तदेतद्विधत्ते—

**त्रिर्वि गृह्णाति त्रय इमे लोका इमानेव लोकानभि जयति,इति।**

तृतीयस्याः सामिधेन्याः प्रथमपादमुच्चार्य सकृद्विग्रहः कार्यः। अर्धर्चे द्वितीयो विग्रहः। तत उत्तरार्धं उपरितनमत्रस्य पूर्वार्धं च संयोज्य तदन्ते तृतीयो विग्रहः। एतेन विग्रहत्रयेण लोकत्रयजयो भवति ॥

यस्यामृच्ययं त्रिविधो विग्रहस्तामृचं विधत्ते—

**बार्हतीमुत्तमामन्वाह बार्हतो वा असौ लोकोऽमुमेव लोकमभि जयति, इति।**

य(अ)स्यामृचि बृहच्छोचा यविष्ठ्येतिशब्दस्य श्रूयमाणत्वादियं बार्हती। सा च तृतीयेति कृत्वा प्रथममध्यमापेक्षयोत्तमा। तथा सत्युत्तमामन्वाहेत्युक्ते तृतीयात्वेन पठेदित्यर्थो भवति। एतन्मन्त्रोपेतकर्मसाध्यत्वात्स्वर्गलोकस्य बार्हतत्वम्॥

प्रथमायामृचि देवतादिविशेषाभिव्यक्त्यभावं प्रशंसति—

---

१ ख. भोग्यव॰ । २ ख. च. अर्धर्च । ३ ख. ॰राथेमुप॰ ।

( हौत्रविवक्षया सामिधेनीव्याख्यानम् )

प्र वो वाजा इत्यनिरुक्तां प्राजापत्यामन्वाह यज्ञो वै प्रजापतिर्यज्ञमेव प्रजापतिमा रभते, इति।

कस्यापि देवविशेषस्य निरुक्तं नामविशेषकथनं तत्र नास्ति सेयमनिरुक्ता । प्रजापतिश्च स्रष्टुः प्राग्रूपविशेषाभावादनिरुक्तः । अत इयं प्राजापत्या । यज्ञश्च प्रजापतिसृष्टत्वात्तत्स्वरूपः । तस्मात्प्राजापत्यमन्त्रस्य प्रथमपाठेन यज्ञरूपमेव प्रजापतिं प्रारब्धवान्भवति ॥

अस्मिन्मन्त्रे वाजशब्दोच्चारणं प्रशंसति—

प्र वो वाजा इत्यन्वाहान्नं वै वाजोऽन्नमेवाव रुन्धे, इति ॥

तथाऽत्र प्रशब्दोच्चारणं प्रशंसति—

प्र वो वाजा इत्यन्वाह तस्मात्प्राचीनꣳ रेतो धीयते , इति ।

यस्मात्प्रशब्द उच्चारितस्तस्मात्प्राचीनं प्रमुखे रेतोवर्तिनि योषिच्छरीरेऽग्राति गच्छतीति प्राचीनं, तथाविधं रेतो धीयते गर्भाशये स्थाप्यते ॥

एतस्य मन्त्रस्य चरमपादेन सहोत्तरस्य मन्त्रस्य प्रथमपादोच्चारणं प्रशंसति—

अग्न आ याहि वीतय इत्याह तस्मात्प्रतीचीः प्रजा जायन्ते , इति ।

यस्मादायाहीत्युक्तं तस्मात्प्रतीचीः प्रत्यङ्मुखाः सदृशाः प्रजा उत्पद्यन्ते ॥

मन्त्रगतानां पदानामर्थान्दर्शयति—

प्र वो वाजा इत्यन्वाह मासा वै वाजा अर्धमासा अभिद्यवो देवा हविष्मन्तो गौर्घृताची यज्ञो देवाञ्जिगाति यजमानः सुम्नयुः , इति ।

वजन्ति गच्छन्ति क्रमेण प्रवर्तन्त इति चैत्रादिमासा वाजाः । इदमेव ब्राह्मणवाक्यं हृदि निधाय मन्त्रार्थः पूर्वं दर्शितः ॥

पदार्थानभिधाय मन्त्रतात्पर्यार्थमाह—

इदमसीदमसीत्येव यज्ञस्य प्रियं धामाव रुन्धे, इति ।

सामिधेनीभिः समिध्यमान हेऽग्ने त्वमिदं मासानां स्वरूपमसि, अर्धमासानां स्वरूपमसि, देवानां स्वरूपमसीत्येव तात्पर्यार्थः । अनेन तात्पर्येण यज्ञस्य प्रियं धामाऽऽहुतिस्थानमिध्यमानाग्निस्वरूपं संपादितवान्भवति ॥

यदुक्तं " संततमन्वाह प्राणानामन्नाद्यस्य संतत्यै " इति, तदेवेदानीं काम्यत्वेनापि विधत्ते—

**यं कामयेत सर्वमायुरियादिति प्र वो वाजा इति तस्यानूच्याग्न आ याहि वीतय इति संततमुत्तरमर्धर्चमा लभेत प्राणेनैवास्यापानं दाधार सर्वमायुरेति**, इति।

यं यजमानमुद्दिश्य होता कामयेत। किमिति—अयं यजमानो मृत्युरहितः सर्वमायुः प्राप्नुयादिति, तस्य यजमानस्याऽऽयुष्प्राप्तये प्रथमां सामिधेनीं सर्वामनूच्य विच्छेदमकृत्वोत्तरमन्त्रस्य प्रथममर्धर्चमुपक्रमेत । तेन सांतत्येनास्य यजमानस्य प्राणवायुना बहिर्निर्गच्छता सहैवापानवायुं पुनरप्यन्तरा गच्छन्तं धारितवान्भवति। तेन च धारणेन सर्वमायुः प्राप्नोति ॥

तदेव सांतत्यं पुनः प्रकारान्तरेण प्रशंसति—

**यो वा अरत्निꣳ सामिधेनीनां वेदारत्नावेव भ्रातृव्यं कुरुतेऽर्धर्चौ* सं दधात्येष वा अरत्निः सामिधेनीनां य एवं वेदारत्नावेव भ्रातृव्यं कुरुते**, इति।

कूर्परमारभ्य प्रसारितकनिष्ठाङ्गुलिपर्यन्तो हस्तभागोऽरत्निः । न च तस्यारत्नेर्मध्ये विच्छेदोऽस्ति तद्वदुभयोः सामिधेन्योर्मध्ये सातत्यमरत्नित्वेनोपचर्यते। यो होता तदिदं सांतत्यं विदित्वाऽनुतिष्ठति स होता भ्रातृव्यं यजमानस्यारत्नौ स्थापयति । चतुररत्निपरिमितस्य पुरुषस्यारत्निमात्रपरिमितो बालो यथा नीचो भवति तद्वदमुं कुरुत इत्यर्थः। य एवं वेदेति पुनरभिधानं प्रतिज्ञातस्य निगमनार्थम् ॥

तदेव सांतत्यं विपक्षबाधकोपन्यासपुरःसरं पुनः प्रशंसति—

**ऋषेर्ऋषेर्वा एता निर्मिता यत्सामिधेन्यस्ता यदसंयुक्ताः स्युः प्रजया पशुभिर्यजमानस्य वि**

---

* ख पुस्तकेऽत्र "ते, इति। एतस्य मन्त्रस्य चरमपादेन सहोत्तरमन्त्रस्य प्रथमपादोच्चारण प्रशसति—'अर्धर्चौ स दधात्येष वा अरत्नि सामिधेनीना य एव वेदारत्नावेव भ्रातृव्य कुरुते' इति।" एतादृश पाठो दृश्यते, पर च केनचित्पण्डितमन्येन भाष्यकारदत्तेतद्व्याख्यावतरणाशयमज्ञात्वा पृथगवतरणिका प्रकल्प्य वाक्यभेद कृत । स चातीवासगत , पूर्ववाक्यायामपूर्त्यादिहेतो । अत सोऽपपाठ इति गूढार्थाभिज्ञैर्बोध्यम् ।

१ ख. °वावोप° ।

( होत्रविवक्षया सामिधेनीव्याख्यानम् )

तिष्ठेरन्नर्धर्चौ सं दधाति सं युनक्त्येवैनास्ता अस्मै संयुक्ता अवरुद्धाः सर्वामाशिषं दुह्रे॥,इति ॥

ऋषिरतीन्द्रियस्य द्रष्टा। तादृश ऋषिरेकैकां सामिधेनीमीश्वरानुग्रहेण दृष्ट्वा तत्संप्रदायपरम्परां निर्मितवान्।

अत एव स्मर्यते—

"युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा॥" इति॥

तथा सति भिन्नेभ्य ऋषिभ्यः प्रवर्तितास्ताः सामिधेन्यो यद्यसंयुक्ता भवेयुस्तदानीं यजमानस्य प्रजया पशुभिरेताः सामिधेन्यो वितिष्ठेरन्वियुक्तास्तिष्ठेयुः, प्रजापशुसमृद्धिहेतवो न भवेयुरित्यर्थः। तत्परिहाराय पूर्वस्याः सामिधेन्या उत्तरार्धमुत्तरस्याः सामिधेन्याः पूर्वार्धं च संदध्यात्। तथा सत्येनाः सामिधेनीः संयोजितवानेव भवति। न चैवमेकस्यामपि सामिधेन्यां पूर्वोत्तरार्धर्चौ संधातव्याविति शङ्कनीयम्। तयोरेकर्षिप्रवर्तितत्वेन होतृप्रयुक्तसंधानमन्तरेणापि स्वरूपतो वियोगाभावात्। यथोक्तरीत्या संयुक्तास्ताः सामिधेन्यो यजमानाय सर्वामाशिषं दुह्रे दुहन्ति संपादयन्ति॥

अथ मीमांसा।

नवमाध्यायस्य प्रथमपादे चिन्तितम्—

"त्रिरत्र किमृचो धर्मः स्थानधर्मोऽथवाऽऽदिमः।
स्त्रीलिङ्गत्वान्न तन्मातिपदिकप्रबलत्वतः॥"

दर्शपूर्णमासयोः सामिधेनीः प्रकृत्य श्रूयते—"त्रिः प्रथमामन्वाह" इति। सोऽयं त्रिरभ्यास आदौ पठितस्य प्र वो वाजा इत्यृग्विशेषस्य धर्मः। कुतः। प्रथमामित्यस्य स्त्रीलिङ्गत्वादृक्परत्वोपपत्तेरिति चेन्नैतद्युक्तम्। स्त्रीलिङ्गवाचिनष्टाप्प्रत्ययादपि पूर्वं पठितस्य स्थानवाचिनः प्रथमेत्यस्य प्रातिपदिकस्य प्रबलत्वात्। अतो विकृतिष्वप्यन्यस्या अप्यृचः प्रथमस्थानपठितायास्त्रिरभ्यासः कर्तव्यः। स्थानान्तरे पठितायाः प्र वो वाजा इत्यस्या अप्यृचो नाभ्यासः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

१ ख. °रनृचिर्ऋचौ।

( अथ द्वितीयाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः । )

अयंज्ञो वा एष योऽसामाऽग्न आ याहि वीतय इत्याह रथंतरस्यैष वर्णस्तं त्वा समिद्भिरङ्गिर इत्याह वामदेव्यस्यैष वर्णो बृहदग्ने सुवीर्यमित्याह बृहत एष वर्णो यदेतं तृचमन्वाह यज्ञमेव तत्सामन्वन्तं करोत्यग्निरमुष्मिँल्लोक आसीदादित्योऽस्मिन्ताविमौ लोकावशान्तौ ( १ ) आस्तां ते देवा अब्रुवन्नेतेमौ वि पर्यूहामेत्यग्न आ याहि वीतय इत्यस्मिँल्लोकेऽग्निमदधुर्बृहदग्ने सुवीर्यमित्यमुष्मिँल्लोक आदित्यं ततो वा इमौ लोकावशाम्यतां यदेवमन्वाहानयोर्लोकयोः शान्त्यै शाम्यतोऽस्मा इमौ लोकौ य एवं वेद पञ्चदश सामिधेनीरन्वाह पञ्चदश ( २ ) वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते तासां त्रीणि च शतानि षष्टिश्चाक्षराणि तावतीः संवत्सरस्य रात्रयोऽक्षरश एव संवत्सरमाप्नोति नृमेधश्च परुच्छेपश्च ब्रह्मवाद्यमवदेतामस्मिन्दारावार्द्रेऽग्निं जनयाव यतरो नौ ब्रह्मीयानिति नृमेधोऽभ्यवदत्स धूममजनयत्परुच्छे-

योऽभ्यवदत्सोऽग्निमजनयदेष इत्यब्रवीत् (३) यत्समावंदिद्व कथा त्वमग्निमजीजनो नाहमिति सामिधेनीनामिवाहं वर्णं वेदेत्यब्रवीद्यद्घृतवत्पदमनूच्यते स आसां वर्णस्तं त्वा समिद्भिरङ्गिर इत्याह सामिधेनीष्वेव तज्ज्योतिर्जनयति स्त्रियस्तेन यदृचः स्त्रियस्तेन यद्गायत्रियः स्त्रियस्तेन यत्सामिधेन्यो वृषण्वतीमन्वाह (४) तेन पुꣳस्वतीस्तेन सेन्द्रास्तेन मिथुना अग्निर्देवानां दूत आसीदुशना काव्योऽसुराणां तौ प्रजापतिं प्रश्नमैताꣳ स प्रजापतिरग्निं दूतं वृणीमह इत्यभि पर्यावर्तत ततो देवा अभवन्पराऽसुरा यस्यैवं विदुषोऽग्निं दूतं वृणीमह इत्यन्वाह भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यध्वरवतीमन्वाह भ्रातृव्यमेवैतया (५) ध्वरति शोचिष्केशस्तमीमह इत्याह पवित्रमेवैतद्यजमानमेवैतया पवयति समिद्धो अग्न आहुतेत्याह परिधिमेवैतं परि दधात्यस्कन्दाय यदतं ऊर्ध्वमभ्यादध्याद्यथा बहिःपरिधि स्कन्दति तादृगेव तत्त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणाꣳ स-

हरक्षा असुराणां त एतर्ह्यां शꣳ सन्ते मां वरिष्यते माम् ( ६ ) इति वृणीध्वꣳ हव्यवाहनमित्याह य एव देवानां तं वृणीत आर्षेयं वृणीते बन्धोरेव नैत्यथो संतत्यै परस्तादर्वाचो वृणीते तस्मात्परस्तादर्वाञ्चो मनुष्यान्पितरोऽनु प्र पिपते ( ७ ) ॥

( अशान्ताबाह पश्चदशाब्रवीदन्वाहितया वारिष्यते मामेकान्नत्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ द्वितीयाष्टके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः । )

अयंज्ञः । वै । एषः । यः । अमामा । अग्ने । एति । याहि । वीतये । इति । आह । रथंतरस्येति रथं—तरस्य । एषः । वर्णः । तम् । त्वा । समिद्भिरिति समित्—भिः । अङ्गिरः । इति । आह । वामदेव्यस्येति वाम—देव्यस्य । एषः । वर्णः । बृहत् । अग्ने । सुवीर्यमिति सु—वीर्यम् । इति । आह । बृहतः । एषः । वर्णः । यत् । एतम् । तृचम् । अन्वाहेत्यनु—आह । यज्ञम् । एव । तत् । सामन्वन्तमिति सामन्—वन्तम् । करोति । अग्निः । अमुष्मिन् । लोके । आसीत् । आदित्यः । अस्मिन् । तौ । इमौ ।

लोकौ । अशा॑न्तौ ( १ ) । आस्ताम् । ते । दे॒वाः । अब्रु॑वन् । एति॑ । इ॒त । इ॒मौ । वि । परी॑ति॑ । ऊ॒हाम । इति॑ । अग्ने॑ । एति॑ । या॒हि॒ । वी॒तये॑ । इति॑ । अ॒स्मिन् । लो॒के । अ॒ग्निम् । अ॒द॒धुः । बृ॒हत् । अग्ने॑ । सु॒वीर्य॒मिति॑ सु—वीर्य॑म् । इति॑ । अ॒मुष्मि॑न् । लो॒के । आ॒दि॒त्यम् । तत॑ः । वै । इ॒मौ । लो॒कौ । अ॒शाम्य॒ताम् । यत् । ए॒वम् । अ॒न्वा॒हेत्य॑नु—आह॑ । अ॒नयो॑ः । लो॒कयो॑ः । शान्त्यै॑ । शा॒म्य॑तः । अ॒स्मै । इ॒मौ । लो॒कौ । यः । ए॒वम् । वेद॑ । पञ्च॑द॒शेति॒ पञ्च॑—द॒श । सा॒मि॒धे॒नीरि॑ति॑ सा॒म्—इ॒धे॒नीः । अ॒न्वि॒ति॒ । आ॒ह॒ । पञ्च॑द॒शेति॒ पञ्च॑—द॒श (२) । वै । अ॒र्ध॒मा॒सस्ये॒त्य॑र्ध—मा॒सस्य॑ । रात्र॑यः । अ॒र्ध॒मा॒स॒श इ॒त्य॒र्ध॒मा॒स—शः । सं॒व॒त्स॒र इति॑ सं—व॒त्स॒रः । आ॒प्य॒ते । तासा॑म् । त्रीणि॑ । च॒ । श॒तानि॑ । ष॒ष्टिः । च॒ । अ॒क्षरा॑णि । ताव॑तीः । सं॒व॒त्स॒रस्येति॑ सं—व॒त्स॒रस्य॑ । रात्र॑यः । अ॒क्ष॒र॒श इ॒त्य॒क्षर—शः । ए॒व । सं॒व॒त्स॒रमिति॑ सं—व॒त्स॒रम् । आ॒प्नो॒ति॒ । नृमे॑ध इति॑ नृमे॑धः । च॒ । प॒रु॒च्छे॒पः । च॒ । ब्र॒ह्म॒वा॒द्यमिति॑ ब्र॒ह्म—वा॒द्य॑म् । अ॒व॒दे॒ताम् । अ॒स्मिन् । दारौ॑ । आ॒र्द्रे । अ॒ग्निम् । ज॒न॒या॒व॒ । य॒त॒रः । नौ॒ । ब्रह्मी॑यान् । इति॑ । नृमे॑ध इति॒ नृ—मे॑धः ।

अभीति॑ । अवदत् । सः । धूमम् । अजनयत् । परु॑च्छेपः । अभीति॑ । अवदत् । सः । अग्निम् । अजनयत् । ऋषे॑ । इति॑ । अब्रवीत् ( ३ ) । यत् । समाव॑त् । विद्म । कथा । त्वम् । अग्निम् । अजी॑जनः । न । अहम् । इति॑ । सामिधेनीनामिति॑ साम्—इधेनीना॑म् । एव । अहम् । वर्ण॑म् । वेद । इति॑ । अब्रवीत् । यत् । घृतवदिति॑ घृत—वत् । पदम् । अनूच्यत इत्य॑नु—उच्यते॑ । सः । आसाम् । वर्णः॑ । तम् । त्वा । समिद्भिरिति॑ समित्—भिः । अङ्गिरः । इति॑ । आह । सामिधेनीष्विति॑ साम्—इधेनीषु॑ । एव । तत् । ज्योतिः॑ । जनयति । स्त्रियः॑ । तेन॑ । यत् । ऋचः॑ । स्त्रियः॑ । तेन॑ । यत् । गायत्रियः॑ । स्त्रियः॑ । तेन॑ । यत् । सामिधेन्य॑ इति॑ साम्—इधेन्यः॑ । वृषण्वतीमिति वृषण्—वतीम् । अन्विति॑ । आह ( ४ ) । तेन॑ । पुंस्वतीः॑ । तेन॑ । सेन्द्रा इति स—इन्द्राः । तेन॑ । मिथुनाः । अग्निः । देवाना॑म् । दूतः । आसी॑त् । उशना॑ । काव्यः । असु॑राणाम् । तौ । प्रजाप॑तिमिति॑ प्रजा—पतिम् । प्रश्नम् । ऐताम् । सः । प्रजाप॑तिरिति॑ प्रजा—पतिः । अग्निम् । दूतम् । वृणीमहे । इति॑ । अभीति॑ । पर्याव॑र्ततेति॑ परि—आव॑र्त–

त। ततः। देवाः। अभवन्। परेति। असुराः। यस्य। एवम्। विदुषः। अग्निम्। दूतम्। वृणी-महे। इति। अन्वाहेत्यनु—आह। भवति। आत्मना। परेति। अस्य। भ्रातृव्यः। भवति। अध्वरवतीमि-त्यध्वर—वतीम्। अन्विति। आह। भ्रातृव्यम्। एव। एतया (५)। ध्वरति। शोचिष्केश इति शोचिः—केशः। तम्। ईमहे। इति। आह। पवित्रम्। एव। एतत्। यजमानम्। एव। एतया। पवयति। समिद्ध इति सम्—इद्धः। अग्ने। आहुतेत्या—हुत। इति। आह। परिधिमिति परि—धिम्। एव। एतम्। परीति। दधाति। अस्क-न्दाय। यत्। अतः। ऊर्ध्वम्। अभ्यादध्यादित्यभि—आदध्यात्। यथा। बहिःपरिधीति बहिः—परिधि। स्कन्दति। तादृक्। एव। तत्। त्रयः। वै। अग्नयः। हव्यवाहन इति हव्य—वाहनः। देवानाम्। कव्यवाहन इति कव्य—वाहनः। पितृणाम्। सह-रक्षा इति सह—रक्षाः। असुराणाम्। ते। एतर्हि। एति। शꣳसन्ते। माम्। वरिष्यते। माम् (६)। इति। वृणीध्वम्। हव्यवाहनमिति हव्य—वाह-नम्। इति। आह। यः। एव। देवानाम्। तम्।

वृणीते । आर्षेयम् । वृणीते । बन्धोः । एव । न । एति ।
अथो इति । संतत्या इति सम्—तत्यै । परस्तात् ।
अर्वाचः । वृणीते । तस्मात् । परस्तात् । अर्वाञ्चः ।
मनुष्यान् । पितरः । अनु । प्रेति । पिपते ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके
पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

( अथ द्वितीयकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः । )

सप्तमे सामिधेन्याद्या व्याख्याताऽत्यन्तविस्तरात् ॥

अथाष्टमेऽवशिष्टाः सामिधेन्यो व्याख्यायन्ते ।

तत्र द्वितीया सामिधेनी मन्त्रकाण्ड एव पठिता—

"अग्न आ याहि वीतये । गृणानो हव्यदातये । नि होता सत्सि बर्हिषि।" [ ब्रा० का० ३ प्र० ५ अ० २ ] इति ।

हेऽग्ने हव्यदातये यजमानस्य हविर्दानाय वीतये देवानां हविर्भक्षणाय गृणानो यजमानो देवानां हविर्दास्यतीति भवद्भिर्भक्षणीयमिति वदन्नायाहि । आगत्य च होताऽऽह्वाता भवन्बर्हिषि यज्ञे निषत्सि निषीद ॥

तृतीयसामिधेनीपाठस्तु—

" तं त्वा समिद्भिरङ्गिरः । घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य । " [ ब्रा० का० ३ प्र० ५ अ० २ ] इति ।

हेऽङ्गिरोऽग्ने तं त्वा तादृशं देवानामाह्वातारं त्वां समिद्भिर्घृतेन च वर्धयामः । हे यविष्ठ्य युवतम बृहज्ज्वालाधिक्यं यथा भवति तथा शोच दीप्यस्व ॥

चतुर्थसामिधेनीपाठस्तु—

" स नः पृथु श्रवाय्यम् । अच्छा देव विवासासि । बृहदग्ने सुवीर्यम् । " [ ब्रा० का० ३ प्र० ५ अ० २ ] इति ।

हेऽग्ने देव स त्वं नोऽस्मदर्थं पृथु विस्तीर्णं श्रवाय्यं देवैः श्रोतुं योग्यमिदं कर्माच्छाभिमुखीकृत्य बृहत्सुवीर्यं च यथा भवति तथा विवासासि विभातं

कुरु प्रकाशयेत्यर्थः। बृहच्छब्देन ज्वालाधिक्यं विवक्षितम्। सुवीर्यशब्देन हूयमानस्य हविषः सम्यग्दहनसामर्थ्यमुच्यते॥

पञ्चमसामिधेनीपाठस्तु—

"ईडेन्यो नमस्यस्तिरः। तमाꣳसि दर्शतः। समग्निरिध्यते वृषा।" [ब्रा० का० ३ प्र० ५ अ० २] इति।

अयमग्निः सम्यगिध्यते। कीदृशः, ईडेन्यः स्तोतुं योग्यः, नमस्यो नमस्कारयोग्यः, तमांसि तिरस्कुर्वन्दर्शतः पदार्थानामादर्शयिता, वृषा कामानां वर्षयिता॥

षष्ठसामिधेनीपाठस्तु—

"वृषो अग्निः समिध्यते। अश्वो न देववाहनः। तꣳ हविष्मन्त ईडते।" [ब्रा० का० ३ प्र० ५ अ० २] इति।

अयमग्निः सम्यगिध्यते। कीदृशः, वृषः कामानां वर्षयिता। अश्वो न देववाहनोऽश्व इव देवार्थस्य हविषो वोढा। तमिममग्निं हविष्मन्तो यजमानाः स्तुवते॥

सप्तमसामिधेनीपाठस्तु—

"वृषणं त्वा वयं वृषन्। वृषाणः समिधीमहि। अग्ने दीद्यतं बृहत्।" [ब्रा० का० ३ प्र० ५ अ० २] इति।

हे वृषन्कामानां वर्षकाग्ने वृषणं कामानां वर्षितारं त्वां वृषाणो वयमाहुतिवृष्टिं कुर्वन्तो वयं समिधीमहि सम्यक्प्रकाशयामः। कीदृशं त्वां, बृहद्दीद्यतं प्रौढज्वालं यथा भवति तथा दीप्यमानम्॥

अष्टमसामिधेनीपाठस्तु—

"अग्निं दूतं वृणीमहे। होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुम्।" [ब्रा० का० ३ प्र० ५ अ० २] इति।

इममग्निं वयं वृणीमहे प्रार्थयामहे। कीदृशं, दूतं देवान्प्रति प्रेषणार्हं, होतारमाह्वातारं, विश्ववेदसं विश्वान्सर्वान्देवान्वेत्तीति विश्ववेदास्तादृशम्। अस्य यज्ञस्य संबन्धिनं सुक्रतुं शोभनकर्माणम्॥

नवमसामिधेनीपाठस्तु—

"समिध्यमानो अध्वरे। अग्निः पावक ईड्यः। शोचिष्केशस्तमीमहे।" [ब्रा० का० ३ प्र० ५ अ० २] इति।

योऽग्निरध्वरेऽस्मिन्कर्मणि समिध्यमानः पावकः शुद्धिहेतुरीड्यः स्तुत्यः शोचीषि दीप्तयः केशस्थानीया यस्यासौ शोचिष्केशस्तमग्निमीमहे याचामः॥

दशमसामिधेनीपाठस्तु—

" समिद्धो अग्न आहुत । देवान्यक्षि स्वध्वर । त्वꣳ हि हव्यवाडसि । " [ ब्रा० का० ३ प्र० ५ अ० २ ] इति ।

हे आहुताऽऽहुत्याराधिताग्ने त्वं समिद्धः सन्देवान्यक्षि यजसि । हे स्वध्वर सुष्ठुनिष्पादितयाग हि यस्मात्त्वं हव्यवाडसि तस्माद्यजेत्यन्वयः ॥

एकादशसामिधेनीपाठस्तु—

" आजुहोत दुवस्यत । अग्निं प्रयत्यध्वरे । वृणीध्वꣳ हव्यवाहनम् । " [ब्रा० का० ३ प्र० ५ अ० २ ] इति ।

हे यजमाना इममग्निमाहुतिभिराजुहोत प्रीणयत, दुवस्यत परिचरत, प्रयति प्रयत्नेन वर्तमानेऽस्मिन्नध्वरे यागे हव्यवाहनमग्निं वृणीध्वं प्रार्थयध्वम् । अनया सामिधेनीनां परिसमाप्यमानत्वादियं परिधानीया । तत्र पुरुषभेदेनान्या परिधानीया विकल्पते । तथा च सूत्रकारः—" त्वं वरुण इति वसिष्ठराजन्यानां परिधानीया, आजुहोतेतीतरेषां गोत्राणाम् " इति ॥

विकल्पितायाः पाठस्तु—

"त्वं वरुण उत मित्रो अग्ने । त्वां वर्धन्ति मतिभिर्वसिष्ठाः । त्वे वसु सुषणनानि सन्तु । यूयं पात स्वस्तिभिः सदा नः । " [ ब्रा० का० ३ प्र० ५ अ० २ ] इति ।

हेऽग्ने त्वमनिष्टनिवारकत्वाद्वरुण इष्टप्रापकत्वान्मित्रश्च । वसिष्ठगोत्रीया मतिभिर्मनीषाभिः स्तुतिभिर्वर्धन्ति वर्धयन्ति त्वाम् । त्वे त्वयि वसु धनं सुषणनानि सुष्ठु दातव्यानि हवींषि च सन्तु तिष्ठन्तु । यूयं च नोऽस्मान्स्वस्तिभिः सदा पात रक्षत । यूयमिति बहुवचनं पूजार्थम् ॥

आसु सामिधेनीषु द्वितीयादिचतुर्थ्यन्तं तृचं प्रशंसति—

अयज्ञो वा एष योऽसामाऽग्न आ याहि वीतय इत्याह रथंतरस्यैष वर्णस्तं त्वा समिद्भिरङ्गिर इत्याह वामदेव्यस्यैष वर्णो बृहदग्ने सुवीर्यमित्याह बृहत एष वर्णो यदेतं तृचमन्वाह यज्ञमेव तत्सामन्वन्तं करोति, इति ।

दर्शपूर्णमासयोः सामानि न सन्ति । तद्रहितश्च न मुख्ययज्ञः । अतोऽयं

---

१ ख 'म्निमाजुहोताऽऽहुतिभि प्रा' । २ ख 'कल्प्यते ।

तृचः सामत्रयस्वरूपत्वेनात्र पठ्यते। यद्यप्येता ऋचो रथंतरादीनां योनयो न भवन्ति तथाऽपि स्तुतित्वात्तद्रूपत्वमविरुद्धम्। शाखान्तरे वा तास्वृक्षु गीतानि सामानि द्रष्टव्यानि। एतेन तृचपाठेन दर्शपूर्णमासयज्ञं सामवन्तं करोति। बृहदग्न इति तृतीयपादोपादान बृहत्सामद्योतकस्य बृहच्छब्दस्य प्रदर्शनार्थम्॥

अस्मिन्नेव तृच आद्यन्तौ पुनः प्रशंसति—

अग्निरमुष्मिँल्लोक आसीदादित्योऽस्मिन्ताविमौ लोकावशान्तावास्तां ते देवा अब्रुवन्नेतेमौ वि पर्यूहामेत्यग्न आ याहि वीतय इत्यस्मिँल्लोकेऽग्निमदधुर्बृहदग्ने सुवीर्यमित्यमुष्मिँल्लोक आदित्यं ततो वा इमौ लोकावशाम्यतां यदेवमन्वाहानयोर्लोकयोः शान्त्यै शाम्यतोऽस्मा इमौ लोकौ य एवं वेद, इति।

पुरा स्वर्गलोकेऽग्निः स्थित आदित्यस्तु भूलोके। तदानीं लोकद्वयमशान्तं क्षुब्धमासीत्। स्वर्गे ह्यमृतसेविनां पाकापेक्षा नास्ति। प्रकाशाय केवलमादित्योऽपेक्षित एव। भूलोकवासिनां तु पाको मुख्यं प्रयोजनम्। तदुभयासिद्धेर्लोकक्षोभः। तं क्षोभं दृष्ट्वा ते देवाः परस्परमिदमूचुः—इमावग्न्यादित्यौ विपर्यूहाम विपरिवृत्तौ स्थापयाम। तस्मादेते सर्वे यूयमागच्छतेति। अग्न आयाहीत्यस्यामृचि बर्हिषि निषीदेति लिङ्गादृचः प्राथम्याच्च प्रथमलोके स्थापनं तया संपद्यते। बृहदग्ने सुवीर्यमित्यस्यामृचि विवासिसीति विभातत्वोक्तिलिङ्गादृचस्तृतीयत्वाच्चास्यास्तृतीयलोके स्थापनहेतुत्वं गम्यते। यद्यप्यादित्यो नास्मिन्मन्त्रे श्रुतस्तथाऽप्युच्चैःस्थानवृत्तित्वकारित्वेन विभातत्वेनाऽऽदित्यः श्रूयते। किं च, हंसमन्त्रावसान ऋतं बृहदित्यादित्यमण्डलपरत्वेन श्रुतो बृहच्छब्दोऽत्रापि श्रूयमाण आदित्यस्य प्रत्यभिज्ञापकः। तस्मात्तेन मन्त्रेणाऽऽदित्यस्थापनं सिध्यति। अनयोर्विपर्यावृत्त्या लोकयोः स्वस्वकार्यसिद्धेर्युक्ता शान्तिः। तस्मादनेन क्रमेण पाठो लोकयोः शान्त्यै भवति। तद्वेदितुश्च तदुभयशान्तिर्भवति॥

१ क घ ङ च भूतानि। २ क घ ङ च °सेवनात्पाका°। ३ ख. °थाऽपि तृच-स्थानवर्ति व°। ४ ख. °दित्या सूच्यन्ते। क.।

संख्यां विधत्ते—

पञ्चदश सामिधेनीरन्वाह पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासमशः संवत्सर आप्यते, इति।

यद्यपि द्वादश पठितास्तथाऽप्येकादशैव । एकस्याः पुरुषभेदेन विकल्पितत्वात् । तासु च प्रथमोत्तमयोस्त्रिरावृत्त्या पञ्चदशत्वसंपत्तिः । अर्धमासस्य रात्रीणां पञ्चदशत्वात्तद्रूपत्वमपि संपद्यते । एकैकस्मिन्नर्धमासे पञ्चदशस्वन्तर्भूतासु तासामर्धमासानां चतुर्विंशतिवारमावृत्त्या संवत्सरप्राप्तिश्च संपद्यते ॥

इदानीमक्षरसंख्यां संवत्सरसंपत्त्या प्रशंसति—

तासां त्रीणि च शतानि षष्टिश्चाक्षराणि तावतीः संवत्सरस्य रात्रयोऽक्षरश एव संवत्सरमाप्नोति, इति।

तासां सामिधेनीनां पञ्चदशसंख्यानां गायत्रीछन्दस्कत्वादेकैका चतुर्विंशत्यक्षरा । तथा सति मिलित्वाऽक्षरसंख्या संवत्सररात्रिसंख्या च समेति कृत्वाऽक्षरद्वारा तदेवं संवत्सरप्राप्तिर्भवति । यद्यपि वासिष्ठानां परिधानीयायास्त्रिष्टुप्त्वादधिकान्यक्षराणि तथाऽपीतरगोत्रापेक्षयाऽयमर्थवाद इत्यविरोधः ॥

आसु सामिधेनीषु "तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि" इत्येतं मन्त्रविशेषं प्रशंसति—

नृमेधश्च परुच्छेपश्च ब्रह्मवाद्यमवदेतामस्मिन्दारावार्द्रेऽग्निं जनयाव यतरो नौ ब्रह्मीयानिति नृमेधोऽभ्यवदत्स धूममजनयत्परुच्छेपोऽभ्यवदत्सोऽग्निमजनयदृष इत्यब्रवीद्यत्समावद्विद्व कथा त्वमग्निमजीजनो नाहमिति सामिधेनीनामेवाहं वर्णं वेदेत्यब्रवीद्यद्घृतवत्पदमनूच्यते स आसां वर्णस्तं त्वा समिद्भिरङ्गिर इत्याह सामिधेनीष्वेव तज्ज्योतिर्जनयति, इति।

नृमेधपरुच्छेपनामानावृत्विजौ परस्परं ब्रह्मवाद्यमवदेतां मन्त्रसामर्थ्यविषयं वादमकुरुताम् । तत्रानयोरियं प्रतिज्ञा—आवयोरुभयोर्मध्ये यतरो ब्रह्मीयान्ब्रह्मणि सामिधेनीमन्त्रेऽत्यन्तं कुशलस्तादृशं निश्चेतुं स्वस्वमनसि सामिधेनी-

१ ख ॰र्वर्षा प॰ । २ ख ॰थ सवा॰ ।

मन्त्रमनुस्मरन्तावस्मिन्नार्द्रे काष्ठे मथनेनाग्निं जनयावेति । तदा प्रथमं नृमेध आर्द्रं काष्ठमभिलक्ष्य मन्त्रमवदत् । स तन्मन्त्रसामर्थ्याद्धूममुत्पादितवान् । परुच्छेपो मन्त्रं पठित्वाऽग्निमजनयत् । तदिदानीं नृमेधः परुच्छेपं प्रति हे ऋषे त्वमतीन्द्रियद्रष्टाऽसीत्यभिप्रेत्य संबोधितवान् । संबोध्य चैवं पप्रच्छ—यस्मात्कारणात्समावद्विद्वाऽऽवयोः सामिधेनीवेदनं समानमेव, तथा सति कथं त्वमग्निमुत्पादितवान्न त्वहमिति । तत्र परुच्छेप उत्तरमुवाच—यद्यप्यावयोः सामिधेनीपाठस्तदर्थज्ञानं च समानं तथाऽप्यहं तासामेव सामिधेनीनां वर्णं रहस्यं तेजो वेद त्वं तु न वेत्सि । किं तत्तेज इति तदुच्यते—घृतशब्दोपेतः पादोऽनूच्यत इति सोऽयमनूच्यमानः पादः सामिधेनीनां वर्णः सारभूतं तेजः । स पादः कस्यामृचि वर्तत इति चेत्तदुच्यते—"तं त्वा समिद्भिरङ्गिरः" इत्येतामृचं पठेत् । तस्यामृचि "घृतेन वर्धयामसि" इत्ययं पादो वर्तते । ततोऽनेन पठितेन पादेन सामिधेनीष्वेव ज्योतिर्जनयति । तेन त्वं पादं पठन्नपि महिमानं न जानासि । अहं तु जानामि । तस्मादार्द्रकाष्ठे मयाऽग्निरुत्पादितः ॥

वृषणं त्वा वयमित्येतामृचं विशेषतः प्रशंसति—

स्त्रियस्तेन यदृचः स्त्रियस्तेन यद्गायत्रियः स्त्रियस्तेन यत्सामिधेन्यो वृषण्वतीमन्वाह तेन पुꣳस्वतीस्तेन सेन्द्रास्तेन मिथुनाः, इति ।

ऋग्गायत्रीसामिधेनीशब्दैः स्त्रीलिङ्गैरभिधीयमानत्वात्स्त्रीत्वमेव । अतः पुरुषत्वाय वृषन्शब्दवतीमृचं ब्रूयात् । तेन पाठेन पुंस्वतीः पुरुषवत्यः सेन्द्रा इन्द्रिययुक्ताः स्त्रीपुरुषमिथुनरूपाः संपद्यन्ते । ईडेन्य इत्येषाऽपि वृषण्वती । समग्निरिध्यते वृषेत्यन्ते पठितत्वात् । वृषो अग्निरित्येषाऽपि वृषशब्दोपेतत्वाद्वृषण्वती । तयोरप्येषा प्रशंसा द्रष्टव्या ॥

अथाग्निं दूतमित्येतामृचं विशेषतः प्रशंसति—

अग्निर्देवानां दूत आसीदुशना काव्योऽसुराणां तौ प्रजापतिं प्रश्नमैताꣳ स प्रजापतिरग्निं दूतं वृणीमह इत्यभि पर्यावर्तत ततो देवा अभवन्पराऽसुरा यस्यैवं विदुषोऽग्निं दूतं वृणीमह इत्यन्वाह भवत्यात्मना पराऽस्य भ्रातृव्यो भवति, इति ।

१ क. घ. ङ. च. ज. । क. । २ ख. 'पत्येण मि' ।

देवाः स्वकार्येष्वग्निं दूतत्वेन प्रेषयन्ति । असुरास्तु कवेः पुत्रमुशनसम् । तावुभावपि प्रजापतिमुपेत्य पृष्टवन्तौ—आवयोर्मध्ये संधिविग्रहादिकार्येषु कस्य दौत्यमुचितमिति । तदानीं प्रजापतिरग्निं दूतं वृणीमह इति मन्त्रेणोत्तरमुवाच । उक्त्वा चोशनसः सकाशात्पराहृत्याग्नेरभिमुखोऽभूत् । ततो देवानां विजयोऽभूदसुराश्च पराभूताः । एवं विदुषो यजमानस्याप्यनेन मन्त्रेण स्वविजयः शत्रुपराजयश्च भवति ॥

समिध्यमानो अध्वर इत्येतामृचं विशेषतः प्रशंसति—

अध्वरवतीमन्वाह भ्रातृव्यमेवैतया ध्वरति, इति ।

हिनस्तीत्यर्थः ॥

तस्यामृचि तृतीयपादं प्रशंसति—

शोचिष्केशस्तमीमह इत्याह पवित्रमेवैतद्यजमानमेवैतया पवयति, इति ।

मध्यपादेऽग्निः पावक ईड्य इति पावकशब्देनैव पवित्रत्वं विस्पष्टम् । अत्र शोचिःशब्देन शुचिहेतूनां रश्मीनामुक्तिमभिप्रेत्य पवित्रमेतद्वाक्यमित्यभिधीयते । तस्मादेतयर्चा यजमानमेव शोधयति । "समिद्धो अग्न आहुत" इत्येषा काचिदध्वरवती । देवान्यक्षि स्वध्वरेत्युक्तत्वात् । "आ जुहोत" इत्यसावप्यध्वरवती । अग्निं प्रयत्यध्वर इत्युक्तत्वात् । तयोरप्यृचोरुक्तप्रशंसा योजनीया । तदेवं सर्वासामृचां सामान्यतो विशेषतश्च प्रशंसा दर्शिता ॥

यदुक्तं सूत्रकारेण—" समिद्धो अग्न आहुतेत्यभिज्ञायैकामनूयाजसमिधमवशिष्य सर्वमिध्मशेषमभ्यादधाति " इति, तदेतद्धृदि निधाय समिद्धो अग्न इति मन्त्रं पुनः प्रशंसति—

समिद्धो अग्न आहुतेत्याह परिधिमेवैतं परि दधात्यस्कन्दाय यदत ऊर्ध्वमभ्यादध्याद्यथा बहिःपरिधि स्कन्दति तादृगेव तत्, इति ।

समिद्धो अग्न इत्यनेन भूतार्थवाचिना क्तप्रत्ययेन सामिधेनीसाध्यस्याग्निसमिन्धनस्य समाप्तिः सूच्यते । परिसमाप्तये धीयमानः प्रक्षिप्यमाणः काष्ठविशेषः परिधिः । तथा सति समिद्ध इति समाप्तिसूचनादेतं मन्त्रं परिधित्वेन स्थापितवान्भवति । स च परिधिः प्रक्षिप्यमाणसमिधामस्कन्दायाविनाशाय

१ ख 'मिद्रशे' । २ ख च 'विनोक्त' । ३ क घ ङ च परिवर्त्ते ।

( हौत्रविवक्षयाऽवशिष्टसामिधेनीमन्त्रव्याख्यानम् )

भवति । यद्येतस्मान्मन्त्रपाठादूर्ध्वमाजुहोतेति मन्त्रे समिधोऽभ्यादध्यात् । यथाऽऽज्यपुरोडाशादिहविषः परिधेर्बहिः पतनं विनाशाय संपद्यते तादृगेव तद्द्रष्टव्यम् । एवं च प्रणवे प्रणवे समिधमादधातीति सूत्रकारेण प्रतिमन्त्रमवसानकालीने प्रणवे समिदाधानस्योक्तत्वात्समिद्ध इतिमन्त्रावसाने समिदेका स्वतः प्रक्षेपणीया प्राप्ता । आजुहोतेत्यस्य त्रिरावृत्त्या तिस्रः समिधस्तत्र प्रक्षेपणीयाः प्राप्ताः । तदेतच्चतुष्टयं समिद्धो अग्न इत्येतस्य पादस्य पाठकाल एव प्रक्षिपेदिति विधिरुन्नेयः ॥

चरमायामृचि हव्यवाहनमित्यग्निविशेषणं[1] प्रशंसति—

त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणाꣳ सहरक्षा असुराणां त एतर्ह्या शꣳसन्ते मां वरिष्यते मामिति वृणीध्वꣳ हव्यवाहनमित्याह य एव देवानां तं वृणीते , इति ।

देवादीनां संबन्धिनो हव्यवाहनादयोऽग्नयः प्रत्येकं मामेव वरिष्यत इत्येवमपेक्षन्ते । अतो देवा अग्नेरेवं[2]गुणसिद्ध्यर्थं हव्यवाहनं वृणीध्वमित्युच्यते ॥

यदुक्तमाश्वलायनेन—" सामिधेनीनामुत्तमेन प्रणवेनाग्ने महाँ असि ब्राह्मण भारतेति निगदेऽवसाय यजमानस्याऽऽर्षेयान्प्रवृणीते यावन्तः स्युः परं परं प्रथमम् " इति, तदेतद्विधत्ते—

आर्षेयं वृणीते बन्धोरेव नैत्यथो संतत्यै , इति ।

ऋषेरपत्यमार्षेयमात्मीयगोत्रर्षींस्तद्धितप्रत्ययान्तानामन्त्रितविभक्त्या यथाप्रवरं वृणीते । यथा, अग्ने महाँ असि ब्राह्मण भारत । भार्गवच्यावनाप्नवानौर्वजामदग्न्येति भृगुगोत्राणां पञ्चार्षेयः प्रवर इति । अनेन तत्तदपत्यतयाऽग्निरुपचर्यते । एवं वृणानः पुरुषो बन्धोर्भृग्वादेः[3] सकाशान्नैति नापगच्छति । अपि चेदमार्षेयवरणमस्य पुत्रादिसंतानाय भवति ॥

अस्मिन्वरणे प्रकारविशेषं विधत्ते—

परस्तादर्वाचो वृणीते तस्मात्परस्तादर्वाञ्चो मनुष्यान्पितरोऽनु प्र पिपते॥, इति ॥

वर्तमानं यजमानमपेक्ष्य पूर्वभावी यो गोत्रप्रवर्तकस्तमारभ्य तदपत्यपरम्परयाऽर्वाचो नीचान्वृणीते । तथैव पूर्वमुदाहृतं—भृगोरपत्यं च्यवनस्तस्यापत्य-

१ घ. ङ. न 'त्यग्नि विशेषेण प्र° । २ ख 'रेव वरण° । ३ क. घ. ङ. च. °ति । तास्मि° ।

मन्नवानस्तस्यापत्यमौर्वस्तस्यापत्यं जमदग्निस्तस्य संततिर्यजमान इति । तदे-
तदर्वाक्त्वम् । यस्माद्धोता पूर्वभाविनमारभ्यार्वाचो वृणीते तस्मादेव कारणा-
ल्लोकेऽपि पूर्वपूर्वभाविनः पितर उत्तरोत्तरभाविनः पुत्राननुक्रमेण पालयन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-
दीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठ-
केऽष्टमोऽनुवाकः ॥ ८ ॥

( अथ द्वितीयाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः । )

अग्ने महाꣳ असीत्याह महान्ह्येष यदग्नि-
र्ब्राह्मणेत्याह ब्राह्मणो ह्येष भारतेत्याहैष हि
देवेभ्यो हव्यं भरति देवेद्ध इत्याह देवा ह्येत-
मैन्धत मन्विद्ध इत्याह मनुर्ह्येतमुत्तरो देवेभ्य
ऐन्धर्षिष्टुत इत्याहर्षयो ह्येतमस्तुवन्विप्रानुम-
दित इत्याह ( १ ) विप्रा ह्येते यच्छुश्रुवाꣳसः
कविशस्त इत्याह कवयो ह्येते यच्छुश्रुवाꣳसो
ब्रह्मसꣳशित इत्याह ब्रह्मसꣳशितो ह्येष घृताह-
वन इत्याह घृताहुतिर्ह्यस्य प्रियतमा प्रणीर्य-
ज्ञानामित्याह प्रणीर्ह्येष यज्ञानाꣳ रथीरध्वरा-
णामित्याहैष हि देवरथोऽतूर्तो होतेत्याह न
ह्येतं कश्चन ( २ ) तरति तूर्णिर्हव्यवाडित्याह
सर्वꣳ ह्येष तरत्यास्पात्रं जुहूर्देवानामित्याह
देवानां चमसो देवपान इत्याह

चमसो ह्येष देवपानोऽशः इवाग्ने नेमिर्देवाः-
स्त्वं परिभूरसीत्याह देवान्ह्येष परिभूर्यद्ब्रूयादा
वह देवान्देवयते यजमानायेति भ्रातृव्यमस्मै
( ३ ) जनयेदा वह देवान्यजमानायेत्याह
यजमानमेवैतेन वर्धयत्यग्निमग्न आ वह
सोममा वहेत्याह देवता एव तद्यथापूर्वमुप
ह्वयत आ चाग्ने देवान्वह सुयजा च यज
जातवेद इत्याहाग्निमेव तत्सः श्यति सोऽस्य
सःशितो देवेभ्यो हव्यं वहत्यग्निर्होता ( ४ )
इत्याहाग्निर्वै देवानाः होता य एव देवानाः
होता तं वृणीते स्मो वयमित्याहाऽऽत्मानमेव
सत्त्वं गमयति साधु ते यजमान देवतेत्याहाऽऽ-
शिषमेवैतामा शास्ते यद्ब्रूयाद्योऽग्निः होता-
रमवृथा इत्यग्निनोभयतो यजमानं परि गृह्णी-
यात्प्रमायुकः स्याद्यजमानदेवत्या वै जुहूर्भ्रातृ-
व्यदेवत्योपभृद्‌ ( ५ ) यद्द्वे इव ब्रूयाद्भ्रातृ-
व्यमस्मै जनयेद्घृतवतीमध्वर्यो स्रुचमाऽस्यस्वे-
त्याह यजमानमेवैतेन वर्धयति देवायुवमित्याह
देवान्ह्येषाऽवति विश्ववारामित्याह विश्वः
ह्येषाऽवतीडामहै देवाः ईडेन्यान्नमस्याम नम-

स्यान्यजाम यज्ञियानित्याह मनुष्या वा ईडेन्याः पितरो नमस्या देवा यज्ञिया देवता एव तद्यथाभागं यजति ( ६ )॥

( विप्रानुमदित इत्याह चनास्मै होतोपभृद्देवता एव त्रीणि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ द्वितीयाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः । )

---

अग्ने । महान् । असि । इति । आह । महान् । हि । एषः । यत् । अग्निः । ब्राह्मण । इति । आह । ब्राह्मणः । हि । एषः । भारत । इति । आह । एषः । हि । देवेभ्यः । हव्यम् । भरति । देवेद्ध इति देव—इद्धः । इति । आह । देवाः । हि । एतम् । ऐन्धत । मन्विद्ध इति मनु—इद्धः । इति । आह । मनुः । हि । एतम् । उत्तर इत्युत्—तरः । देवेभ्यः । ऐन्ध । ऋषिष्टुत इत्यृषि—स्तुतः । इति । आह । ऋषयः । हि । एतम् । अस्तुवन् । विप्रानुमदित इति विप्र—अनुमदितः । इति । आह ( १ ) । विप्राः । हि । एते । यत् । शुश्रुवांसः । कविशस्त इति कवि—शस्तः । इति । आह । कवयः । हि । एते । यत् ।

शुश्रुवाꣳसः। ब्रह्मसꣳशित इति ब्रह्म—सꣳशितः।
इति। आह। ब्रह्मसꣳशित इति ब्रह्म—सꣳशितः।
हि। एषः। घृताहवन इति घृत—आहवनः। इति।
आह। घृताहुतिरिति घृत—आहुतिः। हि। अस्य।
प्रियतमेति प्रिय—तमा। प्रणीरिति प्र—नीः। यज्ञानाम्। इति। आह। प्रणीरिति प्र—नीः। हि।
एषः। यज्ञानाम्। रथीः। अध्वराणाम्। इति।
आह। एषः। हि। देवरथ इति देव—रथः। अतूर्तः। होता। इति। आह। न। हि। एतम्। कः।
चन (२)। तरति। तूर्णिः। हव्यवाडिति हव्य—वाट्। इति। आह। सर्वम्। हि। एषः। तरति।
आस्पात्रम्। जुहूः। देवानाम्। इति। आह। जुहूः।
हि। एषः। देवानाम्। चमसः। देवपान इति
देव—पानः। इति। आह। चमसः। हि। एषः।
देवपान इति देव—पानः। अरान्। इव। अग्ने।
नेमिः। देवान्। त्वम्। परिभूरिति परि—भूः।
असि। इति। आह। देवान्। हि। एषः। परिभूरिति परि—भूः। यत्। ब्रूयात्। एति। वह।
देवान्। देवयत इति देव—यते। यजमानाय।
इति। भ्रातृव्यम्। अस्मै (३)। जनयेत्। एति।

वह । देवान् । यजमानाय । इति । आह । यजमानम् । एव । एतेन । वर्धयति । अग्निम् । अग्ने । एति । वह । सोमम् । एति । वह । इति । आह । देवताः । एव । तत् । यथापूर्वमिति यथा—पूर्वम् । उपेति । ह्वयते । एति । च । अग्ने । देवान् । वह । सुयजेति सु—यज । च । यज । जातवेद इति जात—वेदः । इति । आह । अग्निम् । एव । तत् । समिति । श्यति । सः । अस्य । सꣳशित इति सं—शितः । देवेभ्यः । हव्यम् । वहति । अग्निः । होता ( ४ ) । इति । आह । अग्निः । वै । देवानाम् । होता । यः । एव । देवानाम् । होता । तम् । वृणीते । स्मः । वयम् । इति । आह । आत्मानम् । एव । सत्त्वमिति सत्—त्वम् । गमयति । साधु । ते । यजमान । देवता । इति । आह । आशिषमित्या—शिषम् । एव । एताम् । एति । शास्ते । यत् । ब्रूयात् । यः । अग्निम् । होतारम् । अवृथाः । इति । अग्निना । उभयतः । यजमानम् । परीति । गृह्णीयात् । प्रमायुक इति प्र—मायुकः । स्यात् । यजमानदेवत्येति यजमान—देवत्या । वै । जुहूः । भ्रातृव्यदेवत्येति भ्रातृव्य—देवत्या । उपभृदित्युप—

भूत् (५)। यत्। द्वे इति। इव। ब्रूयात्। भ्रातृव्यम्। अस्मै। जनयेत्। घृतवतीमिति घृत-वतीम्। अध्वर्यो इति। स्रुचम्। एति। आस्यस्व। इति। आह। यजमानम्। एव। एतेन। वर्धयति। देवायुवमिति देव-युवम्। इति। आह। देवान्। हि। एषा। अवति। विश्ववारामिति विश्व-वाराम्। इति। आह। विश्वम्। हि। एषा। अवति। ईडामहै। देवान्। ईडेन्यान्। नमस्याम। नमस्यान्। यजाम। यज्ञियान्। इति। आह। मनुष्याः। वै। ईडेन्याः। पितरः। नमस्याः। देवाः। यज्ञियाः। देवताः। एव। तत्। यथाभागमिति यथा-भागम्। यजति (६)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

(अथ द्वितीयकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः।)

द्वितीयाद्याः सामिधेन्यो व्याख्याता अष्टमे स्फुटम् ॥

अथ नवमे प्रवरमन्त्रस्य निगदस्य स्रुगादापननिगदस्य च व्याख्यानं प्रवर्तते। ते च निगदादयो मन्त्रकाण्डे समाम्नाताः।

कल्पः—"अथ निवित्पदान्यन्वाह देवेद्धो मन्विद्ध इति सप्तमे स्वनिति अथ चतसृषु" इति।

पाठस्तु—

"अग्ने महाँ असि ब्राह्मण भारत। असावसौ। देवेद्धो मन्विद्धः।

ऋषिष्टुतो विप्रानुमदितः। कविशस्तो ब्रह्मसꣳशितो घृताहवनः। प्रणीर्यज्ञानाम्। रथीरध्वराणाम्। अतूर्तो होता। तूर्णिर्हव्यवाट्। आस्पात्रं जुहूर्देवानाम्। चमसो देवपानः। अराꣳ इवाग्ने नेमिर्देवाꣳस्त्वं परिभूरसि। आवह देवान्यजमानाय।" [ ब्रा० का० ३ प्र० ५ अ० ३ ] इति।

अत्राग्ने महानित्यारभ्यासावसावित्यन्तः प्रवरमन्त्रः। अवशिष्टा निविन्मन्त्राः। तेषामर्थं ब्राह्मणव्याख्यानमुखेनैव स्पष्टी करिष्यामः॥

तत्र प्रवरमन्त्रार्थं दर्शयति—

अग्ने महाꣳ असीत्याह महान्ह्येष यदग्निर्ब्राह्मणेत्याह ब्राह्मणो ह्येष भारतेत्याहैष हि देवेभ्यो हव्यं भरति, इति।

अग्निरिति यदेष यस्मात्सर्वाहुत्याधारत्वेन महांस्तस्मान्मन्त्रे महानसीत्युच्यते। यस्माद्ब्राह्मणवर्णाभिमानी तस्माद्ब्राह्मणेति संबोध्यते। यस्मादेष देवेभ्यो हव्यं भरति धारयति तस्माद्भारतेति संबोध्यते। मन्त्रे येयमसावसाविति वीप्सा तेन(तया) भृग्वादीनामृषीणां नामनिर्देशोऽभिप्रेतः। स च भार्गवच्यावनेत्यादिना पूर्वानुवाक एवास्माभिरुदाहृतः॥

निवित्पदेषु सप्तसु प्रथमस्यार्थं दर्शयति—

देवेद्ध इत्याह देवा ह्येतमैन्धत, इति।

यस्माद्देवाः स्वकीयेषु यागेष्वेतमग्निमैन्धत प्रज्वलितवन्तस्तस्माद्देवेद्ध इत्युच्यते॥

द्वितीयपदस्यार्थं दर्शयति—

मन्विद्ध इत्याह मनुर्ह्येतमुत्तरो देवेभ्य ऐन्ध, इति।

देवेभ्य उत्तरो देवैरिन्धनादूर्ध्वं स्वकीययागे मनुरैन्ध॥

उत्तरेष्वपि पञ्चसु पदेषु प्रसिद्धार्थतां हिशब्दो द्योतयति—

ऋषिष्टुत इत्याहर्षयो ह्येतमस्तुवन्विप्रानुमदित इत्याह विप्रा ह्येते यच्छुश्रुवाꣳसः कविशस्त इत्याह कवयो ह्येते यच्छुश्रुवाꣳसो ब्रह्मसꣳशित इत्याह ब्रह्मसꣳशितो ह्येष घृताहवन इत्याह घृताहुतिर्ह्यस्य प्रियतमा, इति।

( प्रवरमन्त्रस्य निगदस्य सुगादापननिदगस्य च व्याख्यानम् )

शुश्रुवांसः श्रुताध्ययनसंपन्ना जात्या विप्रा विद्यया विबुधाः कवयश्च भवन्ति तैरयमनुमदितस्तोषितः शस्तः स्तुतश्च । ब्रह्मणा मन्त्रेण संशितस्तीक्ष्णीकृतः। घृतरूपमाहवनमाहुतिर्यस्यासौ घृताहवनः ॥

अनुच्छ्वासेन पठनीयानां सप्तपदानामर्थं दर्शयित्वोच्छ्वासादूर्ध्वं पठनीयानां चतसृणां निविदामर्थं दर्शयति—

प्रणीर्यज्ञानामित्याह प्रणीर्ह्येष यज्ञानाꣳ रथीरध्वराणामित्याहैष हि देवरथोऽतूर्तो होतेत्याह न ह्येतं कश्चन तरति तूर्णिर्हव्यवाडित्याह सर्वꣳ ह्येष तरति, इति।

यज्ञानां नेतृत्वमग्नौ प्रसिद्धम् । रथीर्देवानां हविर्वहनायाध्वराणां संबन्धी रथोऽयमग्निः । यस्मादाह्वातारमेतमग्निं कोऽपि देवो न तरति नातिक्रामति तस्मादयमतूर्तो होतेत्युच्यते। यस्मात्सर्वमपि देवमयं हविर्वहनात्तरति प्राप्नोति तस्मात्तूर्णिर्हव्यवाडित्युच्यते ॥

एताभ्यश्चतसृभ्यो निविद्भ्य ऊर्ध्वमुच्छ्वासं कृत्वा पश्चात्पठनीयानां चतसृणां निविदामर्थं दर्शयति—

आस्पात्रं जुहूर्देवानामित्याह जुहूर्ह्येष देवानां चमसो देवपान इत्याह चमसो ह्येष देवपानोऽराꣳ इवाग्ने नेमिर्देवाꣳस्त्वं परिभूरसीत्याह देवान्ह्येष परिभूर्यद्ब्रूयादा वह देवान्देवयते यजमानायेति भ्रातृव्यमस्मै जनयेदा वह देवान्यजमानायेत्याह यजमानमेवैतेन वर्धयति, इति।

एषोऽग्निर्देवानां जुहूसदृशो जुहामिवास्मिन्हविष्प्रक्षेपात्। न चास्य दारुमयजुहूवच्छैथिल्यं, किं त्वास्पात्रं लोहपात्रवद्दृढमित्यर्थः । यथा मनुष्याणां सोमपानहेतुश्चमसस्तथा देवानां पानसाधनचमसस्थानीयोऽयमग्निः । हेऽग्ने त्वं यथा शकटचक्रस्थितान्कुलालचक्रस्थितान्वा तिर्यक्कीलरूपानरान्नेमिः परितो व्याप्नोति तथा देवानां परिभूः परितो व्याप्तवानासि । चतुर्थ्यां निविदि देवयत इति पदं शाखान्तरे पठ्यते । तदत्र यदि ब्रूयात्तदा होता यजमानस्य भ्रातृव्यं जनयेत्। देवानिच्छतीति देवयत्त(यंस्त) स्मै देवयते यजमानाय। एत-

१ क. घ. ङ. च. °ना होतं ।

त्पदप्रयोगेणान्यः कश्चिदेतदीयान्देवानिच्छतीति प्रतिभा भवति । तदेतद्भ्रातृव्यस्योत्पादनम् । तस्मात्तत्पदं परित्यज्यास्मै यजमानाय देवानावहेत्येतावदेव वाक्यशेषात्तेनैवैतेन यजमानं वर्धयति वृद्धिं प्रापयति ॥

कल्पः—" देवतां देवतामावाह्य व्यनित्यग्निमग्न आवह सोममावहाग्निमावह प्रजापतिमित्युपांश्वावहेत्युच्चैर्यदेवत्यो वा भवत्यग्नीषोमावावहेन्द्राग्नी आवहेन्द्रमावह महेन्द्रमावह देवाँ आज्यपाँ आवहाग्नि होत्रायाऽऽवह स्वं महिमानमावहेति न स्वं महिमानमावहेदा चाग्ने देवान्वह सुयजा च यज जातवेद इत्युक्त्वा " इति ।

अत्राऽऽवाहननिगदो मन्त्रकाण्डे समाम्नातः सर्वोऽपि सूत्रकारेण पठितः ।

( *तस्य सर्वस्य तात्पर्यं दर्शयति—

अग्निमग्न आवह सोममावहेत्याह देवता एव तद्यथापूर्वमुपह्वयते, इति ।

तत्तेनाऽऽवाहननिगद आवहेति पाठेनाऽऽज्यभागादिसर्वयागदेवता अनुक्रमेण ह्वयते । ) हे आहुत्याधारभूताग्ने प्रथमाज्यभागदेवतामग्निमावह । द्वितीयाज्यभागदेवं सोममावह । पौर्णमास्याममावास्यायां च प्रथमपुरोडाशदेवमग्निमावह । पौर्णमास्यामुपांशुयागदेवं प्रजापतिमावह । प्रजापतिपदं शनैरुच्चार्याऽऽवहेतिपदमुच्चैरुच्चारयेत् । पौर्णमास्यां द्वितीयपुरोडाशदेवमग्नीषोमरूपमावह । अमावास्यायामसंनाय्यिनो द्वितीयपुरोडाशदेवत्वेनेन्द्राग्नी आवह । अगतश्रियः सांनाय्यदेवमिन्द्रमावह । गतश्रियो महेन्द्रमावह । आज्यपान्प्रयाजानूयाजदेवानावह । अग्निं होत्राय होमस्य स्विष्टकरणाय । आवाहनविषयाणामुक्तानां देवानां यो यस्य देवस्य स्वकीयो महिमा सामर्थ्यातिशयस्तं महिमानमावह । अत्र हविर्भुज एव देवानभिप्रेत्य स्वं महिमानमित्युच्यते, न त्वावाहनकर्तुरग्नेर्महिमानं तस्याऽऽवाहनविषयत्वाभावात् , इति कल्पसूत्रस्यार्थः । जातानि वेदांसि ज्ञानानि यस्मादसौ जातवेदाः सर्वज्ञोऽयं सर्वदेवमहिमाभिज्ञत्वादित्यर्थः । तादृश हेऽग्ने त्वं देवानावह च सुयजा शोभनेन यज्ञेन यज च । न केवलमावाहनं कर्तव्यं किं तु हविष्प्रापणलक्षणो यागोऽपि त्वयैव कर्तव्यः । अत्र सूत्रे प्रजापतिमित्युपांश्वावहेत्युच्चैर्यदेवत्यो वा भवतीत्युक्तं तच्चोपांशुयाजे प्रजापतिविष्ण्वग्नीषोमाणां विकल्पाभिप्रायेण द्रष्टव्यम् ।

एतस्याऽऽवाहननिगदस्य तात्पर्यं संक्षेपेण दर्शयति—

* धनुश्चिह्नान्तर्गतो ग्रन्थोऽधिकः ।

१ ख °भाति । २ ख °नैव य° ।

(प्रवरमन्त्रस्य निगदस्य स्रुगादापननिगदस्य च व्याख्यानम्)

अग्निमग्न आ वह सोममा वहेत्याह देवता एव तद्यथापूर्वमुप ह्वयते, इति।

तत्तेनाऽऽवाहननिगदेनाऽऽज्यभागादिस्विष्टकृदन्तदेवताः सर्वाः क्रमेण हूतवान्भवति। प्रथमाज्यभागदेवौ तथा प्रधानदेवता इत्यादिक्रमो यथापूर्वमित्यादिनोच्यते॥

आवाहननिगदावसाने यदेतन्निगमनवाक्यं तस्य तात्पर्यं दर्शयति—

आ चाग्ने देवान्वह सुयजा च यज जातवेद इत्याहाग्निमेव तत्सꣳश्यति सोऽस्य सꣳशितो देवेभ्यो हव्यं वहति, इति।

तत्तेन वाक्यपाठेनाग्निमेव संश्यति तीक्ष्णी करोति। सोऽग्निस्तीक्ष्णीकृतोऽप्रमत्तः संस्तस्य यजमानस्य हव्यं देवेभ्यः क्रमेण वहति॥

कल्पः—" अथ स्रुगादापनेन स्रुचावादापयत्यग्निर्होता वेत्त्वित्यनुवाकेनाध्वर्युर्जुहूपभृतौ स्रुचावादत्ते " इति।

घृतवतीशब्दे जुहूपभृतावादायेत्याध्वर्यवसूत्रे दर्शितवान्। होता तु घृतवतीमध्वर्योः स्रुचमास्यस्वेत्यनेन शब्देन युक्तमनुवाकं पठति। तदिदं स्रुचोरादापनम्। सोऽयमनुवाको मन्त्रकाण्डे समाम्नातः।

तस्य पाठस्तु—

" अग्निर्होता वेत्त्वग्निः। होत्रं वेत्तु प्रावित्रम्। स्मो वयम्। साधु ते यजमान देवता। घृतवतीमध्वर्यो स्रुचमास्यस्व। देवायुवं विश्ववाराम्। ईडामहै देवाꣳ ईडेन्यान्। नमस्याम नमस्यान्। यजाम यज्ञियान्।" [ ब्रा० का० ३ प्र० ५ अ० ४ ] इति।

अयमग्निर्होता होमस्य कर्ता। तथा चान्यत्र मन्त्रब्राह्मण आम्नातम्—" अग्ने यष्टरिदं नम इत्याह। अग्निर्वै देवानां यष्टा " इति। अतोऽयमग्निर्वेत्तु होमक्रमं जानातु। तदेव वेदनमुत्तरवाक्येन ( ण ) स्पष्टी क्रियते। प्रकृष्टमवित्रं फलदानरूपमस्मद्रक्षणं यस्मिन्होमानुष्ठाने तदिदं प्रावित्रम्। तादृशं होत्रं होमानुष्ठानं वेत्तु होमक्रमं जानातु। न केवलं दैव्यस्य होतुरग्नेरुपरि भारः प्रक्षिप्यते किं तु वयं स्मो मनुष्यहोतारो वयमप्यत्र वर्तामहे। अतो वयमपि होमक्रमज्ञानवन्तस्तिष्ठामः। हे यजमान ते तव हविःस्वीकर्त्री देवता साधु फलं ददात्विति शेषः। हेऽध्वर्यो घृतपूर्णां स्रुचं जुह्वास्यस्वाऽऽक्षिप स्वी

१ ङ °र्मणाऽऽह°।

कुर्वित्यर्थः । कीदृशीं स्रुचं, देवायुवं देवान्याति मिश्रयतीति देवायुस्तादृशीम् । विश्ववारां विश्वान्सर्वान्राक्षसकृतान्विघ्नान्वारयतीति विश्ववारा तादृशीम् । ईडेन्यान्स्तुतिप्रियान्मनुष्यान्वयं स्तुमः । नमस्यान्नमस्कारप्रियान्पितॄन्नमस्कुर्मः । यज्ञियान्यज्ञप्रियान्देवान्यजाम ॥

अग्नेर्होतृत्वं वेदेषु प्रसिद्धमित्येतद्दर्शयति—

अग्निर्होतेत्याहाग्निर्वै देवानाꣳ होता य एव देवानाꣳ होता तं वृणीते, इति ॥

दैव्यस्य होतुः साहाय्यमाचरितुं मानुषस्य स्वस्य सद्भाव इत्येतद्दर्शयति—

स्मो वयमित्याहाऽऽत्मानमेव सत्त्वं गमयति, इति ॥

ददात्वित्येतादृशेनाऽऽशीरर्थेन वाक्यपूरणाय तात्पर्यार्थं दर्शयति—

साधु ते यजमान देवतेत्याहाऽऽशिषमेवैतामा शास्ते , इति ।

शाखान्तरे साधु ते यजमान देवतेत्यस्योपरि योऽग्निं होतारमवृथा इति किंचिद्वाक्यमाम्नातम् । तस्यायमर्थः—हे यजमान यस्त्वमग्निं होतारमवृथा होतृत्वेन वृतवानसि तस्य तव साधु ददात्विति ॥

तमिमं शाखान्तरपाठं दूषयति—

यद्ब्रूयाद्योऽग्निꣳ होतारमवृथा इत्यग्निनोभयतो यजमानं परि गृह्णीयात्प्रमायुकः स्यात् , इति ।

अग्निर्होता वेत्त्वग्निरित्युपक्रमे पठितं साधु ते यजमान देवतेत्यस्मादप्यूर्ध्वं यद्यग्निꣳ होतारमिति ब्रूयात्तदोभयोः पार्श्वयोर्यजमानोऽग्निना परिगृहीतो भवेत् । ततो दाहाधिक्येन म्रियेत । तस्माच्छाखान्तरपाठो नाऽऽदर्तव्यः ॥

यद्यपि जुहूपभृतौ द्वे अपि आदातव्ये तथाऽपि तयोः समं प्राधान्यं निवार्य जुह्वा एव प्राधान्यं द्योतयितुं स्रुचमित्येकवचनमेव पठनीयमित्येतद्दर्शयति—

यजमानदेवत्या वै जुहूर्भ्रातृव्यदेवत्योपभृद्यद्द्वे इव ब्रूयाद्भ्रातृव्यमस्मै जनयेद्घृतवतीमध्वर्यो स्रुचमाऽस्यस्वेत्याह यजमानमेवैतेन वर्धयति, इति ।

स्रुचावित्येवं द्विवचनेन द्वे इव द्वे अपि समप्रधाने इव यदि ब्रूयात्तदा यजमानसमानं भ्रातृव्यमुत्पादयेत् । तस्मादुपभृतमुपेक्षितामिव तिरस्कर्तुं जुह्वा-

( प्रवरमन्त्रस्य निगदस्य सुगादापननिगदस्य च व्याख्यानम् )
धान्यायैकवचनाभिधानेन यजमानं वञ्चितवान्भवति। नहि जुहू इवोपभृतः यदपि साक्षाद्धोमसाधनत्वमस्ति। तस्मादुपसर्जनत्वं तस्या युक्तम्॥
देवमिश्रणेन देवरक्षणं विघ्ननिवारणेन विश्वरक्षणमभिप्रेतमित्येतद्दर्शयति—

देवायुवमित्याह देवान्ह्येषाऽवति विश्व-
वारामित्याह विश्वꣳ ह्येषाऽवति, इति॥

ईडेन्यादिशब्दैर्विवक्षितं दर्शयति—

ईडामहै देवाꣳ ईडेन्यान्नमस्याम नमस्या-
न्यजाम यज्ञियानित्याह मनुष्या वा
ईडेन्याः पितरो नमस्या देवा यज्ञिया
देवता एव तद्यथाभागं यजति॥, इति॥

देवता यजतीत्येतदुपलक्षणम्। मनुष्यान्स्तौति पितृन्नमस्यतीत्येतदपि द्रष्टव्यम्। एवं च सति यस्य मनुष्यादेर्यो भागः स्तुत्यादिरूप उपचरितस्तं भागमनतिक्रम्यानुष्ठितवान्भवति॥

अथ मीमांसा।

दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

"चातुर्मास्यातिदिष्टेषु निगमेष्वाज्यपानिति।
विक्रियेत न वाऽऽद्येऽपि किं स्याद्ध्याज्यपानिति॥
दधिपानिति वा यद्वैवमेव स्यात्पृषदाज्यपान्।
द्रव्यद्वयोक्तेराद्यः स्याद्दधिमात्रहविष्ट्वतः॥
द्वितीयः स्यात्तृतीयोऽस्तु द्रव्यान्तरविधानतः।
गुणो दध्ना चित्रताऽऽज्ये ततो विक्रियते नहि॥"

चातुर्मास्येषु चोदकेनाऽऽवाहनस्वाहाकारायाज्योपणनिगमा अतिदिष्टाः। तत्राऽऽज्यपशब्दः प्रयुक्तः—"देवाꣳ आज्यपाꣳ आवह।" "स्वाहा देवाꣳ आज्यपान्।" "अयाड्देवानामाज्यपानां प्रिया धामानि।" "देवा आज्यपा आज्यमजुषन्त।" इति। सोऽयमाज्यपशब्दो विक्रियते न वेति संशयः। तत्र विकारोऽपि त्रिविधः। तत्र दध्याज्यपानित्याद्यस्तावत्प्राप्नोति। कुतः। अथ पृषदाज्यं गृह्णाति द्वयं वा इदं सर्पिश्च दधि चेति द्रव्यद्वयस्योक्तत्वात्। आज्यस्योपस्तरणाभिघारणार्थत्वेन हविःशेषत्वाद्धविष्ट्वं नास्तीति दध्येव हविः। ततो दधिपानिति द्वितीयः पक्षः। दध्याज्यमेलनेन निष्पद्यते

पृषदाज्यं द्रव्यान्तरम् । तदेव हविरिति पृषदाज्यपानिति तृतीयः पक्षः । दधिमेलनादाज्ये पृषत्ता गुणो निष्पद्यते । तस्मादाज्यस्यैव हविष्ट्वमित्याज्यपशब्दोपेता एव निगमाः पठितव्याः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( अथ द्वितीयाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः । )

त्रीꣳस्तृचाननु॑ ब्रूयाद्राज॒न्य॑स्य॒ त्रयो॒ वा अ॒न्ये रा॑ज॒न्या॑त्पुरु॑षा ब्राह्म॒णो वैश्यः॑ शू॒द्रस्ता॒नेवास्मा॒ अनु॑काꣳन्करोति॒ पञ्च॑दशा॒नु ब्रूयाद्राज॒न्य॑स्य पञ्चद॒शो वै रा॑ज॒न्यः॑ स्व ए॒वैनꣳ॒ स्तोमे॒ प्रति॑ ष्ठापयति त्रि॒ष्टुभा॒ परि॑ दध्यादि॒न्द्रियं॒ वै त्रि॒ष्टुगि॑न्द्रि॒यका॑मः॒ खलु॒ वै रा॑ज॒न्यो॑ यज॑ते त्रि॒ष्टुभै॒वास्मा॑ इन्द्रि॒यं परि॑ गृह्णाति॒ यदि॑ काम॒येत ( १ ) ब्रह्मवर्च॒सम॑स्त्वि॒ति॑ गाय॒त्रिया॒ परि॑ दध्याद्ब्रह्मवर्च॒सं वै गा॑य॒त्री ब्र॑ह्मवर्च॒सम॒ेव भ॑वति सप्तद॒शानु॑ ब्रूया॒द्वैश्य॑स्य सप्तद॒शो वै वैश्यः॒ स्व ए॒वैनꣳ॒ स्तोमे॒ प्रति॑ ष्ठापयति॒ जग॑त्या॒ परि॑ दध्या॒ज्जाग॑ता॒ वै प॒शवः॑ प॒शुका॑मः॒ खलु॒ वै वैश्यो॑ यज॑ते॒ जग॑त्यै॒वास्मै॑ प॒शून्परि॑ गृह्णात्येक॑विꣳशतिम॒नु ब्रूयात्प्रति॒ष्ठाका॑मस्यैकवि॒ꣳशः

स्तोमानां प्रतिष्ठा प्रतिष्ठित्यै ( २ ) चतुर्विꣳशतिमनु ब्रूयाद्ब्रह्मवर्चसकामस्य चतुर्विꣳशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैवास्मै ब्रह्मवर्चसमव रुन्धे त्रिꣳशतमनु ब्रूयादन्नकामस्य त्रिꣳशदक्षरा विराडन्नं विराड्विराजैवास्मा अन्नाद्यमव रुन्धे द्वात्रिꣳशतमनु ब्रूयात्प्रतिष्ठाकामस्य द्वात्रिꣳशदक्षराऽनुष्टुगनुष्टुप्छन्दसां प्रतिष्ठा प्रतिष्ठित्यै षट्त्रिꣳशतमनु ब्रूयात्पशुकामस्य षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशून् ( ३ ) अव रुन्धे चतुश्चत्वारिꣳशतमनु ब्रूयादिन्द्रियकामस्य चतुश्चत्वारिꣳशदक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुप्त्रिष्टुभैवास्मा इन्द्रियमव रुन्धेऽष्टाचत्वारिꣳशतमनु ब्रूयात्पशुकामस्याष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनव रुन्धे सर्वाणि छन्दाꣳस्यनु ब्रूयाद्बहुयाजिनः सर्वाणि वा एतस्य छन्दाꣳस्यवरुद्धानि यो बहुयाज्यपरिमितमनु ब्रूयादपरिमितस्यावरुद्ध्यै ( ४ ) ॥

( काम्ययामिवेनैनिमित्तिक्रसामिधेनीनामभिधानम् )

( कामयेत प्रतिष्ठित्यै पशून्सप्तचत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ द्वितीयाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः । )

---

त्रीन् । तृचान् । अन्विति । ब्रूयात् । राजन्यस्य । त्रयः । वै । अन्ये । राजन्यात् । पुरुषाः । ब्राह्मणः । वैश्यः । शूद्रः । तान् । एव । अस्मै । अनुकानित्यनु—कान् । करोति । पञ्चदशेति पञ्च—दश । अन्विति । ब्रूयात् । राजन्यस्य । पञ्चदश इति पञ्च—दशः । वै । राजन्यः । स्वे । एव । एनम् । स्तोमे । प्रतीति । स्थापयति । त्रिष्टुभा । परीति । दध्यात् । इन्द्रियम् । वै । त्रिष्टुक् । इन्द्रियकाम इतीन्द्रिय—कामः । खलु । वै । राजन्यः । यजते । त्रिष्टुभा । एव । अस्मै । इन्द्रियम् । परीति । गृह्णाति । यदि । कामयेत ( १ ) । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । अस्तु । इति । गायत्रिया । परीति । दध्यात् । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । वै । गायत्री । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । एव । भवति । सप्तदशेति सप्त—दश । अन्विति । ब्रूयात् । वैश्यस्य ।

सप्तदश इति सप्त—दशः। वै। वैश्यः। स्वे। एव। एनम्। स्तोमे। प्रतीति। स्थापयति। जगत्या। परीति। दध्यात्। जागताः। वै। पशवः। पशु-काम इति पशु—कामः। खलु। वै। वैश्यः। यजते। जगत्या। एव। अस्मै। पशून्। परीति। गृह्णाति। एकविंशतिमित्येक—विंशतिम्। अन्विति। ब्रूयात्। प्रतिष्ठाकामस्येति प्रतिष्ठा—कामस्य। एकविंश इत्येक—विंशः। स्तोमानाम्। प्रतिष्ठेति प्रति—स्था। प्रतिष्ठित्या इति प्रति—स्थित्यै (२)। चतुर्विंशतिमिति चतुः—विंशतिम्। अन्विति ब्रूयात्। ब्रह्मवर्चसकामस्येति ब्रह्मवर्चस—कामस्य। चतुर्विंशत्यक्षरेति चतुर्विंशति—अक्षरा। गायत्री। गायत्री। ब्रह्मवर्चसमिति ब्रह्म—वर्चसम्। गायत्रिया। एव। अस्मै। ब्रह्मवर्चसमिति ब्रह्म—वर्चसम्। अवेति। रुन्धे। त्रिंशतम्। अन्विति। ब्रूयात्। अन्नकामस्येत्यन्न—कामस्य। त्रिंशदक्षरेति त्रिंशत्—अक्षरा। विराडिति वि—राट्। अन्नम्। विराडिति वि—राट्। विराजेति वि—राजा। एव। अस्मै। अन्नाद्यमित्य-न्न—अद्यम्। अवेति। रुन्धे। द्वात्रिंशतम्। अ-

न्विति । ब्रूयात् । प्रतिष्ठाकामस्येति प्रतिष्ठा—कामस्य । द्वात्रिंशदक्षरेति द्वात्रिंशत्—अक्षरा । अनुष्टुगित्यनु—स्तुक् । अनुष्टुबित्यनु—स्तुप् । छन्दसाम् । प्रतिष्ठेति प्रति—स्था । प्रतिष्ठित्या इति प्रति—स्थित्यै । षट्त्रिंशतमिति षट्—त्रिंशतम् । अन्विति । ब्रूयात् । पशुकामस्येति पशु—कामस्य । षट्त्रिंशदक्षरेति षट्त्रिंशत्—अक्षरा । बृहती । बार्हताः । पशवः । बृहत्या । एव । अस्मै । पशून् ( ३ ) । अवेति । रुन्धे । चतुश्चत्वारिंशतमिति चतुः—चत्वारिंशतम् । अन्विति । ब्रूयात् । इन्द्रियकामस्येतीन्द्रिय—कामस्य । चतुश्चत्वारिंशदक्षरेति चतुश्चत्वारिंशत्—अक्षरा । त्रिष्टुक् । इन्द्रियम् । त्रिष्टुप् । त्रिष्टुभा । एव । अस्मै । इन्द्रियम् । अवेति । रुन्धे । अष्टाचत्वारिंशतमित्यष्टा—चत्वारिंशतम् । अन्विति । ब्रूयात् । पशुकामस्येति पशु—कामस्य । अष्टाचत्वारिंशदक्षरेत्यष्टाचत्वारिंशत्—अक्षरा । जगती । जागताः । पशवः । जगत्या । एव । अस्मै । पशून् । अवेति । रुन्धे । सर्वाणि । छन्दांसि । अन्विति । ब्रूयात् । बहुयाजिन इति बहु—याजिनः । सर्वाणि । वै । एतस्य । छन्दांसि । अवरुद्धानीत्यव—रुद्धा-

नि। यः। बहुयाजीति बहु—याजी। अपरिमित-मित्यपरि—मितम्। अन्विति। ब्रूयात्। अपरि-मितस्येत्यपरि—मितस्य। अवरुद्ध्या इत्यव—रुद्ध्यै (४)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके पञ्चमप्रपाठके दशमोऽनुवाकः॥ १०॥

---

( अथ द्वितीयकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः। )

व्याख्याता नवमे स्पष्टं प्रवरा निगदादयः॥
अथ दशमे नैमित्तिक्यः काम्याश्च सामिधेन्य उच्यन्ते।
तत्र राजन्यं निमित्तीकृत्य विधत्ते—

त्रीꣳस्तृचाननु ब्रूयाद्राजन्यस्य त्रयो वा अन्ये राजन्यात्पुरुषा ब्राह्मणो वैश्यः शूद्रस्तानेवास्मा अनुकान्करोति, इति।

प्र वो वाजा इत्येका त्रिरावृत्तत्वात्(त्ता)। अग्न आयाहीत्येकस्तृचः। त्वं वरुण इत्येका परिधानीया त्रिरावृत्ता। एवं त्रयस्तृचाः। तेन तृचानां त्रित्वेन राजन्यव्यतिरिक्तान्ब्राह्मणादीन्त्रीन्वर्णान्राजन्यस्यानुकूलान्करोति॥

पक्षान्तरं विधत्ते—

पञ्चदशानु ब्रूयाद्राजन्यस्य पञ्चदशो वै राजन्यः स्व एवैनꣳ स्तोमे प्रति ष्ठापयति, इति।

प्रजापतेरुरसो बाहुभ्यां च पञ्चदशस्तोमस्य राजन्यस्य चोत्पन्नत्वादसौ स्तोमो राजन्यस्य स्वकीयः। यद्यपि पञ्चदश सामिधेनीरन्वाहेति वर्णत्रयसाधारणवचनेनैवायं पक्षः प्राप्तस्तथाऽपि त्रीꣳस्तृचानित्यनेन विशेषवचनेन नित्यवाधप्राप्तौ विकल्पार्थं पञ्चदशेति प्रतिप्रसवो विधीयते॥

---

१ क. घ. ङ. च. °त्यवद्वाक्यप्रा।

त्वं वरुण इत्येतां परिधानीयां विधत्ते—

त्रिष्टुभा परि दध्यादिन्द्रियं वै त्रिष्टु-
गिन्द्रियकामः खलु वै राजन्यो यजते
त्रिष्टुभैवास्मा इन्द्रियं परि गृह्णाति, इति ।

त्रिष्टुभ इन्द्रेण सहोत्पन्नत्वात्तत्संबन्धीन्द्रियरूपत्वम् । राजन्यश्च युयुत्सुत्वा-दिन्द्रियसामर्थ्यकामः ॥

राजन्यस्य नित्यां परिधानीयां विधाय काम्यां विधत्ते—

यदि कामयेत ब्रह्मवर्चसमस्त्विति गायत्रिया परि
दध्याद्ब्रह्मवर्चसं वै गायत्री ब्रह्मवर्चसमेव भवति, इति ।

आजुहोत दुवस्यतेत्येषा गायत्री । तत्सवितुरित्यस्या गायत्र्या उपदेशेन ब्रह्मवर्चसनिष्पत्तेस्तस्य गायत्रीरूपत्वम् ॥

वैश्यं निमित्तीकृत्य विधत्ते—

सप्तदशानु ब्रूयाद्वैश्यस्य सप्तदशो वै वैश्यः
स्व एवैनꣳ स्तोमे प्रति ष्ठापयति, इति ।

" समिध्यमानो अध्वरे " " समिद्धो अग्न आहुत " इत्यनयोर्मध्ये " पृथुपाजा अमर्त्यः " " तꣳ सबाधो यतस्रुचः " इत्येतयोर्धाय्ययोः प्रक्षेपेण सप्तदशसंख्यानिष्पत्तिः। प्रजापतेर्मध्यदेशात्सप्तदशस्तोमवैश्ययोरुत्पन्नत्वात्सप्तदशस्तोमस्तदीयः ॥

वैश्यस्य समिध्यमानो अमृतस्य राजसीत्येतां परिधानीयां विधत्ते—

जगत्या परि दध्याज्जागता वै पशवः
पशुकामः खलु वै वैश्यो यजते
जगत्यैवास्मै पशून्परि गृह्णाति, इति ।

जगत्यनुष्ठानलब्धत्वात्पशूनां जागतत्वम् । वैश्यस्य क्षीरदध्यादिविक्रयाय पशुकामत्वं प्रसिद्धम् ॥

नैमित्तिकीं विधाय काम्यां विधत्ते—

एकविꣳशतिमनु ब्रूयात्प्रतिष्ठाकामस्यैक-
विꣳशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्यै, इति ।

---

१ ख. च 'स्तस्या गा' ।

( काम्यसामिधेनीनैमित्तिकसामिधेनीनामभिधानम् )

अत्र संख्यापूरणं संप्रद विद्भिरेवमुक्तम्—एकविंशत्यादिषु प्रथमाया उत्तरे द्वे ईडे अग्निमित्यादिके। अथाग्न आयाहीत्यादि । अथ त्वामग्ने पुष्कराद्धीति त्रयस्तृचाः। अग्निमग्निमित्येकादश। पृथुपाजा इत्यष्टौ। अष्टाचत्वारिंशत्यक्षरस्य दाशतय्यास्तिस्र आगमयितव्याः । एकविंशत्यादिषु कार्येषु एतासां यथार्थमागम इति । अस्यायमर्थः—यदा सामिधेनीवृद्धिरपेक्षिता तदाऽऽम्नातायाः ॰ वो वाजा इत्यस्या उपरीडे अग्निमित्यादिकं द्वयं प्रक्षेपणीयम्। तत ऊर्ध्वमग्न आयाहीत्यादिकं यथाम्नातं पठितम्। तत्र समिध्यमानसमिद्धवत्योर्मध्ये त्वामग्न इत्यादिका उदाहृताः प्रक्षेपणीयाः । यावतीनां प्रक्षेपेण संख्या पूर्यते तत्प्रमाणवतीनां प्रक्षेप इति। मीमांसकास्तु *धाय्यासंज्ञकानामेव समिध्यमानसमिद्धवत्योर्मध्ये प्रक्षेपः। इतरासां त्वन्ते प्रक्षेपमाहुः। तत्रापि परिधानीयाया उत्तमायाः प्रागेवेत्ययं विशेषो द्रष्टव्यः। त्रिवृत्पञ्चदशसप्तदशानां संख्या चतुर्थ एकविंशस्तोमेऽन्तर्भूतेति स स्तोम इतरेषां स्तोमानां प्रतिष्ठा ॥

फलान्तराय विधत्ते—

चतुर्विंशतिमनु ब्रूयाद्ब्रह्मवर्चसकामस्य चतुर्विंशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैवास्मै ब्रह्मवर्चसमव रुन्धे, इति॥

पुनरपि फलान्तराय विधत्ते—

त्रिंशतमनु ब्रूयादन्नकामस्य त्रिंशदक्षरा विराडन्नं विराड्विराजैवास्मा अन्नाद्यमव रुन्धे , इति।

दशाक्षरैस्त्रिभिः पादैर्विराजस्त्रिंशदक्षरत्वम्। तच्छन्दोनुष्ठानेनान्नस्य लभ्यत्वात्तस्य च्छन्दसोऽन्नत्वम् ॥

पुनः फलान्तराय विधत्ते—

द्वात्रिंशतमनु ब्रूयात्प्रतिष्ठाकामस्य द्वात्रिंशदक्षराऽनुष्टुगनुष्टुप्छन्दसां प्रतिष्ठा प्रतिष्ठित्यै, इति।

अन्यत्र वाग्वा अनुष्टुगिति श्रवणाद्वाग्रूपत्वमनुष्टुभः। वाचि सर्वेषां छन्दसामन्तर्भावादनुष्टुबितरच्छन्दसां प्रतिष्ठा ॥

* अत्र ख पुस्तके याज्यासंज्ञकानामिति पाठान्तरम्।

१ ख च °शत्यक्षस्य। २ क. घ ङ च °मग्नेद्'। ३ क घ ङ. च °मानेद्द'। ४ क. ङ. °या उ°।

पुनः फलान्तराय विधत्ते—

षट्त्रिंशतमनु ब्रूयात्पशुकामस्य षट्-
त्रिंशदक्षरा बृहती बार्हताः पशवो
बृहत्यैवास्मै पशूनव रुन्धे, इति।

पशूनां बृहतीछन्दसोऽनुष्ठानेन लभ्यत्वाद्बार्हतत्वम् ॥

फलान्तराय विधत्ते—

चतुश्चत्वारिंशतमनु ब्रूयादिन्द्रियका-
मस्य चतुश्चत्वारिंशदक्षरा त्रिष्टुगिन्द्रियं
त्रिष्टुप्त्रिष्टुभैवास्मा इन्द्रियमव रुन्धे, इति ॥

पुनः फलान्तराय विधत्ते—

अष्टाचत्वारिंशतमनु ब्रूयात्पशुकामस्या-
ष्टाचत्वारिंशदक्षरा जगती जागताः प-
शवो जगत्यैवास्मै पशूनव रुन्धे, इति ॥

सोमयाजिनमधिकृत्य विधत्ते—

सर्वाणि छन्दांस्यनु ब्रूयाद्बहुयाजिनः सर्वाणि
वा एतस्य छन्दांस्यवरुद्धानि यो बहुयाजी, इति।

बहुभिर्दीक्षणीयादिभिरिष्टिभिरग्नीषोमीयादिपशुभिरैन्द्रवायवादिग्रहैश्च यजत इति बहुयाजी। एतस्य बहुयाजिनः सवनत्रये गायत्र्युष्णिगनुष्टुब्जगती-रूपाणि सर्वाणि च्छन्दांस्यवरुद्धानि भवन्ति। तस्मात्सोमयाजी यदा दर्श-पूर्णमासावनुतिष्ठति तदा तस्य त्रीणि च्छन्दांस्यनुब्रूयात्। "समिध्यमानः प्रथ-मोऽनु धर्मः" इत्येषा त्रिष्टुप्। "त्वामग्ने प्र दिव आहुतं घृतेन" इत्येषा जगती। एतदुभयं समिद्धवत्याः पूर्वं पठनीयम् ॥

तस्य सोमयाजिनस्त्रींश्छन्दांस्यनुवाकेऽष्टाचत्वारिंशतमनुब्रूयादित्यन्ते यः संख्याविशेषस्तत्र स्वेच्छैव नियामिका, न तु वाचनिको नियमोऽस्तीत्ये-तद्विधत्ते—

अपरिमितमनु ब्रूयादपरिमितस्यावरुद्ध्यै॥, इति ॥

१ ख 'जिन निमित्तीक'। २ क घ ङ च. 'भिर'।

अपरिमितस्याधिकस्य फलस्येत्यर्थः ॥

अत्र मीमांसा।

तृतीयाध्यायस्य षष्ठपादे चिन्तितम्—

"सामिधेनीः सप्तदश प्रकृतौ विकृतावुत।
पूर्ववत्प्रकृतौ पाञ्चदश्येनैतद्विकल्पते ॥
विकृतौ साप्तदश्यं स्यात्प्रकृतौ प्रक्रियाबलात्।
पाञ्चदश्यावरुद्धत्वादाकाङ्क्षाया निवृत्तितः ॥"

अनारभ्य श्रूयते—"सप्तदश सामिधेनीरनुब्रूयात्" इति। प्र वो वाजा अभिद्यव इत्याद्या अग्निमिन्धनार्था ऋचः सामिधेन्यः। तासां साप्तदश्यं पूर्वन्यायेन प्रकृतिगतम्। यदि प्रकृतौ पञ्चदश सामिधेनीरन्वाहेति विधिः स्यात्तर्हि पाञ्चदश्यं साप्तदश्यं च विकल्प्येयातामिति प्राप्ते ब्रूमः—विकृतावेव साप्तदश्यं निविशते। प्रकृतौ पाञ्चदश्येनावरुद्धानां सामिधेनीनां संख्याकाङ्क्षाया अभावात्। नच पाञ्चदश्यसाप्तदश्ययोः समानबलत्वादवरोधाभाव इति शङ्कनीयम्। पाञ्चदश्ये प्रकरणानुग्रहस्याधिकत्वात्। तस्मान्मित्रविन्दाध्वरकल्पादिविकृतौ साप्तदश्यमवतिष्ठते। न चात्र पूर्वन्यायोऽस्ति। साप्तदश्यस्य चोदकप्राप्त्यभावेन पुनर्विधानदोषाभावात् ॥

तत्रैवान्यच्चिन्तितम्—

"साप्तदश्यं तु वैश्यस्य विकृतौ प्रकृतावुत।
पूर्ववच्चेन्न संकोचान्नित्ये नैमित्तिकोक्तितः ॥
गोदोहनेन प्रणयेत्कामीत्येतदुदाहरत्।
भाष्यकारस्तदप्यस्तु न्यायस्यात्र समन्वतः ॥"

सप्तदशानुब्रयाद्वैश्यस्येति विहितं वैश्यनिमित्तं साप्तदश्यं पूर्वन्यायेन विकृतिगामीति चेन्मैवम्। नैमित्तिकेनानेन वचनेन प्रकृतिगतस्य नित्यस्य पाञ्चदश्यस्य वैश्यव्यतिरिक्तविषयतया संकोचनीयत्वात्। नित्यं सामान्यरूपतया सावकाशत्वेन च दुर्बलं, नैमित्तिकं तु विशेषरूपत्वनिरवकाशत्वाभ्यां प्रबलम्। तस्माद्वैश्यनिमित्तकं साप्तदश्यं प्रकृतावेवतिष्ठते। अत्र भाष्यकारोऽन्यदुदाजहार—"चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य" इति। तत्र प्रकृतेश्चमसेनावरुद्धत्वाद्गोदोहनं विकृताविति पूर्वः पक्षः। कामनानिमित्तकेन

१ ख °कल्प्यते। २ ख °कल्प्येया°। ३ ख °श्यवाश्ययो। ४ क. घ. ङ. च. °स्मादध्व°।
५ क °नित्यनै° ६ क. घ ङ. च °त्कामिन्यैत°।

गोदोहनेन नित्यस्य चमसस्य निष्कामविषयतया संकोचनीयत्वात्प्रकृतावेव गोदोहनमिति सिद्धान्तः ॥

दशमाध्यायस्याष्टमपादे चिन्तितम्—

"सामिधेनीसाप्तदश्यं वैमृधादावपूर्वगीः।
संदष्टितिर्वोपकारस्य क्रृप्त्याऽऽद्योऽस्त्वाज्यभागवत् ॥
सामिधेन्यश्चोदकाप्ताः साप्तदश्यं तु वैमृधे ।
पुनर्वाक्येन संहार्यमनारभ्योक्तिचोदितम् ॥ "

अनारभ्य किंचिदाम्नायते—"सप्तदश सामिधेनीरनुब्रूयात्" इति । तथा वैमृधेऽध्वरकल्पायां पशौ मित्रविन्दायामाग्रयणेष्ट्यादौ च पुनः साप्तदश्यं विहितम् । यद्यप्यनारभ्याधीतानां प्रकृतिगामित्वं न्याय्यं तथाऽपि श्रुतेन पाञ्चदश्येनावरुद्धत्वाद्विकृतिष्वेतन्निविशते । तथा सति वैमृधादिविकृतिष्वनारभ्यवादप्राप्ताः सप्तदश सामिधेन्यः प्राकरणिकेन विधिना पुनर्विधीयमाना गृहमेधीयाज्यभागवत्क्लृप्तोपकारकत्वेनेतिकर्तव्यताकाङ्क्षां पूरयन्त्यश्चोदकं लोपयन्त्यो वैमृधादेरपूर्वकर्मतां गमयन्ति । साप्तदश्यं त्वनारभ्यवादप्राप्तमनूद्यत इति प्राप्ते ब्रूमः—वैमृधादिषु सामिधेन्य आज्यभागवन्न विधीयन्ते, किं तु चोदकप्राप्तास्ता अनूद्य साप्तदश्यं विधीयते । तत्र साप्तदश्यं वैमृधादिप्रकरणेष्वाम्नातैर्विधिभिः कासुचिदेव विकृतिषु प्राप्तम् । अनारभ्यवादेन तु सर्वासु विकृतिषु । तत्रानारभ्यवादो विलम्बते । प्रथमं विधेयस्य साप्तदश्यस्य सामिधेनीसंबन्धमवबोध्य तत्संबन्धान्यथानुपपत्त्या क्रतुसंबन्धं परिकल्प्य प्रकृतौ पाञ्चदश्यपराहतत्वेन विकृतिषु सर्वासु प्रवेशः क्रियत इति विलम्बः । प्राकरणिकैर्विधिभिः सामिधेनीसंबन्ध एव बोधनीयः । क्रतौ तद्विशेषे च प्रवेशो न बोधनीयः, प्रत्यक्षप्रकरणेनैव तत्सिद्धेः । तत्र साप्तदश्यस्य वैमृधादिविकृतिविशेषसंबन्धे सहसा प्रतिपन्ने सति तद्विरोधी विकृतिसंबन्धो न कल्पयितुं शक्यः । अनारभ्यवादस्तु वैमृधादिषु प्राप्तस्य नित्यानुवादोऽस्तु । यद्वा प्रकरणविधिर्वैमृधादिषु साप्तदश्यस्य प्रापकः । अनारभ्यवादस्तु चोदकप्राप्तस्य पाञ्चदश्यस्य बाधकः । सर्वथाऽपि चतुर्धाकरणवदुपसंहारो न त्वाज्यभागवदपूर्वं कर्म ।

तत्रैव पञ्चमपादे चिन्तितम्—

"सामिधेनीविवृद्धौ किमागमोऽभ्यस्यनामुत ।
आगमः पूर्ववन्मैवमभ्यासप्रकृतित्वतः ॥

१ क. घ. ड च. पुनर्विहि° । २ क घ ड च पि पा° । ३ ख. °तुप्रवेश प° । ४ क. घ. ढ. च. °दश्य प° । ५ ख निवेश । ६ ख. °रणपाठैः° । ७ क. घ ड. च. °तिस° ।

( सामिधेनीषु होतृनियमविशेषाध्वर्य्वाघारविशेषयोरभिधानम् )

तत्राप्याद्यन्तयोर्यावत्पूर्त्यभ्यासो यथोक्ति वा ।
अभ्यस्याऽऽगमतः पूर्तिः पूरणार्थत्वतोऽग्रिमः ॥
त्रित्वं न पूरणायोक्तमन्यथाऽप्यत्र पूरणात् ।
विवक्षितमबाधित्वा भवेत्पूरणमागमात् ॥ ''

दर्शपूर्णमासयोः पञ्चदश सामिधेनीर्विधाय काम्या तद्वृद्धिर्विधीयते—"एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य" इत्यादिना । यथा बहिष्पवमान ऋगागमस्तथाऽत्रापीति प्राप्ते ब्रूमः—एकादशभिः पठिताभिः पञ्चदशसंख्याया अपूर्तावृगन्तरागमनेन तत्पूरणं न कृतं, किं तु तत्पूरणायाभ्यासो विहितः—" त्रिः प्रथमामन्वाह त्रिरुत्तमाम् " इति । अतः काम्यानामप्यभ्यासेन पूरणं युक्तम् । अभ्यासपक्षेऽपि यावत्कृत्वोऽभ्यासे सत्येकविंशतिसंख्या पूर्यते तावत्कृत्वः प्रथमोत्तमे अभ्यसनीये । कुतः । विहितस्य त्रिरभ्यासस्य पूरणार्थत्वदर्शनात् । मैवम् । न हि त्रित्वं पूरणार्थं विहितम् । प्रथमाया द्विरभ्यासेनोत्तमायाश्चतुरभ्यासेन पञ्चदशसंख्यापूरणात् । अतो विवक्षितं त्रित्वम् । तथा सति तदबाधाय प्रथमोत्तमे त्रिरभ्यस्य षण्णामृचामागमेनैकविंशतिसं[illegible]या पूरणीया ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्र[illegible]
दशमोऽनुवाकः ॥ १० ॥

( द्वितीयाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः । )

---

निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुप व्ययते देवलक्ष्ममेव तत्कुरुते तिष्ठन्नन्वाह तिष्ठन्ह्याश्रुततरं वदति तिष्ठन्नन्वाह सुवर्गस्य लोकस्याभिजित्या आसीनो यजत्यस्मिन्नेव लोके प्रति तिष्ठति यत्क्रौञ्चम-

१ क. घ. ङ. च अन्यस्या° । २ घ ङ. °पूर्तौ पूर्वं तावदृगागम° । च. °पूर्तौ पूर्वं तावदृग° । ३ क. घ. ङ. च. °दभ्यासाय ।

न्वाहाऽऽसुरं तद्यन्मन्द्रं मानुषं तद्यदन्तरा तत्स-
देवमन्तराऽनूच्यꣳ सदेवत्वाय विद्वाꣳसो वै
( १ ) पुरा होतारोऽभूवन्तस्माद्विधृता अध्वा-
नोऽभूवन्न पन्थानः समरुक्षन्नन्तर्वेद्यन्यः पादो
भवति बहिर्वेद्यन्योऽथान्वाहाध्वनां विधृत्यै
पथामसꣳरोहायाथो भूतं चैव भविष्यच्चाव
रुन्धेऽथो परिमितं चैवापरिमितं चाव रुन्धेऽ-
थो ग्राम्याꣳश्चैव पशूनारण्याꣳश्चाव रुन्धेऽथो
( २ ) देवलोकं चैव मनुष्यलोकं चाभि ज-
यति देवा वै सामिधेनीरनूच्य यज्ञं नान्वप-
श्यन्त्स प्रजापतिस्तूष्णीमाघारमाऽघारयत्ततो
वै देवा यज्ञमन्वपश्यन्यत्तूष्णीमाघारमाघार-
यति यज्ञस्यानुख्यात्या अथो सामिधेनीरेवा-
भ्यनक्त्यलूक्षो भवति य एवं वेदाथो तर्पय-
त्येवैनास्तृप्यति प्रजया पशुभिः ( ३ ) य एवं
वेद यदेकयाऽऽघारयेदेकां प्रीणीयाद्यद्द्वाभ्यां द्वे
प्रीणीयाद्यत्तिसृभिरति तद्रेचयेन्मनसाऽऽ घार-
यति मनसा ह्यनाप्तमाप्यते तिर्यञ्चमा घारय-
त्यछम्बट्कारं वाक्च मनश्चाऽऽर्तीयेतामहं
देवेभ्यो हव्यं वहामीति वागब्रवीदहं देवेभ्य

इति मनस्तौ प्रजापतिं प्रश्नमैताꣳ सोऽब्रवीत् (४) प्रजापतिर्दूतीरेव त्वं मनसोऽसि यद्धि मनसा ध्यायति तद्वाचा वदतीति तत्खलु तुभ्यं न वाचा जुहवन्नित्यब्रवीत्तस्मान्मनसा प्रजापतये जुह्वति मन इव हि प्रजापतिः प्रजापतेराप्त्यै परिधीन्त्सं मार्ष्टि पुनात्येवैनान्त्रिर्मध्यमं त्रयो वै प्राणाः प्राणानेवाभि जयति त्रिर्दक्षिणार्ध्यं त्रयः (५) इमे लोका इमानेव लोकानभि जयति त्रिरुत्तरार्ध्यं त्रयो वै देवयानाः पन्थानस्तानेवाभि जयति त्रिरुपं वाजयति त्रयो वै देवलोका देवलोकानेवाभि जयति द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्या आघारमा घारयति तिर इव (६) वै सुवर्गो लोकः सुवर्गमेवास्मै लोकं प्र रोचयत्यृजुमा घारयत्यृजुरिव हि प्राणः संततमा घारयति प्राणानामन्नाद्यस्य संतत्या अथो रक्षसामपहत्यै यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्याऽऽघारयेत्प्राणमे-

वास्माज्जिह्मं नयति ताजक्प्र मीयते शिरो वा एतद्यज्ञस्य यदाघार आत्मा ध्रुवा ( ७ ) आघारमाघार्य ध्रुवाꣳ समनक्त्यात्मन्नेव यज्ञस्य शिरः प्रति दधात्यग्निर्देवानां दूत आसीद्दैव्योऽसुराणां तौ प्रजापतिं प्रश्नमैताꣳ स प्रजापतिर्ब्राह्मणमब्रवीदेतद्वि ब्रूहीत्या श्रावयेतीदं देवाः शृणुतेति वाव तदब्रवीदग्निर्देवो होतेति य एव देवानां तमवृणीत ततो देवाः ( ८ ) अभवन्पराऽसुरा यस्यैवं विदुषः प्रवरं प्रवृणते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधि ब्रूयाद्यद्ब्राह्मणायाध्याहाऽऽत्मनेऽध्याह यद्ब्राह्मणं पराहाऽऽत्मानं पराऽऽह तस्माद्ब्राह्मणो न परोच्यः ( ९ ) ॥

( वा आरण्यान्श्राव रुन्धेऽथो पशुभिः सोऽब्रवीद्दक्षिणार्ध्य त्र्यं इव ध्रुवा देवाश्चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ द्वितीयाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः । )

निवीतमिति नि—वीतम् । मनुष्याणाम् । प्राची-

नावीतमितिं प्राचीन—आवीतम् । पितृणाम् । उपवीतमित्युपं—वीतम् । देवानांम् । उपेतिं । व्य-यते । देवलक्ष्ममितिं देव—लक्ष्मम् । एव । तत् । कुरुते । तिष्ठंन् । अन्विति । आह । तिष्ठंन् । हि । आशुंततरमित्याशुं—तरम् । वदंन्ति । तिष्ठंन् । अ-न्विति । आह । सुवर्गस्येति सुवः—गस्यं । लोक-स्यं । अभिजित्या इत्यभि—जित्यै । आसीनः । य-जति । आसीनः । एव । लोके । प्रतीतिं । तिष्ठति । यत् । क्रौञ्चम् । अन्वाहेत्यंनु—आहं । आसुरम् । तत् । यत् । मन्द्रम् । मानुषम् । तत् । यत् । अ-न्तरा । तत् । सदेवमिति स—देवम् । अन्तरा । अ-नूच्यमित्यंनु—उच्यंम् । सदेवत्वायेति सदेव—त्वाय । विद्वाꣳसः । वै ( १ ) । पुरा । होतारः । अभूवन् । तस्मांत् । विधृंता इति वि—धृताः । अध्वांनः । अ-भूवन् । न । पन्थानः । समिति । अरुक्षन् । अन्तर्वे-दीत्यन्तः—वेदि । अन्यः । पादः । भवति । बहि-र्वेदीति बहिः—वेदि । अन्यः । अथ । अन्विति । आह । अध्वंनाम् । विधृंत्या इति वि—धृत्यै । पथाम् । असꣳरोहायेत्यसं—रोहाय । अथो इतिं । भूतम् । च । एव । भविष्यत् । च । अवेति । रुन्धे ।

अथो इति । परिमितमिति परि—मितम् । च । एव । अपरिमितमित्यपरि—मितम् । च । अवेति । रुन्धे । अथो इति । ग्राम्यान् । च । एव । पशून् । आरण्यान् । च । अवेति । रुन्धे । अथो इति ( २ ) । देवलोकमिति देव—लोकम् । च । एव । मनुष्यलोकमिति मनुष्य—लोकम् । च । अभीति । जयति । देवाः । वै । सामिधेनीरिति साम्—इधेनीः । अनूच्येत्यनु—उच्य । यज्ञम् । न । अन्विति । अपश्यन् । सः । प्रजापतिरिति प्रजा—पतिः । तूष्णीम् । आघारमित्या—घारम् । एति । अघारयत् । ततः । वै । देवाः । यज्ञम् । अन्विति । अपश्यन् । यत् । तूष्णीम् । आघारमित्या—घारम् । आघारयतीत्या—घारयति । यज्ञस्य । अनुख्यात्या इत्यनु—ख्यात्यै । अथो इति । सामिधेनीरिति साम्—इधेनीः । एव । अभीति । अनक्ति । अलूक्षः । भवति । यः । एवम् । वेद । अथो इति । तर्पयति । एव । एनाः । तृप्यति । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः ( ३ ) । यः । एवम् । वेद । यत् । एकया । आघारयेदित्या—घारयेत् । एकाम् । प्रीणीयात् । यत् । द्वाभ्याम् । द्वे इति । प्रीणीयात् । यत् । तिसृभिरिति तिसृ—भिः । अ-

तीति । तत् । रेचयेत् । मनसा । एति । धारयति । मनसा । हि । अनाप्तम् । आप्यते । तिर्यञ्चम् । एति । धारयति । अछंम्बट्कारमित्यछंम्बट्—कारम् । वाक् । च । मनः । च । आर्तीयेताम् । अहम् । देवेभ्यः । हव्यम् । वहामि । इति । वाक् । अब्रवीत् । अहम् । देवेभ्यः । इति । मनः । तौ । प्रजापतिमिति प्रजा—पतिम् । प्रश्नम् । ऐताम् । सः । अब्रवीत् (४) । प्रजापतिरिति प्रजा—पतिः । दूतीः । एव । त्वम् । मनसः । असि । यत् । हि । मनसा । ध्यायति । तत् । वाचा । वदति । इति । तत् । खलु । तुभ्यम् । न । वाचा । जुहवन् । इति । अब्रवीत् । तस्मात् । मनसा । प्रजापतय इति प्रजा—पतये । जुह्वति । मनः । इव । हि । प्रजापतिरिति प्रजा—पतिः । प्रजापतेरिति प्रजा—पतेः । आप्त्यै । परिधीनिति परि—धीन् । सम् । इति । मार्ष्टि । पुनाति । एव । एनान् । त्रिः । मध्यमम् । त्रयः । वै । प्राणा इति प्र—अनाः । प्राणानिति प्र—अनान् । एव । अभीति । जयति । त्रिः । दक्षिणार्ध्यमिति दक्षिण—अर्ध्यम् । त्रयः (५) । इमे । लोकाः । इमान् । एव । लोकान् । अभीति ।

जयति । त्रिः । उत्तरार्ध्यमित्युत्तर—अर्ध्यम् । त्रयः । वै । देवयाना इति देव—यानाः । पन्थानः । तान् । एव । अभीति । जयति । त्रिः । उपेति । वाजयति । त्रयः । वै । देवलोका इति देव—लोकाः । देवलोकानिति देव—लोकान् । एव । अभीति । जयति । द्वादश । समिति । पद्यन्ते । द्वादश । मासाः । संवत्सर इति सं—वत्सरः । संवत्सरमिति सं—वत्सरम् । एव । प्रीणाति । अथो इति । संवत्सरमिति सं—वत्सरम् । एव । अस्मै । उपेति । दधाति । सुवर्गस्येति सुवः—गस्य । लोकस्य । समष्ट्या इति सम्—अष्ट्यै । आघारमित्या—घारम् । एति । घारयति । तिरः । इव ( ६ ) । वै । सुवर्ग इति सुवः—गः । लोकः । सुवर्गमिति सुवः—गम् । एव । अस्मै । लोकम् । प्रेति । रोचयति । ऋजुम् । एति । घारयति । ऋजुः । इव । हि । प्राण इति प्र—अनः । संततमिति सं—ततम् । एति । घारयति । प्राणानामिति प्र—अनानाम् । अन्नाद्यस्येत्यन्न—अद्यस्य । संतत्या इति सं—तत्यै । अथो इति । रक्षसाम् । अपहत्या इत्यप—हत्यै । यम् । कामयेत । प्रमायुक इति प्र—मायुकः । स्यात् । इति । जिह्मम् । तस्य ।

एति । धारयेत् । प्राणमिति प्र—अनम् । एव । अस्मात् । जिह्मम् । नयति । ताजक् । प्रेति । मीयते । शिरः । वै । एतत् । यज्ञस्य । यत् । आघार इत्या—घारः । आत्मा । ध्रुवा (७) । आघारमित्या—घारम् । आघार्येत्या—घार्य । ध्रुवाम् । समिति । अनक्ति । आत्मन् । एव । यज्ञस्य । शिरः । प्रतीति । दधाति । अग्निः । देवानाम् । दूतः । आसी-त् । दैव्यः । असुराणाम् । तौ । प्रजापतिमिति प्रजा—पतिम् । प्रश्नम् । ऐताम् । सः । प्रजापतिरिति प्रजा—पतिः । ब्राह्मणम् । अब्रवीत् । एतत् । वीति । ब्रूहि । इति । एति । श्रावन । इति । इदम् । देवाः । शृ-णुत । इति । वाव । तत् । अब्रवीत् । अग्निः । देवः । होता । इति । यः । एव । देवानाम् । तम् । अवृ-णीत । ततः । देवाः (८) । [illegible] । परेति । असुराः । [illegible] । प्रवर-मिति प्र—वरम् । [illegible] न—[illegible]ति । भव-ति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । यत् । ब्राह्मणः । च । अब्राह्मणः । च । प्रश्नम् । एयातामित्या—इयाताम् । ब्राह्मणाय । अधीति । ब्रूयात् । यत् । ब्राह्मणाय । अध्याहेत्यधि—आह ।

आत्मने । अधीति । आह । यत् । ब्राह्मणम् । पराहेति परा—आहं । आत्मानम् । परेति । आह । तस्मात् । ब्राह्मणः । न । परोच्य इति परा—उच्यः ( ९ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके पञ्चमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

( अथ द्वितीयकाण्डे पञ्चमप्रपाठक एकादशोऽनुवाकः । )

नैमित्तिक्यः सामिधेन्यः काम्याश्च दशमे श्रुताः ॥
अथैकादशे सामिधेनीषु होतुर्नियमविशेषोऽध्वर्योराघारविशेषश्चाभिधीयते । तत्राऽऽदौ तावद्यागकर्तॄणामुपवीतं विधातुं प्रस्तौति—

निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानाम् , इति ।

यत्रोभावपि बाहू न्यग्भूतौ सन्तौ ब्रह्मसूत्रेण वस्त्रेण वा वीयेते संवृतावाच्छादितौ क्रियेते तन्निवीतम् । तच्च मनुष्याणां कार्येषु प्रशस्तम् । तस्मादृषितर्पणं निवीतयुक्तैः पुरुषैरनुष्ठीयते । प्राचीनो दक्षिणो बाहुराधीयतेऽधस्तात्क्रियते यत्र तत्प्राचीनावीतम् । तच्च पितृणां कर्मणि प्रशस्तम् । अत एव शिष्टाः प्राचीनावीतयुक्ताः पिण्डदानं कुर्वन्तीति । उपवीतस्य लक्षणं स्वाध्यायब्राह्मणे समाम्नातम्—" दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतम् " इति । तच्च देवानां कर्मणि प्रशस्तम् । अत एव शिष्टाः स्वाध्यायादिकं तथैवाऽऽचरन्ति ॥

इदानीं विधत्ते—

उप व्ययते देवलक्ष्ममेव तत्कुरुते , इति ।

तच्चेनोपवीतेन देवलक्ष्ममेव देवचिह्नमेव कृतं भवति ॥
यागकर्तॄणामुपवीतं विधाय होतुः सामिधेन्याद्यनुवचनकाले स्थितिं विधत्ते—

---

१ ख. 'घारादिवि' ।

तिष्ठन्नन्वाह तिष्ठन्ह्याश्रुततरं वदति, इति।

आसीनो नानुब्रूयात्किं तु तिष्ठन्नेव ब्रूयात्। तस्मात्तिष्ठन्मनुष्य आ समन्तादतिशयेन श्रुतं यथा भवति तथा वदितुं प्रभवति। तस्मात्तिष्ठन्ननुब्रूयात् ॥

तदेवानूद्य प्रशंसति—

तिष्ठन्नन्वाह सुवर्गस्य लोकस्याभिजित्यै, इति।

आसनादुत्थितस्य प्रत्यासन्नः स्वर्गः। तस्मात्तस्याभिजित्यै संपद्यते ॥

याज्याकाल उपवेशनं विधत्ते—

आसीनो यजत्यस्मिन्नेव लोके प्रति तिष्ठति, इति।

यजति याज्यां पठेदित्यर्थः। आसीनस्य चलनाभावादत्र प्रतिष्ठा ॥

अत्युच्चध्वनिमतिनीचध्वनिं चापवदन्मध्यमध्वनिं विधत्ते—

यत्क्रौञ्चमन्वाहाऽऽसुरं तद्यन्मन्द्रं मानुषं तद्यदन्तरा तत्सदेवमन्तराऽनूच्यꣳ सदेवत्वाय, इति।

यथा क्रौञ्चाख्यः पक्षिविशेष उच्चध्वनिं करोति तत्सदृशे सत्यासुरं भवेत्। मनुष्यास्तूपविश्य मन्द्रस्वरेण संभाषन्ते। अतः सोऽपि वर्ज्यः। मध्यमध्वनेर्देवप्रियत्वात्तथैवानुवचनं कार्यम् ॥

अपरं कंचिद्विशेषं विधत्ते—

विद्वाꣳसो वै पुरा होतारोऽभूवन्तस्माद्विधृता अध्वानोऽभूवन्न पन्थानः समरुक्षन्नन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्योऽथान्वाहाध्वनां विधृत्यै पथामसꣳरोहाय, इति।

मूढः कश्चिद्धोता वेदेर्बहिरेव पादद्वयमवस्थाप्यानुब्रूते, तस्य पादद्वयस्थापनान्मार्गः संकीर्णो भवति। अपरस्तु मूढः पादद्वयं वेदिमध्य एव प्रक्षिप्यानुब्रूते। स तु मार्गं न जानाति, तदिदं दोषद्वयं विद्वांसः केचित्कुशलाः पुरा यज्ञेषु होतारोऽभूवन्। ते च दक्षिणं पादं बहिर्न प्रक्षिपन्ति। तेन तेषामध्वानो विस्तीर्णत्वेन धृता भवन्ति। वामपादमन्तर्न प्रक्षिपन्ति किं तु बहिरेव स्थापयन्ति। तेन बहिःस्थापनेन पन्थानस्तान्विदुषः पुरुषान्नैव समरुक्षन्संरोहं न कृतवन्तः। अन्यो मार्गोऽन्यत्र च गच्छन्तीत्येतादृशो मार्गभ्रंशो मार्गकृतः

संरोहः। सोऽप्येषां नाऽऽसीत्। तस्मात्पुरातनविद्वांस इवायमपि दक्षिणं पादं वेदेरन्तः प्रक्षिपेत्। वामपादं बहिः प्रक्षिपेत्। ततोऽनुब्रूयात्। एवं च सत्यध्वनां विस्तीर्णत्वेन धारणं भवति। पथिविषये संमोहश्च न भवति॥

परस्परविलक्षणं पादविन्यासं बहुधा प्रशंसति—

अथो भूतं चैव भविष्यच्चाव रुन्धेऽथो परि-
मितं चैवाप[illegible] रुन्धेऽथो ग्राम्यांश्-
चैव [illegible] रुन्धेऽथो देव-
लोकं [illegible], इति।

चतुर्ष्वप्येतेषु पर्यायेषु [illegible] द्वितीयेन बहिष्पादप्रशंसेति द्रष्टव्यम्॥

तदेवं सामिधेनीषु विशेषनियमा होत्राः समापिताः। अथाऽऽध्वर्यवस्तौवाघारं विधत्ते—

देवा वै सामिधेनीरनूच्य यज्ञं नान्वप-
श्यन्त्स प्रजापतिस्तूष्णीमाघारमाऽघारय-
त्ततो वै देवा यज्ञमन्वपश्यन्यत्तूष्णीमाघार-
माघारयति यज्ञस्यानुख्यात्यै, इति।

पूर्वं देवाः सामिधेनीरनूच्य तत्रत्येषु नियमविशेषेषु व्यापृतमनस्काः सन्त उपरितनयज्ञगतं कर्तव्यविशेषं कंचिदपि नैव स्मृतवन्तः। ततः प्रजापतिर्मन्त्रकमप्यनुच्चार्य तूष्णीमेव ऋजुमाघारमनुष्ठितवान्। तावता कालेन देवाः सामिधेनीषु विक्षिप्तं चित्तं समाधायैकाग्रेण मनसा यज्ञगतकर्तव्यविशेषमनुस्मृतवन्तः। अतोऽत्रापि तूष्णीमनुष्ठितः प्रथमाघारोऽनन्तरभाविनो यज्ञकर्तव्यस्यानुस्मरणाय भवति। यद्यपि पौरोडाशिककाण्डे वेदेनोपयत्य स्रुवेण प्राजापत्यमाघारमाघारयतीति अयमाघारो विहितः, तथाऽपि तूष्णीभावादयो गुणविशेषा न विहिता इति नास्ति पुनरुक्तिः॥

तमेवाऽऽघारं प्रशंसति—

अथो सामिधेनीरेवाभ्यनक्ति, इति।

न केवलमनन्तरभावियज्ञकर्तव्यप्रतिभानमाघारस्य प्रयोजनं, किं तु वह्नौ प्रक्षिप्तानां सामिधेनीकाष्ठानामभ्यञ्जनमप्येकं प्रयोजनम्॥

एतद्वेदनं प्रशंसति—

अलूक्षो भवति य एवं वेद, इति।

उक्ताभ्यञ्जनाभिज्ञः स्वयमरूक्षः पारुष्यरहितः स्नेहोपेतो भवति ॥

आघारमेव पुनः प्रशंसति—

अथो तर्पयत्येवैनाः, इति।

किंचानेनाऽऽघारेणैनाः सामिधेन्यभिमानिदेवतास्तर्पयति ॥

एतदीयतृप्तिवेदनं प्रशंसति—

तृप्यति प्रजया पशुभिर्य एवं वेद, इति ॥

यदुक्तं सूत्रकारेण—“ स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्याऽऽसीन उत्तरं परिधिसंधिमन्ववहृत्य प्रजापतिं मनसा ध्यायन्दक्षिणाप्राञ्चमृजुꣳ संततं ज्योतिष्मत्याघारमाघारयन्सर्वाणीध्मकाष्ठानि सꣳस्पर्शयति” इति, वेदेनोपयम्य स्रुवस्याधस्ताद्वेदं धारयित्वोत्तरं परिधिसंधिमन्ववहृत्य वायवीये संधौ स्रुवयुक्तहस्तमन्तः प्रसार्य ज्योतिष्मति वह्नौ घृतं क्षारयंस्तद्घृतं सर्वसामिधेनीकाष्ठस्पृष्टं कुर्यादित्यर्थः। तत्र मनसा प्रजापतेर्यद्ध्यानं तदेतद्विधत्ते—

यदेकयाऽऽघारयेदेकां प्रीणीयाद्यद्द्वाभ्यां द्वे प्रीणीयाद्यत्तिसृभिरति तद्रेचयेन्मनसाऽऽघारयति मनसा ह्यनाप्तमाप्यते, इति।

यद्येकामृचं पठित्वाऽऽघारयेत्तदानीमेकैव सामिधेनी तृप्ता भवेत्। द्वाभ्यामृग्भ्यां द्वे एव तृप्ते भवेताम्। त्रिप्रभृतिभिर्ऋग्भिराघारं यदि कुर्यात्तेनायमाघारः सर्वाणि कर्माण्यतिरिक्तवान्भवति। एकस्य हि कर्मण एकैव ऋक्प्राप्ता। तथा सति बहुभिरनुष्ठानमतिरेकः। तस्य सर्वस्य दोषस्य परिहाराय मनसैवाऽऽघारयेन्मनसोऽप्रतिहतगतित्वात्। यद्वागादिभिर्न प्राप्तं तत्सर्वं मनसा प्राप्तुं शक्यते ॥

दक्षिणाप्राञ्चमित्युदाहृते सूत्रे वायवीं दिशमारभ्याऽऽग्नेय्यां समापनमुक्तम्। स एव सूत्रकार आघारयोः पुनरपि द्वे पक्षान्तरे दर्शितवान्—“ ऋजू प्राञ्चौ होतव्यौ तिर्यञ्चौ वा ” इति, तत्र तिर्यक्पक्षं विधत्ते—

तिर्यञ्चमा घारयत्यच्छम्बट्कारम्, इति।

दक्षिणां दिशमारभ्योत्तरस्यां समापनं तिर्यक्त्वम्। प्रतीचीमारभ्य प्राच्यां समापने सत्येकस्या एव समिध उपरि घृतं पतेत्। तथा सति समि-

दन्तराणामस्पर्शाच्छम्बट्कारो वैयर्थ्यं भवेत्। तस्मादच्छम्बट्कारं यथा भवति तथा होतव्यम्। तिर्यक्त्वे सति सर्वसमित्संस्पर्शाद्वैयर्थ्यं न भवति ॥

मनसाऽऽघारयतीति यद्विहितं तदेव पुनः प्रशंसति—

वाक्च मनश्चाऽऽर्तीयेतामहं देवेभ्यं। हव्यं वहामीति वागब्रवीदहं देवेभ्य इति मनस्तौ प्रजापतिं प्रश्नमैताꣳ सोऽब्रवीत्प्रजापतिर्दूतीरेव त्वं मनसोऽसि यद्धि मनसा ध्यायति तद्वाचा वदतीति तत्खलु तुभ्यं न वाचा जुहवन्नित्य-ब्रवीत्तस्मान्मनसा प्रजापतये जुह्वति मन इव हि प्रजापतिः प्रजापतेराप्त्यै , इति।

आर्तिरतिशयस्तामिच्छेताम्। सैवाऽऽतिः स्पर्धा क्रियते—" अहं देवेभ्यो हव्यं वहामि " इति वाक्येन । ततो वाक्च मनश्चेत्येतौ हविर्वहननिर्णयाय प्रश्नं कर्तुं प्रजापतिं प्राप्नुताम्। स प्रजापतिर्वाचमब्रवीत्—हे वाक्त्वं मनसो दूतीरेवासि दासीभूतैवासि न तु स्वतन्त्रा । तत्कथमित्युच्यते—यस्माल्लोके पुरुषो यत्पूर्वं मनसा ध्यायति तत्पश्चाद्वाचा वदति तस्माद्वाचो दूतीत्वमेवेति। अनन्तरं क्रुद्धा वागब्रवीत्—हे प्रजापते यद्यहं दूती तर्हि तुभ्यं कोऽपि वाचा मा जुहोत्विति। तस्मादाघारं प्रजापतये मनसा जुह्वति । यथा मनः संकल्पेन कार्यं साधयति तथा प्रजापतिरपि । अतः सादृश्यान्मनसा होमः प्रजापते-राप्त्यै भवति ॥

यदुक्तं सूत्रकारेण—" इध्मसंनहनैः सह स्फ्यैऽक्तैते स्फ्येनाऽऽग्नीध्रोऽनुप-रिक्रामन्परिधीन्यथापरिधि तमन्वग्रं त्रिस्त्रिः संमृज्य " इति, तदेतत्संमार्जनं स्फ्येन सहितैरिध्मसंनहनदर्भैः कर्तव्यमिति विधत्ते—

परिधीन्त्सं मार्ष्टि पुनात्येवैनान्, इति ॥

क्रमेणैकैकस्य परिधेः संमार्जनावृत्तिं विधत्ते—

त्रिर्मध्यमं त्रयो वै प्राणाः प्राणानेवाभि जयति त्रिर्दक्षिणार्ध्यं त्रय इमे लोका इमानेव लोकानभि जयति त्रिरुत्तरार्ध्यं त्रयो वै देवयानाः पन्थानस्तानेवाभि जयति , इति।

( सामिधेनीषु होतृनियमविशेषाध्वर्य्वाघारविशेषयोरभिधानम् )

प्राणापानव्याना इति त्रित्वं, लोकत्रित्वं प्रसिद्धं, स्वर्गलोकयमलोकब्रह्मलोकविषयास्त्रयः पन्थानः । तत्र यमलोकविषयस्य परिहारो जय इतरयोः प्राप्तिर्जयः । त्रित्वसाम्यात्तज्जय इति स्तूयते ॥

यदुक्तं सूत्रकारेण—" वेदेनाग्नि त्रिरुपवाज्य " इति, तदेतद्विधत्ते—

त्रिरुप वाजयति त्रयो वै देवलोका
देवलोकानेवाभि जयति , इति ।

देवलोकानां त्रित्वं तदभिजयश्च मार्गत्रित्वतज्जयवद्व्याख्येयम् ॥

त्रिषु परिधिषु वह्नौ च येयं प्रत्येकं त्रिः क्रियावृत्तिस्तामेकीकृत्य प्रशंसति—

द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्यै , इति ।

न केवलं संवत्सरदेवतायाः प्रीतिः किं तु तत्संवत्सरं यजमानार्थं कर्मानुष्ठानकालत्वेन संपादयति । तच्च स्वर्गलोकप्राप्त्यै भवति ॥

पूर्वत्र विहितं तिर्यञ्चमाघारमनूद्य प्रशंसति—

आघारमा घारयति तिर इव वै सुवर्गो लोकः
सुवर्गमेवास्मै लोकं प्र रोचयति , इति ॥

प्राङ्मुखेन यजमानेन दृश्यमानः स्वर्गो लोको दक्षिणोत्तरायामेन प्रतीयमानत्वात्तिर इव भवति । अतस्तिर्यगाघारेण यजमानाय स्वर्गमुत्पादितवान्भवति । अथवा स्रुच्याघारस्य द्वितीयस्यायं विधिर्द्रष्टव्यः ॥

आघारे गुणान्तरद्वयं विधत्ते—

ऋजुमा घारयत्यृजुरिव हि प्राणः संततमा घारयति प्राणानामन्नाद्यस्य संतत्या अथो रक्षसामपहत्यै , इति ।

दक्षिणां दिशमारभ्योत्तरदिगवसानपर्यन्तमाघारधाराया वक्रत्वं यथा न भवति यथा च विच्छेदो न भवति तथा कुर्यात् । प्राणवायुश्च हृदयमारभ्य मुखे निःसरन्वामदक्षिणपार्श्वयोरप्रवेशेन ऋजु[illegible] भवति संततश्च भवति । अतः प्राणस्यान्नस्य च संतत्यै संपद्यते । किं च सांतत्येन रक्षसामवकाशाभावादपहतिर्भवति ॥

---

१ क. घ. ङ. °नार्थक° । २ क. घ. ङ. च. °प्तिमु° ।

( सामिधेनीषु होतृनियमविशेषाऽध्वर्याघारविशेषयोरभिधानम् )

ऋजुत्वस्य नित्यप्रयोगाङ्गत्वात्काम्यत्वेन वक्रत्वं विधत्ते—

यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्याऽऽ घारयेत्प्राणमेवास्मा-जिह्मं नयति ताजक्प्र मीयते, इति।

यं यजमानमुद्दिश्य मरणं कामयेत तस्य जिह्मं वक्रं यथा भवति तथाऽऽ-घारयेत् । तेन वक्रत्वेनास्माद्यजमानात्प्राणं वामादिपार्श्वनाडीषु प्रविश्य वक्रत्वं प्रापयति । तेन श्वासोपरोधेन तदानीमेवासौ म्रियते ॥

आघारशेषेण ध्रुवायामञ्जनं विधत्ते—

शिरो वा एतद्यज्ञस्य यदाघार आत्मा ध्रुवाऽऽघारमाघार्य ध्रुवाꣳ समनक्त्या-त्मन्नेव यज्ञस्य शिरः प्रति दधाति, इति।

स्वात्मस्थानीयायां ध्रुवायां यज्ञशिरःस्थानीयस्याऽऽघारस्य प्रक्षेपे सति स्वस्मिन्नेव यज्ञशिरः स्थापितवान्भवति । ननु परिधिसंमार्जनादयः पौरोडा-शिककाण्डेऽपि विहिताः । बाढम् । तत्र ह्यनुक्रमेण मन्त्राणां व्याख्यायमान-त्वाद्ध्रुवनेमित्यादिमन्त्रव्याख्यानावसरे युक्ता एतद्विधयः । इह तु तदनुवादेन प्रत्यभिज्ञाप्य तेष्वृजुत्वादयो गुणा विधीयन्ते । ततो नास्ति पुनरुक्तदोषः । अत एवोक्तानुवादकत्वादनुब्राह्मणमेतदिति संप्रदायविदः ॥

यदुक्तं सूत्रकारेण—" ऊर्ध्वास्तिष्ठन्होतारं वृणीतेऽग्निर्देवो होता देवान्यक्ष-द्विद्वाꣳश्चिकित्वन्मनुष्वद्भरतवदमुवदमुवदिति यथार्षेयो यजमानः " इति । " इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होता " इति च । अस्यायमर्थः— यजमानस्य यादृशान्यार्षेयाणि तादृशानि होतारं प्रत्यमुवदमुवदिति तत्तन्नाम-पुरःसरं प्रयोक्तव्यानि । तदिदमध्वर्युकर्तृकं होतृविषयं वरणम् । सामिधेनी-प्रस्तावे त्वार्षेयं वृणीत इति होतृकर्तृकमग्निविषयं वरणमुक्तम् । तयोरयं विशेषः । अर्वाञ्चमारभ्येत ऊर्ध्वानुत्तरोत्तरानध्वर्युर्वृणीते । होता तूत्तममार-भ्याधस्तनान्वृणीते । तद्यथा—भार्गवच्यावनाप्नवानौर्वजामदग्न्येत्येवं होतृकर्तृकं पूर्वमुदाहृतम् । अध्वर्युकर्तृके तु मनुष्वद्भरतवदित्यन्तं मन्त्रं पठित्वा जमदग्नि-

---

१ ख. °नमर्सात्या° । २ ख गुणविशेषा वि° । ३ ख °र्ध्वगमारीन होता° । ४ ख. °कित्वान्म° ।

वदूर्ध्ववदप्रवानवद्ध्यवनवद्भृगुवदिति प्रयोक्तव्यमिति, तदिदमध्वर्युकर्तृकं होतृविषयं वरणं विधत्ते—

अग्निर्देवानां दूत आसीदैव्योऽसुराणां तौ प्रजापतिं प्रश्नमैताꣳ स प्रजापतिर्ब्राह्मणमब्रवीदेतद्वि ब्रूहीत्या श्रावयेतीदं देवाः शृणुतेति वाव तदब्रवीदग्निर्देवो होतेति य एव देवानां तमवृणीत ततो देवा अभवन्पराऽसुरा यस्यैवं विदुषः प्रवरं प्रवृणते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति, इति।

द्विविधो ह्यग्निर्मानुषो दैव्यश्चेति। भूलोके वर्तमानो होमसाधनभूतो मानुषोऽग्निः। स च देवानां हविर्वहनेन तदीयो दूत आसीत्। दिवि वर्तमानो दैव्यः। स चान्यत्रापि श्रूयते—“ दिवि नाको नामाग्निः। तस्य विप्रुषो भागधेयम् ” इति। स चासुराणां हितमाचरंस्तदीयो दूत आसीत्। तावुभावावयोः कस्य दौत्यमुचितमिति प्रश्नमभिलक्ष्य प्रजापतिं प्राप्तुताम्। तत्र योऽयं मानुषोऽग्निः स ब्राह्मणः। ब्रह्मणि वेदे विहितं कर्म साधयितुं प्रवृत्तत्वात्। दैव्यस्त्वसुराणां कर्म साधयितुं प्रवृत्तत्वादासुर इत्युच्यते न ब्राह्मण इति। तयोर्मध्ये ब्राह्मणमग्निं प्रति प्रजापतिरब्रवीत्—हे मानुषाग्ने त्वमेव दूत्यमर्हसि। तस्मात्त्वमेव यागे वक्तव्यमेतत्सर्वं ब्रूहीति। किं तत्सर्वमिति तदुच्यते— होतारं प्रत्यध्वर्युराश्रावयेति प्रयुङ्क्ते। तस्य प्रयोगस्याभिप्रायः कथ्यते— हे देवा इदं यजमानसंबन्धि हविर्दानं शृणुतेत्येतमर्थमेव होतर्ब्रूहीत्यभिप्रेत्य तदाश्रवणवाक्यं हे होतस्त्वां प्रत्यध्वर्युरब्रवीत्। तस्मात्त्वमेव याज्यापाठमुखेन देवानां श्रवणं यथा भवति तथा हौत्रमेतत्सर्वं त्वमेव ब्रूहीति। आसुरं प्रत्यध्वर्युणाऽऽश्रावयेत्यनुक्तत्वादसौ याज्यादिकं मा ब्रवीदित्यभिप्रायः। यस्मात्प्रजापतिर्ब्राह्मणाग्निवरणं कृतवांस्तस्माद्देवा उत्कृष्टा अभवन्। पराभूता असुराः॥

प्रशंसति—

यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधि ब्रूयाद्यद्ब्राह्मणायाध्याहाऽऽत्मनेऽध्याह यद्ब्राह्मणं पराहाऽऽत्मानं पराऽऽह तस्माद्ब्राह्मणो न परोच्यः॥, इति॥

यदि लोके ब्राह्मणाब्राह्मणौ विवदमानावहमेवाधिक इति अधिान्पयं प्रश्नं कर्तुं कंचिदभिज्ञं प्रत्यागच्छेतां तदानीं सोऽभिज्ञो ब्राह्मणस्यैवाऽऽधिक्यं ब्रूयात्तेन वक्तुः स्वस्यैवाऽऽधिक्यं संपादितं भवति। ब्राह्मणस्य पराभववचने स्वस्यैव पराभव उक्तो भवति। तस्मात्कदाचिदपि ब्राह्मणः पराभवविषयो न कर्तव्यः। सोऽयं प्रासङ्गिकः पुरुषार्थो विधिर्द्रष्टव्यः॥

अत्र मीमांसा।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

" निवीतं तु मनुष्याणां विधिर्वा[2]पोऽर्थवादकः।
अपूर्वत्वात्प्रकरणात्तुः क्रतोर्वा विधीयते॥
प्राप्तं निवीतं मर्त्येषु प्रायेणैतस्य दर्शनात्।
उपवीतविधावेकवाक्यत्वादर्थवादता॥ "

दर्शपूर्णमासयोः श्रूयते—" निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते " इति। तत्र निवीतस्य पूर्वं मानान्तरेणाप्राप्तत्वाद्विधेयत्वमभ्युपेतव्यम्। तच्च निवीतं मनुष्याणामिति षष्ठ्या पुरुषार्थत्वेन विधीयत इत्येकः पूर्वपक्षः। अस्मिन्पक्षे मनुष्यसंबन्धो द्विविधः—सुवर्णधारणवत्सर्वपुरुषार्थ इत्येकः प्रकारः। उपवीतप्राचीनावीतयोः क्रतुप्रवेशरहितयोः स्वतन्त्रदैविकपैतृककर्मणोरपि दर्शनात्तत्साहचर्येण स्वतन्त्र आचार्यातिथ्यादिमनुष्यविषये कर्मणि निवीतमित्यपरः प्रकारः। प्रकरणबलाद्यागधर्म इति द्वितीयः पूर्वपक्षः। अस्मिन्पक्षे मनुष्यग्रहणं कर्तृसंबन्धानुवादः। षष्ठीश्रुतिप्रकरणयोरविरोधादुभयावलम्बनेन क्रतुसंबन्धिमनुष्यधर्म इति पक्षान्तरमुदेति। तच्च द्विविधं, लोहितोष्णीषादिवदृत्विग्धर्म इत्येकः प्रकारः। क्रतावेव यन्मनुष्यप्रधानं कर्मान्वाहार्यदानादि तद्धर्मत्वे सति उपवीतप्राचीनावीतसाहचर्यमप्यनुगृह्यत इत्यपरः प्रकारः। सर्वथा निवीतं नार्थवाद इत्येवं प्राप्ते ब्रूमः—अत्र प्रतीयमानं निवीतादिकं वासोविषयं न तु त्रिवृत्सूत्रविषयम्। अजिनं वासो वा दक्षिणत उपवीयेत्यनेन सदृशत्वात्। वस्त्रस्य च निवीतं सौकर्याय प्राप्तम्। अत्र प्राचीनावीतोपवीतयोरवश्यमेकस्मिन्पार्श्वे वस्त्रमधः पतेत्। अतः प्राप्तेऽर्थे मनुष्याणामिति षष्ठीश्रुतिर्न विधायिका। न च प्रकरणात्क्रत्वङ्गत्वेन विधिः, वाक्यभेदप्रसङ्गात्। उपवीतं तावद्विधीयते। अन्यथा देवलक्ष्ममेव तत्कुरुत इति प्रशंसावैयर्थ्यापत्तेः। तस्मिंश्चोपवीतविधावर्थवादत्वेन निवीतप्राचीनावीतयोरेकवाक्यत्वसंभवे पृथ-

१ क. घ. ङ. °ति द्विविधं प्र प्रति प्र°। २ क. घ. ङ. च. °पोऽनुवा°।